Digitized by Madhuban Trust, Delhi



अथ चतुर्द्दशी।

(उशनाऋषिः)

१ २ ३।१र २र ३ १ २
कस्य नूनं परीणसि धियोजिन्वसि सत्पते।
१ २ ३ १ २ ३ १ २
गोषाता यस्य ते गिरः॥ १४ ॥३४

१ २ ३ २ ३ ५ १ र
I कस्यानू१नाऽ२म्। परीणा२३४सी। धियोजिन्वा२।
३ २ ३ ५ १र२र र १ १ ३ ५र र
सिसत्पा२३४ताइ। गोषातायाऽ२३। स्याऽ२ता२३४औहो-
२ ३ ५
वा। उप्। गीऽ२३४राः॥ २०॥ ३३

'शं' सुखंभवन्तु। तथा, 'शम्' (४) उत्पन्नानां रोगाणां शमनम् 'योः' यापनम् अनुत्पन्नानां पृथक्करणं च कुर्वन्तु। अपिच, 'नः' अस्माकम् 'अभि' उपरि स्रवन्तु, अत्यर्थं सिञ्चन्तु॥

"शन्नोभवन्तु"-इति छन्दोगाः। "आपोभवन्तु"-इति बह्वृचाः तैत्तिरीयाश्च॥ ३॥ ३३

---

३४ नास्तीयमुत्तरार्च्चिके।१८

(४)—'शमनं शम्, यापनं युः अपनयनमित्यर्थः, द्वे अप्येते प्रथमैकवचने चतुर्थ्येकवचनस्य स्थाने द्रष्टव्ये; शमनाय, कस्य? सामर्थ्यात् रोगाणाम्; यापनाय, कस्य? सामर्थ्याद् भयानाम् अभिस्रवन्तु'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र र　　१　　२३२　　र　४　२र ३
II औहोइहुउवा३२इ। हुवए। कस्यनूना३म्पा३रीण-
५　२र र　　१　　२ ३ २　　र　　५
सि। औहोइहुऽउवा२३इ। हुवए। धियोजिन्वा३सी

हे 'सत्पते' सतां पते! अग्ने! 'नूनम्' इदानीं 'कस्य' कीदृशस्य जनस्य 'परीणसि ब्रह्मणि (१) 'धियः' कर्माणि (२) 'जिन्वसि' प्रीणयसि। 'यस्य' 'ते' तव सम्बन्धिन्यः 'गिरः' स्तुतयः 'गोषाता' गोसातौ (३) गवां लाभे भवन्तु खलु। तस्मात्त्वं कुत्र तिष्ठसि? अस्माकमिदानीं गवेच्छा प्र वर्तते॥

यद्वा। हे अग्ने! त्वमिदानीं कस्य कर्माणि प्रीणयसि? न कस्यापीत्यर्थः। अस्माकमेव कर्माणि प्रीणयेतिभाव (४)॥

---

I, II अनयोः गौराङ्गिरसोगोतमोवा ऋषिः, मनाज्यं नाम।

(१)—परीणसीति बहुनामसु निघण्टु-तृतीय-प्रथमेऽष्टमम्।

(२)—धीरिति कर्मनामसु एकविंशतितमम् नि २, १।

(३)—'ऊतियूतीत्यादिना (३, ३, ९७) सिद्धम्। 'सनोतेरनः (८, ३, १०८)'-इति षत्वम्।

(४)—"कमिति सुखनाम (नि ३, ६, ७) तस्य सुखस्येत्यर्थः। 'नूनं' निश्चयेन। 'परीणसि' सप्तम्येकवचनमिदं द्वितीयाबहुवचनस्य स्थाने द्रष्टव्यम्, परीणसः बहूनित्यर्थः। 'धियः' प्रज्ञाः। 'जिन्वसि' प्रीणयसि पूरयसि, प्रज्ञा-सुखाभ्यां पूरयन् सुखिनः करोतीत्यर्थः। 'सत्पते' सतां पालयितः!। कस्य पुनः प्रज्ञा-सुखेन पूरयसि? उच्यते 'गोषाता यस्य ते गिरः' गो-शब्देनात्र सोमउच्यते, सातावित्यपि सनोतेः सम्भजनार्थस्य





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २५ २र र १ २१२ र र र
इसत्पताइ । औहोइहूइवा३२इ । हुयए । गोषाताय ।

३ २ ४
स्यताइइगा५इराई५ई: ॥ २१ ॥३४

इति तृतीया दशतिः ।

"परीणसि"-इति "सत्पते"-इति च छन्दोगाः; "परिणसः" इति "दम्पते" इति च बह्वृचाः ॥१४॥३४

इति सायणाचार्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य तृतीयः खण्डः ॥

---

रूपन्, सोमान् याः सम्भजन्ते ताः गोषाताः, सोमानां सम्भक्त्र्यः, सोमैः सह याः क्रियन्ते इत्यर्थः । 'यस्य' यजमानस्य 'ते' तव सम्बन्धिन्यो 'गिरः' स्तुतयः सोमेन सह, ताभिः पश्वां सौतीत्यर्थः"-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यज्ञायज्ञेति-खण्डेषु त्रिकेष्वष्टौ च विंशतिः।
ऋचोऽपहत्य (१) आग्नेय्यस्त्यक्त्वा तिस्रइमाऋचः॥ १
अधक्ष्मी अधवेत्यैन्द्री प्रैत्वित्यृग् ब्रह्मणस्पतेः।
ऊर्ध्वऊष्विति यूपस्य तं स्तुतिरग्नेरपीतराः (२)॥ २
समाख्या प्राणशून्यायादिति पूर्वमुदीरितम् (३)।
तदा तदाऽभिधास्यन्ते ऋषयः पूर्ववत् क्रमात्॥ ३

अथ चतुर्थ-खण्डे—

सेयं प्रथमा।

शंयुर्ऋषिः।

२ १ २　　३ १२ ३ १ २　　३ १२
यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे।
१ २ २२३ १ २ ३ १२　　३२ ३ १र　२र
प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शꣳसिषम्॥ ३॥ ३५

---

३५ उत्तरार्च्चिकस्य १, १, २०, १।

(१)—'बृहती परिबर्हणात्'- इति नै० ७, ३, ८। उक्तं पुरस्तात् 'गायत्रीमेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टुभीभवति' तथाच पूर्वोक्ता अनुष्टुवेव परिवर्द्धिता बृहती भवतीति तदर्थः।

(२)—यज्ञायज्ञा वोऽग्नये-इत्याद्येकं खण्डम्, तत्र सन्ति ऋचोदश; एनावोऽग्निमित्यादि द्वितीयम्, तत्रापि दश; देवोवोद्रविणोदाइति तृतीयम्, तत्राष्टौ; एवं मिलित्वा अष्टाविंशत्यृचो इहत्यः, बृहतीच्छन्दस्काः। तत्र एनेति खण्ड-गता 'अधक्ष्मो-अधवेत्यष्टमी-ऋक्, देवोवोद्रविणोदेति-खण्ड-गता प्रैत्विति द्वितीया, ऊर्द्धेति तृतीया,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र २र १ २ २ २र
I यज्ञायज्ञा । वो अग्नयाइइ । गिरा२गिरा३४ । हा
२ १ २ ३ ५ १२ १ १ २र १
हो३इ । चादक्षा२३४साइ । प्रप्रा२वयमम्तञ्जा । ता
२ १ २१ २र
वे१दासा२म् । प्रियम्मित्राम् । नशं्सिषाम् । एहि-
२ २र र
या । औहौहो२३४५इ । डा ॥ २२ ॥

४ २र ४५र २ २२२ ५ २र २१
II यज्ञायज्ञ । होइ । वो३ग्नयए३४हिया । गिरागिरा ।
१ ३ २ १ २ ३र २ १ २ १ २ १ ३
चा२दक्षसाइ । प्रप्रावयाम् । अम्तञ्जा३ । तवे२दा
५ २ १ २ १ ३र २
२३४साम् । प्रियम्मित्राम् । नशं्सिषाम् । एहिया
३र
औहो२३४५इ । डा ॥ २३ ॥

हे स्तोतारः 'वः' यूयं 'यज्ञा यज्ञा'(१) यज्ञे यज्ञे सर्वेषु

---

I, II अनयोः भरद्वाजऋषिः, उपह्वम् ।

एतास्तिस्रोवर्जयित्वा अवशिष्टाः आग्नेय्यः; तासु च तिसृषु प्रथमा ऐन्द्री, द्वितीया ब्रह्मणस्पति-देवताका, अन्त्या यूपस्य स्तुत्यात्मिकेति-स्फुटार्थः ।

(३)—पूर्वम् उदुत्यमित्येकस्त्रिंशत्तमर्ग व्याख्यानावसरे ।

(१)—'सुपां सुलुक् पूर्वसवर्णाच्छे याडाड्याजालः (७, १, ३९)'-इति सप्तम्येकस्यालम् । 'नित्यवीप्सयोः (८, १, ४)'-इति वीप्सायां द्विर्वचनम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



III याज्ञायाज्ञा२। वो अग्नाया२इ। गाइरागाइरा२। चाद्क्षासा२इ। प्रप्रानाया२म्। अमृत ञ्जा३। नवे२दा२३४साम्। प्रायम्नाइत्रा२म्। नाश्र९सा२३इ षा३४३म्। ओ२३४पुइ। डा ॥ २४ ॥

यागेषु 'दक्षसे' प्रवृद्धाय 'अग्नये' (२) 'गिरा गिरा' स्तुतिरूपया वाचा स्तोत्रं कुरुतेतिशेषः ['च'-शब्दोभिन्नक्रमोवइत्यस्मात्परोद्र-ष्टव्यः(३)]यूयं च स्तोत्रं कुरुत, वयमपि तमग्निं 'प्र प्र शंसिषम्' ['प्रसमुपोदः पादपूरणे (८,१,६०)'-इति प्र-शब्दस्य द्विरुक्तिः पाद-पूरणार्था। व्यत्ययेनैकवचनं (३,४,९८)। छान्दसोलुट् (४) प्रशंसामः] कीदृशम्? 'अमृतं' मरणरहितम्। 'जातवेदसं' जातानां वेदितारं जात-प्रज्ञानं जात-धनं वा। 'मित्रं न' सखि-

III भरद्वाजऋषिः, औष्टीगवम्।

(२)—'क्रियार्थोपपदस्य च कर्मणि स्थानिनः (२, ३, १४)'-इति कर्मणि चतुर्थी तथाचाग्निमनुकूलयितुमित्यर्थः।

(३)—'च-शब्दः समुच्चयादेरर्थस्यासम्भवात् पादपूरणः'-इति वि०।

(४)—'छन्दसि लुङ्लङ्लिटः (३, ४, ६)' धालर्थानां सम्बन्धे सर्वकालेष्वेते।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ २ ४ २ ४ ५ १ २ १
IV यज्ञाऽ५य। ज्ञाइवोइम्रायाइ। गाइराँगिरा। चा

१ २ २ १२ ऽ १ २ १ १
इदाचाइसाइ। प्रप्रा२वयमम्तम्। जाता२३वा। ऊ-

२ २ १ २१
म्माइ। दाइसाम्। प्रायम्मित्रन्नशा२ॅसिषा उ। वा

१११
३४५॥ २५॥ ३

भूतमिव प्रियमनुकूलम्। [यद्वा व्यत्ययेन त्वमित्यस्य वसादेशः (३,४,९८)। अग्नयइति च कर्म्मणि चतुर्थी, क्रिया-ग्रहणमपि-कर्त्तव्यम्, इति कर्म्मणः सम्प्रदानत्वात्। च शब्दश्च णिति (५) निपातस्तेदर्थे वर्त्तते। दक्षसइति दक्षेर्वृद्धि-कर्म्मणः अन्तर्भावित-ण्यर्थाल्लटि रूपम्। 'चण्-योगान्निपातैर्यद्यदिहन्त'-इति निघात-प्रतिषेधः (६)। तत्रायमर्थः— हे स्तोतस्त्वं यज्ञे इममग्निं गिरा स्तुत्या दक्षसे च वर्द्धयसि चेत् वयमपि अमृतत्वादि-गुणकं तं प्रशंसामः(७) ॥१॥ ३५॥

---

IV भरद्वाजऋषिः, यज्ञायज्ञीयम्।

(५)—णकारानुबन्धोपेतोयः सएवात्रगृह्यते इतिभावः।

(६)—'तिङतिङः (८, १, २८)'-इति निघाते प्राप्ते 'निपातैर्यद्यदिहन्तकुविन्नेच्चण् कच्चिद्यत्रयुक्तम् (८, १, ३०)'-इति निषेध इत्यर्थः।

(७)—'अमृतं', 'जातवेदसं', 'दक्षसे' बलवन्तं 'वः' त्वाम् 'अग्नये' अग्निम् यज्ञे यज्ञे प्रियमित्रमिव 'गिरा प्रशंसिषम्' स्तुत्यामित्याशास्महे'-इति वि०-सम्मतोऽर्थः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

अथ द्वितीया ।

भर्गऋषिः ।

२ १ २ ३१२ ३१ २ ३१२
पाहि नो अग्नएकया पाह्यू३त द्वितीयया ।
३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
पाहि गीर्भिस्तिसृभिरूर्जाम्पतेपाहि चतसृभिर्वसो॥२॥३६

५र २ ४ ५ ४र ५ १ २ १ २
I पाहिनो३अग्नएकया । पाहियुत । द्वितायाश्या२ ।
१ २र ३ १ २ १ २
पाहिगीर्भिस्तिसृभिः । ऊर्जाम्पा१ता२इ । पाहिचतौ
३ २ २ १ २ १
३ । होइवा । सृभिर्वा२३सा३४३उ । ओ२३४५इ ।
डा ॥ २६ ॥

हे 'अग्ने !' 'नः' अस्मान् 'एकया' (१) ऋचा गिरा 'पाहि' रक्ष । 'उत' अपिच । 'द्वितीयया' (२) ऋचा 'पाहि' पालय । 'तिसृभिः'

---

३६ उत्तरार्चिकस्य ७, २, ४, १ ।

I भरद्वाजऋषिः, कार्त्तयशम् ।

(१)—ऋगलक्षणया, तृतीयानिर्देशात् स्तुतः सन्निति वाक्यशेषः'-इति वि० ।

(२)--'यजुर्लक्षणया'-इति वि० ।

Digitized by Madhuban Trust, Delhi



५र र र ५ २र १ २ १
II पाहिनोअग्नएकयाईए। पा। होइ। उ। ता।
२ १ २ २ १र ३ ५ १ २ र
द्वितायाइया। पाहो२इगा२३४इभीः। ताइह्वभीः। ऊ
१ २ ३र र ५ १ ५ २ १ २
र्जाम्याता। औहौहो२३४वा। पा२३४हिहाइ। चताह्वभां।
३र र ५ १ ५र ५ ४
औहौहो२३४वा। वा२३४सा उ। एहियाईहा। होपुइ।
डा॥ २७॥

४र ३ ४र ५ र ३ २ १ ५ र
III पाहिनो अग्नए। कयाइ। पा२३४। हियुतद्विती।
४ ५ ४र ३ ४र ३ ४ ३ ४ ५र र २ २ २र
याया। पाहिगीर्भिस्तिह्वभिरूर्जाम्। पाइताइ। पाहो
१ २ ५र ४ ५ १ २ र १ २ १ १ १ १
इचाइताइ४। हा औवा। ह्वभिर्वसो। उपा२३४५॥२२॥२६

'गीर्भिः' (३) स्तुतिभिः 'ऊर्जाम्' अन्नानां (४) वलानां (५) वा

---

II भरद्वाजऋषिः, नार्मेधम्।

III भरद्वाजऋषिः, कार्त्तवेशम्।

(३)—'ऋग्-यजुः-साम-लक्षणाभिः'-इति वि०।

(४)—निघण्टौ २, ७, सप्तदशानन्तरं पठितम् ऊर्क्-इति।

(५)—निघण्टौ द्वितीय-नवमे चैकविंशतितममूर्गिति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

शंयुरृषिः * ।

२१.२　२ १ २　२१ २　२ १२　२१२
बृहद्भिरग्ने अर्चिभिः शुक्रेण देव शोचिषा । भरद्वाजे
२ १ २　२१ २
समिधानो यविष्ठ रेवत्पावक दीदिहि ॥३॥ ३७

हे 'पते !' स्वामिन् ! तथा 'पाहि' । हे 'वसो !' (६) वासक ! अग्ने ! 'चतसृभिः' (७) गीर्भिः 'पाहि' ॥ २ ॥ ३६

हे 'देव !' दानादि-गुण-युक्त ! 'यविष्ठ' युवतम ! 'पावक' शोधक ! अग्ने ! 'शुक्रेण' निर्मलेन 'शोचिषा' तेजसा 'भरद्वाजे'

---

३७ नास्तीयमुत्तरार्चिके । १९

(६)—'लुप्तमत्वर्थञ्चैतद् द्रष्टव्यम्—'वसो' हे धनवन् !'-इति वि० ।

(७)—'ऋग्-यजुः-साम-निगद-लक्षणाभिः'-इतिवि०। 'उच्चैर्निगदेन'-'उपांशु यजुषा', इति धर्म-पार्थक्य-श्रवणात् निगदस्तुर्थः। वेदानां त्रयित्वे साधनीये तु ऋक्-सामान्य तमत्वमेव यजुष्ट्वमिति तस्यापि यजुष्ट्वम्। सएवविचारो जैमिनीय-द्वितीयाध्याय-प्रथम-पाद-गत-पञ्चविंशदादि-सप्त-सूत्रामधिकरणमालादौ च द्वितीय-प्रथम-त्रयोदशाधि' करणे सुपरिस्फुटः। 'प्रोक्षणीरासादय','इध्मबर्हिरुपसादय','अग्नीदग्नीन् विहर'-इत्येवमादयः, पर-सम्बोधनार्थामन्त्राः निगदाः ॥

*—'तृणपाणेरार्षम्-इति वि० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ ४ र ५ १ १ २र र १ २र
I बृहाद्भी२३रग्ने अर्चिभिर्हा उ। शुक्राइणदेवशोचिषा
१ २ १ २ २ १ २र १ ७
भरद्वा१जे२३। होवाइहाइ। समिधानः। याविष्ठि-
१ २ २ र १ २ १ २ २
ष्ठिया२३। होवाइहाइ। रेवात्पो१वा२३। होवाइहाइ।
१ र २ १ २ १
का दीदिहि। इडा२३भा३४३। ओ२३४५इ। डा ॥२९॥
५ र ५ २ १ २र र १ २र १
II बृहद्भिरग्नेअर्चिभीईरे। शुक्राइणदेवशोचिषा। भरा-
२ २ऽ २ १ २र १ ७
द्वा१जे२३। ओ३वा। समिधानः। याविष्ठिया२३।
२ऽ २ र १ २ २ऽ २ १ र २
ओ३वा। रेवात्पा१वा२३। ओ३वा। कादीदिहि।
१ २ १
इडा२३भा३४३। ओ२३४५इ। डा ॥ ३० ॥ ३७

अस्मद्गातरि (१) 'समिधानः' (२) समिध्यमानस्त्वं 'बृहद्भिः' महद्भिः स्तेजोभिः 'नः' अस्मदर्थं 'रेवत्' (३) धन-युक्तं यथा भवति तथा 'दीदिहि' (४) दीप्यस्व ॥

---

I, II अनयोः भरद्वाजऋषिः, पृश्निनाम।

(१)—'मयि यजति'-इति वि०।

(२)—'तास्मिन्स्योऽयं चानस्'-इति वि०।

(३)—'रयेर्मतौ बहुलम् (६, १, ३४)-इति कात्यायन-वचनात् सिद्धम्।

(४)—दीधिङ्च्छान्दस-धातोः रूपमिदम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

अथ चतुर्थी।

वसिष्ठऋषिः।

१ २      ३ १ २      ३ १ २    ३ २ ३ २

त्वे अग्ने स्वाहुतः प्रियासः सन्तु सूरयः। यन्तारोये

३ १ २ ३ १ २    ३ १र २र३ १ २

मघवानो जनानामूर्वं दयन्त गोनाम्॥ ४॥ ३८

"रेवत्पावक"-इति छन्दोगाः। "रेवन्नः शुक्र दीदिहि द्युमत् पावक"-इति बह्वृचाः)॥ ३॥ ३७

हे 'अग्ने!' 'स्वाहुत' यजमानैः सुष्ठुभिः हुत! 'त्वे' (१) तव 'सूरयः' प्रेरकाः स्तोतारः (२) 'प्रियासः' (३) प्रियाः 'सन्तु' भवन्तु। किञ्च। 'ये' 'मघवानः' धनवन्तः 'यन्तारः' (४) प्रदातारः जनानाम् अस्मदीयानाम् 'ऊर्वम्' समूहम्। 'गोनां' (५) गवां

---

३८ नास्तीयमुत्तरार्चिके। २०

(१)—युष्मदः परस्य षष्ठ्येकवचनस्य "सुपां सु-लुक्-पूर्वसवर्णाच्छे-याडाड्यायाजालः (७, १, ३९)"-इति शे-भावे "शेच्छन्दसि बहुलम्(६, १, ७०)"-इति ला-देशे पररूपे रूपम्।

(२)—स्तोतृ-नामस्तु निघण्टु-तृतीय-षोडशे षष्ठम्।

(३)—'आज्जसेरसुक्(७, १, ५०)'-इत्यसुकि रूपम्।

(४)—'स्तुतिभिर्हविभिस्तोद्बोद्धारः'-इति वि०।

(५)—"गोः पादान्ते (७, १, ५७)"-इति नुकि रूपम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र ४र र ५ २ १र २ २१२ १
I त्वेआ२३ग्नेस्वाऊतहाउ। प्रियासः सन्तुसूरयः। यन्ता
२ २४र ५र ४ ५र २ १ ०
रो१या२३४इ। मघवानोजना। नाम्। ऊर्वं दया२३
२ १र ५र १ २ १
हा। नगोना२म्। इडा२३भा३४३। ओ२३४५इ।
डा॥ २१॥ ३८

च ऊर्वं (६) समूहं 'दयन्त' प्रयच्छन्ति, ते च तव प्रियाः सन्त्विति पूर्वेणान्वयः(७)॥

"ऊर्वम्"-इति छन्दोगाः। "ऊर्वान्"-इति-वह्वृचाः॥ ४॥ ३८

---

अथ पञ्चमी।

भारद्वाजऋषिः।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ १ २
अग्ने जरितर्विश्पतिस्तपानोदेव रक्षसः। अप्रोषि-
३ १ २ ३ २ ३ १ २ ३ २
वान् गृहपते महाँ असि दिवस्पायुर्दुरोणयुः॥ ५॥३९

---

I उरोराङ्गिरसस्य साम।

३९ नास्तीयमुत्तरार्च्चिके। २१

(६)—ऊर्वमिति नित्य-बहुवचनान्तस्य बहु-वाचकस्योरुशब्दस्य छान्दसैकवचनेऽमि 'वाच्छन्दसि (६, १, १०६)'-इति सूत्रस्यात् पूर्वरूपाभावे संहित-दीर्घे च रूपम्।

(७)—अस्मदीयानां गवां समूहम्—एवमन्वयेनार्थः वि० सम्मतः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

४ ५र ४ ५  ४ ५  र ४  ५ र
I अग्नेजरितर्विश्पतिः । औहोवा । एहिया । हाउ ।
२ र १र र१  १ २  १ २  १ २
तपानोदेश्वरक्षसः । अप्रोषा१इवा२न् । गार्हपता३इ ।
१ २  ३  ५  १  २ ३  ५  २
माहाऽ आ२३४सी । दिवाः । पायौवाओ२३४वा । हा
२  ४  ४
३हाइ । दुरोपूणयूः । होपूइ । डा ॥ ३२ ॥

७ ४र ३ ४५  ३ २  १  र र५र  ४ ५
II अग्नेजरितर्विश्पतीः३ । ता२३४पानोदेवर । क्षसाः ।
१ र र र  २ २  १ २ १  २
तापानोदेवरक्षसो । अप्रोषी३वान् । गृहपताइ । माहा
३  ५  ३  ५  ३ २  ५  २र १ १ १ १ १
ऽ आ२३४सी । ओ४हा । हहाइ । दिवस्पायू२३४५ः ।
३  ५  ३ २  ३ १ २ १ १ १ १ १  ३  ५  ३ २
ओ४हा । हहाइ । दुरोणयू२३४५ः । ओ४हा । हहा
१
३४३इ । ओ२३४५इ । डा ॥ ३३ ॥ ३९

हे 'अग्ने ! देव !' 'जरितः' स्तोतः ! (१)स्तुत्येत्यर्थः । 'विश्पतिः' प्रजानां (२) पालकः 'रक्षसः' राक्षसानां 'तपानः' सन्तापकः

---

I, II अनयोः गौतमऋषिः, पौरुमद्गम् नाम ।

(१)—निघण्टु-तृतीय-चतुर्दशेऽर्च्चतिकर्मसु 'जरति'-इति सप्तमम् ।

(२)—नि० २, ३, मनुष्य-नामसु विश इतिप्रथम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

प्रस्कण्वऋषिः।

२ ३ १ २ ३ १ २ ३ १ र २ र २ ३ १ २

अग्ने विवस्वदुषसश्चित्रꣳराधो अमर्त्य। आदाशुषे

३ २ ३ २ ३ १ २ ३ १ २

जातवेदोवहा त्वमद्या देवाꣳउषर्बुधः॥ ६॥ ४०

'असि'। हे गृहपते' यजमान-गृहस्य पालकाग्ने! त्वम् 'अप्रोषिवान्' यजमानस्य गृहमत्यजन् 'महान्' अतिशयेन पूज्योऽसि। 'दिवः' द्युलोकस्य 'पायुः' पाता। 'दुरोणयुः' (३) यजमान-गृहस्य मिश्रयिता सर्वदा वर्तमानः इत्यर्थः। तादृशस्त्वं महानसीत्यन्वयः (४)॥

"तपान" "तपान"-इतिपाठौ। "गृहपते"
"गृहपतिः"-इति च॥ ५॥ ३९

हे 'अग्ने'! त्वम् 'उषसः' उषोदेवतायाः (१) सकाशात्

---

४० उत्तरार्चिकस्य ८, १, ६, १।

(३)—'दुरोणः-इति गृह-नाम (नि० ३, ४, ८), तद् यद्गच्छति सद्दुरोणयुः (पा० ३, २, १७०'-इति वि०।

(४)—'यस्य विश्पतिः राक्षसान् तपानः महानसि, यश्च अप्रोषिवान्; यश्च दिवस्पायुः, यश्च दुरोणयुः, तं त्वां हे अग्ने! जरितः! देव! गृहपते! स्तौमीति शेषः'-वि० कृतोऽन्वयः।

(१)—उषा-नामके च द्वे देवते। या मेघादुदकादि विवासयति सा वायवी मध्यमस्थानीया देवता; या तु वष्टेः कान्तिकर्मणोरूपमिति निरुक्तप्रसिद्धा,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

५ र   र    २  १ २  २    १  ३   २
I अग्नेविवाहाउ। स्वाइदूषाइसाः। चाइत्राऱ्२३हा
१  २   २     १  ३  ५   १  २
इ। राधोइहाइइ। अमाऱ्२र्त्तार्२३४या। आदा१शुषे२।
१  २र   २ १ २     १र     २
जातवेदः। वहातू१वा२म्। अद्याहोइ। दा२३इवा ७
१   २  ५र र   २ र १ २ १ १ १ १
उषः। बू२धा२३४औहोवा। हुवेवसू२३४५॥ २४॥

५ र    ४ ५    २ १  र २र१ र
II अग्नेविवस्वदुषासाः। चित्र७राधोअमाऱ्२र्त्तिय।
१ २      १ २र    १     १र
आदा१शुषे२। जातवेदः। वहात१वा२म्। अद्यादा
२    १   ३   ५रर   २ र १ २
२३इवा७। उषः। बू२धा२३४औहोवा। विदावस
१ १ १ १
२३४५॥ २५॥ ४

'राधः' (२) धनं 'दाशुषे' (३) हविर्दत्तवते यजमानाय 'आवह' (४)

---

I, II अनयोः जामदग्न्यऋषिः, माण्डवं नाम।

सा सूर्या, द्यु-स्थान-देवतासु तृतीया ( भेदएष निरुक्तपर्य्यालोचनादगन्तव्यः ; तत्राद्या एकादश-चतुर्थ-द्वादशे; द्वितीया द्वादश-प्रथम-पञ्चमे )।

(२)—धननामसु अष्टादशतमम्—नि० २, १०।

(३)—निघण्टु-तृतीय-विंशे दाशति दानकर्मसु द्वितीयम्। दाश्वानिति (६, १, १२) सिद्धम् क्वसन्तम्, तस्य चतुर्थ्यां रूपमिदं दाशुषे इति।

(४) वहादिति मन्त्रे 'यचोतस्तिङः (६, ३, १३५)'-इति दीर्घः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

तृणपाणिर्ऋषिः ।

१ २ ३२ ३ २उ ३ १ २ ३ २
त्वन्नश्चित्र ऊत्या वसोराधाꣳसि चोदय । अस्य
३ १र २र ३ १ २ ३ २ ३ २ ३ १र ४ २र
रायस्त्वमग्नेरथीरसि विदा गाधन्तु चे तु नः ॥७॥४०

आनीयप्रापय । सोऽग्निर्विशिष्यते । 'अमर्त्य' मरण-रहित ! हे 'जातवेदः' जातानां वेदितः ! कीदृशं राधः ? 'विवस्वत्' विशिष्ट-निवासोपेतम् । 'चित्रं' नानाविधम् । किञ्च । 'अद्य'(५) अस्मिन् दिने 'उषर्बुधः' उषःकाले प्रबुद्धान् देवानावह (६) ॥ ६ ॥ ४०

हे 'वसो' वासक ! अग्ने ! 'चित्रः' दर्शनीयस्त्वं 'ऊत्या' (१) रक्षया सह 'राधांसि' धनानि 'नः' अस्मभ्यं 'चोदय' प्रेरय । 'अस्य' लोके परिदृश्यमानस्य 'राधः' धनस्य त्वं 'रथीः (२)

---

४१ उतरार्च्चिकस्य ८, १, ३, १ ।

(५)—अद्या-इति 'निपातस्य च (६, ३, १४६)'-इति मन्त्रे दीर्घः ।

(६)—हे अमर्त्य, जातवेदः, अग्ने ! राधः स्वरूपं विवस्वत् तमसां विवासनकरम् उषसः सम्भूतं चित्रं विचित्रं पूज्यं वा ज्योतिः, अन्यांश्च उषर्बुधोदेवान् दाशुषे यजमानाय अद्य त्वम् आवह-इत्यर्थो वि० सम्मतः ।

(१)—अवतेः रूपम् ऊतियुतीत्यादिना सिद्धम् । सहार्थे तृतीया (२, ३, १९) ।

(२)—रथीरिति रंहतेः रूपम्, रंहतिश्च गतिकर्मसु पञ्चविंशतितमः—नि० २, १४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

१ १ ५र २१ २ १२
I त्वन्ना२३श्चित्र ऊत्या। वसोराधा। सिचोदा१या२३
१ २ ३ ५ १ २र १ २ १ २ २
आस्थारा२३४याः। त्वमग्ने। रथाइरासा३इ। वीदागा
५ २१ २ १ २ ४५ ४
२३४धाम्। तुचा२३द्धाइ। तुना। औ३द्धोवा। द्धोपू
इ। डा॥:३६॥४१

असि' रंहिता नेता भवसि। अतः कारणात् अस्मभ्यं धनानि प्रेरयेत्यर्थः। अपिच 'नः' अस्माकं 'तुचे' [अपत्यनामैतत् (नै०२,२,१) अपत्याय अपतन-हेतु-भूताय पुत्राय 'गाधं' प्रतिष्ठां (२) 'तु' क्षिप्रं (३) 'विदाः' लम्भय (४)॥७॥४१

---

I भारद्वाजऋषिः, गाधम्।

इह विवरणकारः—"रथी-शब्दः सारथि-वाची, स इह प्रेरकत्वसामान्यात् अग्नौ प्रयुक्तः, प्रेरयितासि दातासीत्यर्थः"।

(२)—"गाध-शब्दोऽयमगाधमुदकमित्येवमादिषु प्रयोगेषु उदकमध्ये या भूमिः पाद-योराश्रयत्वं प्रतिपद्यते, तस्याः वाचकः; इह तु स्थानसामान्यादाश्रयस्थाने प्रयुक्तः"-इति वि०।

(३)—"तु-इति पादपूरणः"-इति वि०।

(४)—"विदाः वेत्थ जानीहि, ज्ञानेनात्र दानं लक्ष्यते, देहीत्यर्थः"-इति वि०।

* इति ग्रामे गेय-गाने प्रथमः प्रपाठकः॥१॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

(विरूपऋषिः)

३ २ १ २ ३ १ २ ३ २ ३ २ ३ १२ २
त्वमित्सप्रथा अस्यग्ने त्रातर्ऋतः कविः। त्वां विप्रासः
३ १ २ ३ १ २
समिधान दीदिव आ विवासन्ति वेधसः॥ ८॥ ४२

५र २ १ र २र १
I हाउत्वमित्सप्रथाअसिहाउ। आग्नेत्रातः। ऋताः
७ २र २ १र २र १ २र
कवा२३४इः। हाहोइ। त्वांविप्रासः समिधा।
१ र २ २र २ १ २ २र २ २ १
नादीदिवा३४ः। हाहोइ। आविवासा३४हाहोइ। तिवो
५ ४ ५
२३४वा। धापूसोईहाइ॥ १॥

५ ५ २ १ २ ३ ५
II त्वंत्वाईमे। इअप्रा३थायासाइ। आ२३४सी।
१ र २र १ ७ ३ ५ १र २र
आग्नेत्रातः। ऋताःकवा१इः। का२३४वीः। त्वांविप्रासः

हे 'अग्ने'! 'त्रातः' रक्षक! 'ऋतः' (१) सत्यभूतः 'कविः

---

I, II अनयोः गौतमम् नाम।

४२ नास्तीयमुत्तरार्चिके। २२

(१)—ऋतमिति सत्यनामसु षष्ठम—नि० ३,१०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

अथ नवमी ।

(शुनःशेपऋषिः ।

१ २ ३ १ २ ३ १ २ ३ १ २ १ २
आ नो अग्नेवयोवृधꣳरयिम्पावकशꣳस्यम् । रास्वा
१ २र १ र २ ३ ५ १ २र १
समिधा । नादीदिवो । दा२३४इवाः । आविवासा२३
२ १र २ १
हा । निवेधा२३सा३४३ः । ओ२३४५इ । डा ॥२॥ ४२

क्रान्तप्रज्ञः (२) 'त्वमित्' (३) त्वमेव 'सप्रथाः' (४) सर्वतः पृथुः 'असि' भवसि । हे 'समिधान' समिध्यमान ! हे 'दीदिवः' दीप्ताग्ने ! (५) 'त्वां' 'विप्रासः' (६) विप्राः मेधाविनः (७) विधातारः स्तोतारः 'आविवासन्ति' (८) विचरन्ति ॥८॥४२

---

(२)—कविरिति मेधावि-नामसु दशमम्—नि० ३, १५ ।

(३)—"इदिति पादपूरणः"-वि० ।

(४)—प्रथतेरसुनि रूपम् सुविस्तीर्ण इत्यर्थः । "सप्रथाः सर्वतः पृथुः"-इति नै० ६, १, ८ ।

(५)—दीदिर्दानं तद् विद्यते यस्येति मतुपि 'छन्दसीरः (८, २, १६)'-इति वत्वे दीदिवत्, तस्य सम्बोधने 'मतुवसोरुःसम्बुद्धौ छन्दसि (८, ३, १)'-इति रुत्वे रूपम् । "दानवन्"-इति वि० ।

(६)—विप्र इति मेधावि-नामसु प्रथमम्—नि ३, १५ । असुकि (७, १, ५०) रूपम् ।

(७)—वेधः-शब्दो विधातृ-पर्यायः प्रसिद्धः, विधातृ-पदं च मेधावि-नामसु त्रयोदशम्; इह स्तोत्रर्थ-प्रतिपादकः । "वेधसः मेधाविनः ऋत्विजः"-इति वि० ।

(८)—आविवासतीति परिचरण-कर्म्मसु अन्त्यम्—नि० ३, ५ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ ३ १२ ३१२
चन नुपमाते पुरूस्पृहꣳसूनीती सुयशस्तरम् ॥९॥४३

३र ४र ५ र र ४ ५ २ ३२ १११
I आनोअग्निवयोवृधम्। ए३४। रया३४५इम्।
१र १ ० २ १र २र १ २र र १ ०
पावा३काशाꣳसा२३याम्। रास्वाचनउपमाते। पूरू-
१ २ २ ३ २ १
स्पृहा२म। सुनाइताइस्व३ह्वाइ। यशस्तराम्। औ२३
४ ५ ४
होवा। होऽ५इ। डा॥ ३ ॥४३

हे 'अग्ने'! 'पावक' शोधक! 'वयोवृधं' अन्नस्य वर्द्धकं 'शंस्यं' स्तुवन्तं 'रयिं' धनं 'नः' अस्मभ्यम् आभरेति शेषः। आहृत्य च हे 'उपमाते! उपास्मात्समीपे मातिर्ष्टतमित्युपमातिः, हे तादृश! अग्ने! (१) 'नः' अस्मभ्यं 'सुनीती!' सुनीत्या शोभन-नयनेन (२) 'पुरुस्पृहं' बहुभिः स्पृहणीयं 'सुयशस्तरम्' अत्यन्त-स्वभूतं कीर्ति-धनं 'रास्व' (३) देहि॥

---

४३ नास्तीयमुत्तरार्च्चिके। २३
I अग्निऋषिः, आयुः।

(१)—"उपमातिः उपमाता निर्माता, तस्य सम्बोधनम्, हे उपमाते! स्रष्टः! इत्यर्थः। एतदुक्तं भवति—त्वमेवास्माकं स्रष्टा, त्वमेवास्मभ्यं शरीरस्थित्यर्थः धनं देहीत्यर्थः"-इति वि०।

(२)—"नीतिशब्दोमार्गवचनः, तस्मादिथं तृतीया, सुनीत्या सुमार्गेण प्रतिशब्दादिने-त्यर्थः"-इति वि०।

(३)—रातिदान-कर्मसु चतुर्थः --नि० ३, २०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

अथ दशमी ।

सोभरिऋषिः ।

९उ २ १ २३२३१ २ ३र २र ३ १र
योविश्वादयतेवसुहोता२मन्द्रोजनानाम् । मघोन्न
२र ३ १ २३ १र २र ३ ३ १२
पात्रा प्रथमान्यस्मै प्रस्तोमायं न्त्वग्नये ॥ १० ॥ ४४

५र २ ४र ५ ४र ५ १ १ १ र
I योविश्वा३दायतेवसू । होता२मांद्रो२ । जना-
र १ १ १र र र
नाम् । माधो२र्नापा२ । त्राप्रथमान्यस्मै । प्रास्तो२
१ २१ ५ ४ ५
माया२३ । तुवी२३४वा । ग्रा५योई्हाइ ॥४॥

५र र र १ १
II योविश्वादयतेवसूहाउ । होता२ । मांद्रो२ ।
१ र र २ १ २ १ १ १र
जनानाम् । ओवा । ओवा । माधो२र्नापा२ । त्राप्र-
र र १ २ १ २ १ १ २ १
थमान्यस्मै । औवा । औवा । प्रास्तो२माया२३ । तुवी
५ ४ ५
२३४वा । ग्रा५योई्हाइ ॥ ५ ॥ ४४

"सुयशस्तर"-"स्वयशस्तरम्"-इति पाठौ ॥ ८ ॥ ४३

---

४४ उत्तरार्चिकस्य ७, ३, ५ १ ।

I, II अनयोः अग्निऋषिः, हरोनाम ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र र र र र र ५ १५ २१ १र र१
III योविश्वादयतेवस्वोहाओहाईए। होता२मंद्रोजना
र १ २ १ २ २ ३ २ ३ २ १ २
२नाम्। ओ३हा। ओ३हा३ए३४म३४धोर्नपा। वाप्रथ-
र १ २ १ २ १ २ २ २ २ २र २
मानायस्माइ। ओ३हा। ओ३हा३ए३४। प्रस्तो३४माया
२ १ ५ ४ ५
३। तुवो२३४वा। स्राप्रुयोईहाइ॥ ६॥

५र र र ५ १र र र र र १
IV योविश्वादयतेवसुईए। होतामंद्रोजनानाम्। मा
२ २ १र र र १ २ २
धो१र्नापौ। वा३२। वाप्रथमान्यस्मै। प्रास्तो१मायौ।
२र र २ १
वा३२। त्वग्नये। इडा२३भा३४३। ओ२३४५ इ। डा॥७॥

'होता' देवानामाह्वाता 'मन्द्रः' मोदनः(१)यः अग्निः 'विश्वा' (२) सर्वाणि 'वसु' (३) वसूनि धनानि 'जनानां' (४) जनेभ्यः 'दयते'

---

III, IV अनयोः अग्निऋषिः, दैर्घश्रवसम्।

(१)—'मदि' स्तुति-मोद-मद-स्वप्न-कान्ति-गतिषु-इत्यस्य रूपम्। "मन्द्रः स्तुत्यः"-इति वि०।

(२)—सुपां सु लुगित्यादिना (७, १, ३९) शस आत्वे रूपम्।

(३)—"एकवचनमिदं बहुवचनस्य स्थाने"-इति वि०। परं, 'सुपां सुलुगिति (७, १, ३९) शसोलुक्यपि सिद्ध्यति।

(४)—'चतुर्थ्यर्थे बहुलं छन्दसि (२. ३, ६२)' इति षष्ठी। वि० मते तु जनानां स्तुत्यः-इत्येवमन्वयः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



इति चतुर्थी दशतिः॥

प्रयच्छति। तस्मै 'अस्मै' अग्नये 'मधोः (५) न' मदकरस्य सोमस्येव 'प्रथमानि' मुख्यानि 'पात्रा' पात्राणि 'स्तोमाः' स्तोत्राणि 'प्र यन्ति' गच्छन्ति ॥१०॥ ४४

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य चतुर्थःखण्डः ॥ ४ ॥

---

अथ पञ्चम-खण्डे—

सेयं प्रथमा।

(वामदेवऋषिः)

२ १ २ ३ १र २र ३ १र २र ३ १ २ ३ १र
एनावो अग्निन्नमसोर्जोनपातमाहुवे। प्रियं
२र ३ १ २ ३ १र २र ३ २ ३ १ २
चेतिष्ठमरतिंस्वध्वरं विश्वस्य दूतममृतम् ॥१॥ ४५

---

४५ उत्तरार्चिकस्य १, २, १३ १।

(५)—'सुप्तिङुपग्रहलिङ्गे ति (३. ४. ९८) भाष्य-वचनात्, इह लिङ्ग-व्यत्ययेन रूपम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र र र ४ ५ १ र २ र र २
I एनावोअग्निन्नामसा। ऊर्ज्जोनपा। तामा१
१ २र २ १ २ २ १
हुवे२। प्रायन्चेतिष्ठमरतिम्। सुवाध्वा१रा२म्। विश्वा
२ १ २ १ २ १
स्या१दू२। ताममृतम्। इडा२३भा३४३। ओ२३४५
५
इ। डा॥ ८॥

५र र र र १ र २ र १ २
II एनावोअग्निन्नमसाहाउ। ऊर्ज्जोनपा। तामा
२ १ २र २ १ २
१ऊवे२३। हाउ। प्रायन्चेतिष्ठमरतिम्। सुवाध्वा१
२ १ २ २ १
रा२३म्। हाउ। विश्वास्या१दू२३। हाउ। ताम-
२ १ २ १ ५
मृतम्। इडा२३भा३४३। ओ२३४५इ। डा॥ ९॥

५र ४र ५र ४ ४ ५ ४ २र १र २र १र २ र
III एनावोअग्निमेपूनमसा। ऊर्ज्जोनपातमाहुवे।
१ २ १ २ १ २ १ २
प्रा२३याम्। चाइतिष्ठम्। आरतिम्। सुवाध्वा१
१ २ १ २ १ २
रा२म्। विश्वास्या१दू२। ताममृतम्। इडा२३भा
१ ५
३४३। ओ२३४५इ। डा॥ १०॥

---

I, II अनयोः गोतमऋषिः, आग्नेयं नाम।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

५र ४र ५र ४ र ५र ४ ५ १ र २ र
IV एना वो अग्निन्नमसो। जोनपोवा। तामाहुवे।
१ २ १ २ १ २ १
प्रा२३याम्। चाइतिष्ठम। रा२३तीम्। स्वध्वरम्।
२ १ २ १ २ १
विश्वस्या२३दू। ताममृतम्। इडा२३भा३४३। ओ२३४५इ।
डा ॥११॥४५

'ऊर्जः' (१) बलस्य 'नपातं' पुत्रं 'प्रियम्' अस्माकं, 'चेतिष्ठम्' (२) अतिशयेन ज्ञातारं प्रज्ञातारं प्रज्ञापकं वा। 'अरतिं' गन्तारं स्वामिनं वा 'स्वध्वरं' सुयज्ञं, 'विश्वस्य' सर्वस्य यजमानस्य 'दूतम्' 'अमृतं' नित्यम् 'अग्निम्' 'एना' (३) एनेन 'नमसा' स्तोत्रेण [यद्यप्यत्रान्वादेशोनास्ति तथापि छान्दसत्वादिदं शब्दस्यैनादेशः] हे स्तोतारः। 'वः' युष्मदर्थम् 'आहुवे' (४) आह्वयामि ॥१॥४५

---

III, IV अनयोः गोतमऋषिः, मनाज्यं नाम।

(१)—"ऊर्क् अन्नम्, तस्य नपात् पौत्रम्; कथं पुनरसौ अन्नस्य पौत्रः? अन्नाद्धि बलं जायते, बलान्मथ्यमानएष जायते, एवमग्नेरन्नस्य पौत्रत्वम्"-इति वि०।

(२)—चेतइति प्रज्ञा-नामसु तृतीयम्, नि० ३, ९। अथवा 'चिती सञ्ज्ञाने' अस्य, तृचि 'तुश्छन्दसि (५, ३, ११९)'-इतीष्ठनि रूपम्।

(३)—सुपां सुलुगित्यादिना तृतीयाया आत्वे रूपम्।

(४)—सम्प्रसारणं बाहुलकात् ६, १, ३४।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

भर्गऋषिः।

२ १ २ २ २३ २ ३ १ २ १ २
गर्भे वनेषु मातृषु सन्त्वा मर्त्तास इन्धते। अतन्द्रो
३ १ २ २ २ ३ २उ ३ १ २
हव्यं वहसि हविष्कृत आदिद्देवेषु राजसि॥२॥४६

४र र २ ४ १ २र १ २र १
। गर्भेवनाऽउइषु मातृषू। सात्वामर्त्तासः। इन्धा२३
२ १ २र १ २ १ ७ २ ५
ताइ। आतंद्रोहव्यंवह। साइ। हवी२ष्का२३४र्त्ताः।
१ २र १ २ १र २ १
आदिद्देवाइ। षुराजा२३सा३४३इ। ओ२३४५इ।

डा॥१२॥४६

हे 'अग्ने!' 'वनेषु' 'मातृषु' च 'स्वपिषि' वर्तसे। तथा भूतं 'त्वा' त्वां 'मर्तासः' मनुष्याः अध्वर्य्यादयः मन्थनेनोत्पाद्य 'समिन्धते'। पश्चात् प्रवृद्धस्त्वं 'अतन्द्रः' अनलसः सन् 'हविष्कृतः' यजमानस्य 'हव्यं' हविः 'वहसि' देवान् प्रति। 'आदिद्' अनन्तरमेव 'देवेषु' मध्ये 'राजसि' दीप्यसे (१)॥

---

४६ नास्त्यौयसुत्तरार्च्चिके।२४

I गोतमऋषिः, दैवराजम्।

(१(—हे 'अग्ने!' यस्त्वम् 'अतन्द्रः' अनलसः देवान प्रति 'हव्यं' हविः, 'हविष्कृतः'



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

अथ तृतीया ।

सौभरिर्ऋषिः ।

१ २  २ १ २ ३ १ २  ३ १ २ ३ २  ३ २
अदर्शि गातुवित्तमो यस्मिन् व्रतान्यादधुः । उपोषु
२ १र २र  २ ३ १ २  ३ १ २
जातमार्यस्य वर्द्धनमग्निं नक्षन्तुनोगिरः ॥ ३ ॥ ४७

५ र  ५ १  २ १र २र १
I अदर्शि गातुवित्तमाइए । यास्मिन् व्रतानि यादधुः ।
र २  २ २  १र २ १ २  १
ऊपोषु जा३ । हाइहाइ । तमारि यस्य वर्द्धनम् । अग्ना-
२  २ २  र १ २  १ २  १
इनक्षा३ । हाइहा । तुनोगिरः । इडा२३भा३४३ ओ२३
५
४५इ । डा ॥ १२ ॥४७

"मातृषु", "मात्रोः"-इति पाठौ । "हव्यं", "हव्य"-इति च ॥ २ ॥५६

'यस्मिन्' अग्नौ 'व्रतानि' कर्म्माणि (१) 'आदधुः' यजमानाः

---

४७ उत्तरार्च्चिकस्य ७, १, ११, १ ।

I कौशिकऋषिः, गाथिनम् ।

हविषा सह क्रियमाणाः स्तुतीश्च 'वहसि', 'देवेषु' राजसि च—'मर्त्तासः' तं 'त्वाम्' 'शेषे' अपत्याय, 'मातृषु' जगतोनिर्मातृभूतेषु 'वनेषु' उदकेषु उदकार्थञ्च समिध्यते-इति वि०-सम्मतोऽर्थः । शेष-इति अपत्य-नामसु षष्ठम्, नि ७ २, २; वनेत्युदकनामसु नवमम्, नि० १, १२ ।

(१)—व्रतमिति कर्म-नामसु सप्तमम्, नि० २, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ॥

मनुः प्रार्थयते ।

२ २३ २ ३१ २ ३ १ २ ३ १ २ ३ २ ३ १
अग्निरुक्थे पुरोहितोग्रावाणोबर्हिरध्वरे। ऋचा
२ २ २ ३ २ ३ १ २
यामि मरुतो ब्रह्मणस्पते देवाअवोवरेण्यम् ॥४॥४८

आहितवन्तः। 'गातुवित्तमः' (२) अतिशयेन मार्गाणां ज्ञाता सोग्निः 'अदर्शि' प्रादुरभूत्। किञ्च। 'सुजातं' सम्यक् प्रादुर्भूतं अस्य 'आर्यस्य' उत्तम-वर्णस्य 'वर्द्धनं' वर्द्धयितारं 'अग्निं' 'नः' अस्माकं 'गिरः' स्तुति-रूपाः वाचः 'उपो (३) नक्षन्तु' उप गच्छन्तु [नक्ष गताविति धातुः (४) ॥

"नक्षन्तु नोगिरः"-इति छन्दोगाः। "नक्षन्त नोगिरः" -इति बह्वृचाः ॥ १ ॥४७

---

४८ नास्तीमुत्तरार्च्चिके। २५

(२)—गातुरिति पृथिवी-नामसु षोडशम्, नि० १, १। इह तात्स्थ्यात् ताच्छब्द्यमङ्गीकृतं भाष्यकृता। विवरणकारस्तु—'कैगैरै शब्दे-इत्यस्य रूपम्, गातुः शब्दयिता स्तुतीनाम् उच्चारयिता, तं यो वेत्ति सगातुवित्, अतिशयेन गातुवित् गातुवित्तमः, स्तुतीनामुच्चारयितुरतिशयेन वेत्तेत्यर्थः"।

(३)—"उप, उ, सु चयोपि पादपूरणाः"-इति वि०।

(४)—"नक्षतिः व्याप्तिकर्मा"-इति वि०। तत्र व्याप्तिकर्मसु द्वितीयम्, नि० २, १८



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

५ २ २ ४ ५ २र १र २र १ ३ २
I अग्निरुक्थाइ । पुरो३हाइता: । ग्रावाणोब । र्हिरा३
४ ५ २ १र र र ७ १
ध्वाराइ । ऋचायामिमरुतोब्रह्मणस्पाता२इ । दाइवा२
१ २ १ ५ ४
आवा२३: । वरो२३४वा । णापूयोईहाइ ॥ १४ ॥

५ र र ४ ५ २ २ २ ५ ४
II अग्निरुक्थाऔहोहोहाइ । पुरौवाओ२३४वा । हि
२र १र २र १ २ २ ३ १ ४ २ १ २
ताः । ग्रावाणोब । र्हिरौवाऔ२३४वा । ध्वराइ । ऋचौ३हो
१र र ७ १ १ २ १
यामिमरुतोब्रह्मणस्पाता२इ । दाइवा२आवा२३: । वरो
५ ४ ५
२३४वा । णापूयोईहाइ ॥ १५ ॥४८

'उक्थे' स्तोत्र-शस्त्रात्मके 'अध्वरे' हिंसा-रहिते अस्मिन् यज्ञे 'अग्निः' 'पुरोहितः' यज्ञात्पुरतः उत्तरवेद्याम् ऋत्विग्भिर्निहितोऽभूत् । तथा 'ग्रावाणः' सोमाभिषवार्थं पुरतोनिहिताः । 'बर्हिः' च पुरतोनिहितम् आसादितम् । एवं सामग्र्यां सत्यां हे 'मरुतः' एकोनपञ्चाशन्मरुद्गणाः ! हे 'ब्रह्मणस्पते' स्तोत्रस्य पालक ! एतन्नामक ! देव ! हे 'देवाः ' द्योतनादि-गुण-युक्ताइन्द्रादयः ! 'वरेण्य' वरणीयं भजनीयम् 'अवः' रक्षणम् 'ऋचा' सूक्त-रूपया

---

I, II अनयोः बार्हदुक्थं नाम ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

सुदीतिर्ऋषिः पुरुमीढोवाष्कभ्रोवा।

२ १ १२ ३ १ २ ३ १ २   ३ १ २   ३ २
अग्निमीडिष्वावसे गाथाभिः शीरशोचिषम्। अग्निं

३ १ २   ३ २उ ३ १   २ ३ १ २ ३ २
राये पुरुमीड श्रुतन्नरोग्निः सुदीतये छर्दिः॥५॥४९

स्तुत्या 'वः' युष्मान् 'यामि' अनुरहं याचामि (१) [याचतेर्लटि रूपम्। वर्णलोपश्छान्दसः (२)]॥

"मरुतोब्रह्मणस्पतेदेवाः"-इति चौथ्यामंत्रितत्वेन छन्दोगाः पठन्ति। मरुतोब्रह्मणस्पतिं देवान्"-इति द्वितीयान्तत्वेन वह्वृचाः॥ ५ ॥४८

हे 'पुरुमीढ !' त्वम् (१) 'अग्निम्' 'अवसे' रक्षणाय 'ईडिष्व' स्तुहि 'गाथाभिः' [गाथेति-वाङ्नाम (१,११,३६)। मन्त्ररूपा

---

४९ नास्तीयमुत्तरार्च्चिके।२६

(१)—यामीति याच्ञाकर्मसु द्वितीयमस्ति पठितम् (नि० ३, १९), तदनुल्लेखेन याचतेर्लोपायासः कथं स्वीकृतइति चिन्तनीयम्।

(२)—इह उक्थे अध्वरे पुरोहितमग्निं, ग्रावाण, बर्हिः, मरुतः, ब्रह्मणस्पतिः। अत्र वचनव्यत्ययः स्वीकार्यः।

(१)—'हे पुरमीढ ! मदीयान्तरात्मन् !' -इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४५र २ १　　३र ४र ५　　२ २र १र २र
I अग्निमीडिष्वाइ३४औहोवा। आवसे। गाथाभिःशी।
१र　　२　　१ र　　२
रशोचा२३इषाम्। अग्निꣳरायाइ। पुरुमा२३इदो।
१　　१　　२　　१
श्रुतन्नरो। अग्निःसू२३दो। तयाइच्छा२३४५दीई५६ः।
१ २ १११११
ह्वाइया२३४५॥ १६ ॥४९

भिर्वाग्भिः] कीदृशम्? 'शीरशोचिषं' शयन-स्वभाव-रोचिषं (२) तथा 'राये' धनायईडिष्व। 'श्रुतम्' (३)एनं 'नरः' अन्येपि यजमानाः (४) स्तुवन्ति स्वार्थम्। तस्मात् 'सुदीतये' (५) मह्यम् 'अग्निः' (६) त्वयाभिष्टुतः सन् 'छर्दिः' गृहं (७) प्रयच्छत्वित्येवं सुदीतिः पुरुमीढं ब्रूते॥

---

I पौरुमीढम्।

(२)—'शीरं व्यापि, शोचिर्दीप्तिः; व्यापिनी दीप्तिर्यस्यासौ शीरशोचिः, तं शीर-शोचिषम्, व्यापि-दीप्तिमित्यर्थः। अथवा जठरात्मना आश्रयणीया दीप्तिर्यस्य'-इति वि०। "अनुशायिनमिति वा आशीनमिति वा"-इति नै० ४, २, १४। शीङ् अश्नोतेर्वेति भावः।

(३)—'श्रुतं विख्यातम्'-इति वि०।

(४)—नरइति मनुष्य-नामसु बहुवचनान्तं चतुर्थं पदम्, नि० २, ३ 'नरः प्रथमैकवचनमिदं (नि० २, ३, १) द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्, नरं नराकारम्,-इति वि०।

(५)—'शोभनस्य दानस्यार्थाय'-इति वि०।

(६)—'अग्निः प्रथमैकवचनमिदं द्वितीयैकवचनस्य स्थाने'-इति वि०।

(७)—छर्दिरिति गृहनामसु ऊनविंशतितमम् नि० ३, ४। 'छर्दिः प्रथमैकवचनमिदं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम्, छर्दिषे गृहस्यार्थायेति यावत्'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

प्रस्कण्वऋषिः।

२ १ २ २ १ २ ३ १ २ ३ १ २ १ २
श्रुधि श्रुत्कर्ण वह्निभिर्देवैरग्ने सयावभिः। आ सी-
२ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
दतु बर्हिषि मित्रो अर्यमा प्रातर्यावभिरध्वरे ॥६॥

२ २ १ ५ ४ ५ २र१र
I श्रुधी३। श्रू२३४। धिश्रुत्कर्णव। ह्निभाइः। देवै-
र १ १र २ १र र र २
रग्ने सयावा२३भीः। आसीदतु बर्हिषि मित्रो अर्या२३मा।
र १ २ १ ५र र २ २ २
प्रातर्या२३वा३। भा२इरा२३४औहोवा। ए२३। ध्वर
आ ॥१७॥५०

"अग्निः सुदीतये छर्दिः"-इति छन्दोगाः। अग्निं सुदीतये छर्दिः-इति बह्वृचाः ॥ ५ ॥४९

हे 'श्रुत्कर्ण' श्रवण-समर्थाभ्यां कर्णाभ्यां युत! अग्ने! अस्मदीयं वचनं 'श्रुधि' (१) शृणु। यः 'मित्रः' देवस्त्र 'अन्यैः' 'प्रातर्यावभिः' प्रातःकाले देव-यजनं गच्छद्भिः 'देवैः' सर्वैः 'सयावभिः'

---

५० नास्तीयमुत्तरार्चिके। २७

I कार्णश्रवसम्, प्रास्कण्वं वा।

(१)—"श्रुशृणुपृकृवृभ्यश्छन्दसि (६, ४, १०२)'-इति हेर्धिः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

सौभरिर्ऋषि।

१२ २२ २ ३ २ ३ २ ३ २ २ २ १ २ १ २
प्र दैवोदासो अग्निर्देव इन्द्रोन मय्मना *। अनु
२ १ २ ३ १२ २२ २ १२ २२ ३ १ २
मातरं पृथिवीं वि वावृते तस्थौनाकस्य शर्मणि ॥७॥५१

५ २ २ २ ४ ५ २२ १ २ १
I प्रदैवोदासोग्नीः। देवइंद्रोनमय्मना †। अनुमा२३

आ ह्वनीयाग्निना त्वया समान-गतिभिः अन्यैः वह्निभिः' देवैः सह 'अध्वरे' क्रतु-निमित्ते 'बर्हिषि' दर्भे 'आसीदतु' उपविशतु॥

"आसीदतु बर्हिषि मित्रोअर्य्यमा प्रातर्यावभिरध्वरे"-इति छन्दोगाः, "आसीदन्तु बर्हिषि मित्रोअर्यमा प्रातर्यावाणो अध्वरम्"-इति बह्वृचाः॥ ६ ॥५०

'देवः, द्योतमानः इन्द्रः परमैश्वर्य-युक्तः (१) 'दैवोदासः' दिवो-

---

५१ उत्तरार्चिकस्य ७, १, ११, ३।

I दैवोदासम्।

* "मय्मना"-इति अन्त्यस्थमध्य-पाठो बहुपुस्तके

† गानग्रन्थे सर्वत्रैव प्रायः "मय्मना"-इति अन्त्यस्थ-मध्य एव पाठः।

(२)—'वह्निभि वोढृभिः देवैः अन्यैः अग्निभिः'-इति वि०।

(१)—'दिदि' परमैश्वर्य्ये तस्मा दौणादिकेर-प्रत्यये रूपम्।

२३क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

मेधातिथिर्मेध्यातिथिस्त्रोभावृषी। [इयमैन्द्रीत्युक्तमेव]।

२ ३ १र २र २ १ २ ३ १ २ ३ १र २र
अध ग्मो अधवा*दिवोबृहतोरोचनादधि।

२ १ २ १र र २ १
ता। रंपृथिवींविवावृताइ। तस्थौना२३का। स्याग्र-

२ १ २ १ ५
र्मणि। इडा२३भा३४३। ओ२३४५इ। डा॥ १८॥५१

दासेनाहूयमानः 'अग्निः' 'मातरं' सर्वस्य-लोकस्य धारणात् पृथिवी माता, ताम्, पृथिवीम् 'अनु (२)प्र वि वावृते' देवान् प्रति हविर्वोढुं विशेषेण प्रवर्तयति। यस्मादेनमग्निं दिवोदासः 'मज्मना' बलेन (३) आजुहाव तस्मादयम् अग्निः 'नाकस्य' स्वर्गस्य शर्मणि गृहे (४) स्वायतनएव 'तस्थौ' अतिष्ठत् (५)

"अग्निर्देव इन्द्रः"-इति, "नाकस्य शर्मणः"-इति च छन्दोगाः। "अग्निर्देवाꣳअच्छ"-इति "नाकस्य सानवि"-इति च बह्वृचाः॥५१

---

* "अधग्मो"-इति अन्त्यस्थ-मध्य-पाठो बहुपुस्तके।

(२)—'अन्विति पादपूरणः'-इति वि०।

(३)—मज्मनेति तृतीयान्तं बलनामसु पञ्चविंशतितमम् नि० २, ९।

(४)—शर्मेति गृहनामसु षोड़शतमम्, नि० ३, ४। इह वि०—'वैद्युतोऽग्निः स्वेन बलेन मेघान् घ्नन् पृथिवीं वर्त्तयति, प्रतस्थौ प्रतिष्ठते च, स्वेनैव बलेन गच्छतीत्यर्थः, क्व पुनर्गच्छति? उच्यते—नाकस्य शर्मणि द्युलोकस्य सम्बन्धिनि गृहे, द्युलोक यद् गृहं तस्मिन् गच्छतीत्यर्थः"।

(५)—ऋचि श्रुतो न शब्दः पादपूरणार्थएवेतीह न व्याख्यातः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २   क २र २ २उ   २ १ २
अया वर्द्धस्व तन्वा गिरा ममा जाता सुक्रतो पृण ॥८॥५२

५ र ४ ५   १ २   १ र र
I अधय्मा*ओवा। धवादा१इवा२ः। बृहतोरो-
२   १ र २र २ १ २
चाना१दाधी२। आ। पौ। हौहो३। वा। वार्द्धस्वत-
र १ २   १ २र र २
न्वा। गाइरा१ममा२। आजातासौ। हौहो३वा३४।
५ २   २ र ३ १११११
हा हाउवा३। क्रतोपृणा२३४५॥ १९ ॥५२

हे 'इन्द्र!' 'अध' अधुना (१)। 'ज्मः' जमन्ति गच्छन्त्यस्यामिति ज्मा पृथिवी, (२) तस्याः सकाशात्। 'अध वा' अपिवा व अन्तरिक्षात् 'बृहतः', महतः रोचनात् नक्षत्रैर्दीप्यमानात्स्वर्गाद्वा आगत्य। 'अधि' पञ्चम्यर्थनुवादो (३) 'अया' (४) अनया

---

५२ नास्तीयमुत्तरार्च्चिके।२८
I सौक्रतवम्।

* गान-ग्रन्थे प्रायः सर्वत्रैव "अधय्मा"-इति अन्त्यस्थ-मध्य एव पाठः।

(१)—वेदे प्रायः थ-धयो रैक्यम्, प्रयुज्यते च धएव बहुत्र, तथाचेहैवमन्त्रे अथेत्यर्थे अध, अथवेत्यर्थे अधवेति। अध अनन्तरम्, अधुनेत्यर्थस्तु फललभ्यः।

(२)—ज्मेति पृथिवी-नामसु तृतीयम् नि० १, १।

(३)—"तथाच अधिपरी अनर्थकौ ( १, ४, ९३ )"-इति कर्मप्रवचनीये गतिसञ्ज्ञाभावात् "गतिर्गतौ ( ८, १, ७० )"-इति निघातो न।

(४)—छान्दसलादनादेशाभावे रूपम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

विश्वामित्रऋषिः।

१ २ २ २३ २ १२ २२ ३ २ १२ २२
कायमानोवना त्वं यन्मातॄरजगन्नपः। न तत्ते
३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
अग्नेप्र मृषे निवर्त्तनं यद्दूरे सन्निहा भुवः॥ ९ ॥५३

४र र र ४ २ १र २र र १ २ ३
I कायमानोऽवनातुवाम्। यन्मातॄरा। जागन्ना
५ २ र १ २ २ १ २
२३४पाः। नतत्तेअग्नेऽ३। प्रमृषेऽ३हाइ। निवा र्त्ताँ२३४

'तन्वा' (५) तथा, विस्तृतया 'ममा' मदीयया गिरा स्तुत्या 'वर्द्धस्व' वृद्धो भव। हे 'सुक्रतो' ! शोभनकर्मवन्त्रि ! 'जाता' (६) जातानस्मदीयान् जनान् अभिलषितैः फलैरापूरय (७)॥ ८ ॥५२

हे 'अग्ने' !' 'वना (१) वनानि काननानि भक्षितुं 'काय-

---

५३ नास्तीयमुत्तरार्च्चिके। २९

(५)—'तन्वा शरीरेणेति वि०।

(६)—जातेति सुपांसुलुगित्यादिना (७, १, ३९) शसश्चात्वे रूपम्। 'जाता जातानि ममापत्यानि'-इति वि०।

(७)—'पृण प्रीणयेत्यर्थः'-इति वि०।

(१)—सुपामित्यात्वे (७, १, ३९) रूपम्। 'वन-शब्देनात्र वनावयवा[illegible] इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २ १र २ २ र २ १ २ ४ ५
नाम्। यद्दूरा२३इसान्। इहाभुवा। औ३होवा।
४
होऽ५इ। डा ॥ २० ॥

४ ५ १र २ २ २ ५ २
I एकाया। मानो। वनाट्२३४वाम्। ओइ।
२ ५ ४ ५ २ ऽ २ २ १र २र
तू२३४वाम्। उहुवाहाइ। औ३हो३१इ। यन्मातृरा।
१ २ २ ५ २ ५ ४ ५ २ ऽ २
जागन्ना२३४पाः। आ२३४पाः। उहुवाहाइ। औ३हो
२ १ २ १ २ १ २ १ २
३१इ। नतत्त्वा। ग्राइप्रम्रुषाइइ। निवार्त्ता२३४
५ २ ५ ४ ५ २ ऽ २
नाम्। ता२३४नाम्। उहुवाहाइ। औ३हो३१इ।
२ १र २र १ १ २ २ ५ २ ५ ४ ५
यद्दूरेसाम्। इहाभू२३४वाः। भू२३४वाः। उहुवाहा
२ ऽ २ २ ५र र २ ५
इ। औ३हो३१२। या२३४औहोवा। ऊ२३४पा ॥२३॥२३

मानः (२) कामयमानः त्वं 'यत्' यस्मात्कारणात् तानि विहाय 'मातॄः' (३) मातृभूता 'अपः' 'अजगन्' (४) अगमः गतवानसि।

---

I, II अनयोः काण्वं नाम।

(२)—'चायृ पूजा-निशामनयोरित्यस्य चकारस्य ककारापत्या रूपम्'-इति वि०। "कायमान चायमानः कामयमान इति वा" -इति नै० ४, २, १४।

(३)—'मातरइति प्रथमा-बहुवचनान्तं नदी-नामसु दृश्यते, नि० १, १३,३'। इह मातॄरिति सुपांसुलुगित्यादिना (७, १, ३९)-श्रसि पूर्वसवर्णदीर्घे रूपम्।

(४)—वर्त्तमाने लुङ् (३, ४, ६), च्लेस्ङादेशः, प्रथमपुरुषो बहुवचनञ्च व्यत्ययेन।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

कण्व ऋषिः।

१ २ २र३ १ २ ३ २ ३ १ २ ३ १ २ ३ २ ३
नि त्वामग्ने मनुर्दधे ज्योतिर्जनाय शश्वते। दीदेथ
१ २ ३ ३ १ २ २र३ १ २ ३ १ २
कण्वऋतजातउक्षितोयं नमस्यन्ति कृष्टयः ॥१०॥५४

असु प्रविष्टत्वाच्छान्तोवर्त्तसे। 'तत्' तस्मात् 'ते तव निवर्तनं नितरां तत्रैव वर्तनं, तेन च विनाशोलक्ष्यते। सो 'न प्रमृषे' [कृत्यार्थे केन् प्रत्ययः (५) न प्रमृच्यते न सह्यते। कुतः? इत्यत आह। 'यत्' यस्मात्कारणात् 'दूरे (६) सन्' दूरे अदृश्यतया वर्तमानस्त्वं 'इह' अस्मत्संबन्धिष्वरणीरूपेषु काष्ठेषु 'आभुवः' (७) समन्तात् भवेः [मथनात् क्षण-मात्रेणास्माकं समीपे भवसि, तस्मात्तव दूरतोवर्त्तनम् अस्मभ्यं न रोचते]॥

"इहाभुवः"-इति "अभव"-इति च पाठौ ॥ ९ ॥५३

हे 'अग्ने!' 'ज्योतिः' प्रकाशरूपं 'शश्वते' (१) बहुविधाय यज-

---

५४ नास्तीयमुत्तरार्चिके।३०

(५)—"कृत्यार्थे तवै केन् केन्यत्वनः ३, ४, १४"-इति सूत्रेण।

(६)—पदकारास्त्विह 'दुः ए'-इत्येवं पठन्ति।

(७)—वर्त्तमाने लुङ् (३, ४, ७)।

(१)—शश्वत्-इति बहुनामसु षष्ठम् नि० ३, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र २ ३ ५ १ २ र
I नित्वामग्नाइ । मनुर्द्दा२३४धाइ । ज्योतिर्जना ।
१ ७ २र १ २ १ ७ २
याश्रश्वाता२इ । दो । दाइ । थक । णाऋतजा३ ।
१ २ ५ १ २ १ १ २ ५र
तऊ२ज्ञा२३४इताः । यन्नमस्या२३ । ता२इ क्षू२३४औ
र २
होवा । ष्टा२३४याः ॥ २२ ॥

४ २ ५ र ४ ५ र ४ १र
II होवाइ । नित्वामग्नेमनुर्द्दधे । होवाइ । ज्योति-
र र १ २ २ १ ७ २ ७
र्जनायश्रश्वते । दाइदे१थक । णाऋतजा१३ । तऊ-

मानाय 'मनुः' प्रजापतिः (२) 'निदधे' देव-यजन-देशे स्थापितवान् । हे 'अग्ने'! त्वम् 'ऋतजातः' ऋतेन यज्ञेन निमित्त-भूतेनोत्पन्न उक्षितः हविर्भिस्तर्पितः सन् (३) 'कण्वे' एतन्नामके महर्षौ मयि 'दीदेथ' (४) दीप्तवानसि । 'यम्' अग्निं 'कृष्टयः' मनुष्याः 'नमस्यन्ति' नमस्कुर्वन्ति स त्वमिति पूर्वेणान्वयः ॥१०॥५४

---

I, II अनयोः मानवम् ।

(२)—'यामथर्वा च मनुश्च पिता'-इत्यादि नैरुक्तम् (२, ३, १५) ।

(३)—'उक्षितः महानुपचितः'-इति वि० ।

(४)—दीधिङोरूपम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ २ १ २ १ २ ५र र
२न्ना२३४इता:। पन्नामा२३स्याइ। ता२इक्तृ२३४औहो

२
वा। ष्टा२३४याः॥ २३ ॥५४

इति पञ्चमी दशति।

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य पञ्चमःखण्डः ॥ ५ ॥

---

अथ षष्ठे खण्डे—

सेयं प्रथमा।

वसिष्ठऋषिः।

१ १ २ ३ २ ३ १ २ ३ १ २ १ १
देवोवोद्रविणोदाः पूर्णा विवष्ट्वासिचम्। उद्वा

३ २ ३ १ २ ३ १र २र ३ १ २
सिञ्चध्वमुप वा पृणध्वमादिद्वोदेव ओहते ॥१॥५५

---

५५ उत्तरार्च्चिकस्य ७, १, १०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया:।

अस्याउत्तरस्याश्च कण्वऋषिः।

२२ १ २ २ २ ३ २ क२र ३ १ २ १ २ ३१र
प्रैतु ब्रह्मणस्पतिः प्र देव्येतु सूनृता। अच्छा वीरं

५र४ २ ४ ५र २र १र २ र १ २ १ २
I देवो३वो३द्रविणोदाः। पूर्णां विवष्ट्वासिचम्। ऊद्वा

१ २र १ ७ १ र
१सिञ्चा२। ध्वमुपवापृणध्वम्। आदिद्वोदे२। वओ-

२ र १ २ १
हते। इडा२३भा३४३। ओ२३४५इ। डा॥ २४॥ ५५

'द्रविणोदाः' धनानां दाता (१) 'देवः अग्निः' 'वः' युष्मदीयां 'पूर्णां' हविषा 'आसिचम्' आसिक्तां च स्रुचं 'विवष्टु' कामयताम्। अतः 'उत्सिञ्चध्वं वा' सोमेन पात्रं। 'उपपृणध्वं वा' सोमं [ वा-शब्दौ समुच्चयार्थौ। ध्रुव-ग्रहेण होतृ-चमसं पूरयत च, अग्नये-सोमं प्रयच्छत चेत्यर्थः] 'आदित्' अनन्तरमेव 'देवः' अग्निः 'वः' युष्मान् 'ओहते' (२) वहति।

"विवष्टु" 'विवष्टी'-इति पाठौ॥ १ ॥५५

---

५६ नास्तीयमुत्तरार्चिके।२१

I अग्निऋषिः, द्रविणम्।

(१)—द्रविणमिति धन-नामसु पञ्चविंशतितमम्; नि० २, १०।

(२)—'ओहते वर्द्धयति'-इति वि०। ओहते-इति सायण-मते वहतेरूपम्, विवरण-मते वंहते इत्यस्य, परमुभय-नये एव छान्दसत्वं शरणम्।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३र ३ १ २ ३ २ ३ १ २
नर्यं पङ्क्तिराधसं देवा यज्ञं नयन्तु नः ॥२॥५६

२ ८ २ ४ ५ ४ ५ २ १ २ १ २
I प्रैतू३ब्रह्मणस्पतिः। प्रदाइवियै। तुसूनृताइ।
१ २ ५ १ १ २ १र
अच्छा२वा२३४इराम्। नर्यं प। ङ्क्तिराधा१सा२३म्। देवा
२ ५ १ ५ र र २
२या२३४ज्ञाम्। ना२र्या२३४औहोवा। तू२३४
५
नाः ॥२ ५॥५६

'ब्रह्मणस्पतिः'(१)देवः 'प्रैतु' अस्मान्प्राप्नोतु। 'सूनृता' देवी प्रिय-सत्य-भूता वाग्देवता प्रैतु अस्मान् प्राप्नोतु। 'देवाः' ब्रह्मणोस्पत्यादयोदेवताः 'वीरं' शत्रुं निःशेषेण 'दूरे' प्रेरयन्तु। तं 'नर्य्यं' मनुष्येभ्योहितं। 'पङ्क्तिराधसं' ब्राह्मणोक्त-हविषा पङ्क्त्यादिभिः समृद्धं (२) यज्ञं प्रति न अस्मान् 'अच्छ' आभिमुख्ये न (३) 'नयन्तु' प्रापयन्तु ॥ २ ॥५६

---

I अग्निर्ऋषिः बार्हस्पत्यम्।

(१)—'ब्रह्म अन्नं, तस्य पतिः स्वामी'-इति वि०।

(२)—द्विनाराशंसं प्रातःसवनम्, द्विनाराशंसं माध्यन्दिनं सवनम्, सकृन्नाराशंसं तृतीयं सवनम्; एषा नाराशंसपङ्क्तिः पशु रुपवसथ्यः, त्रीणि सवनानि पशुरनुबन्ध्यः; एषा सवनपङ्क्तिः। एताभिः पङ्क्तिभिः यः साध्यते तं पङ्क्ति-राधसम—इति भावः।

(३)—'अच्छ आप्तुं सम्भावयितुम्'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

( ऋषिः स एव )

३ २ ३ १ २ ३ २ ३ १ २ ३ १र २र ३ २ ३ १र
ऊर्ध्व ऊ षु ण ऊतये तिष्ठा देवो न सविता। ऊर्ध्वो
२र ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
वाजस्य सनिता यदञ्जिभिर्वाघद्भिर्वि ह्वयामहे ॥३॥५७

२र र १ ५ १ र र र
I ऊर्ध्वऊषुणा३ऊता२३४याइ। तिष्ठादेवोनसवि-
र र २ १ २र १ ७
ता। ऊर्द्धोवा२३जा। स्यासनिता। यादञ्जिभी२।
२र१ १ २ १र २ १
वाघाद्भी२ः। वीवी२। ह्वयामा२३हा३४३इ। औ२३४५
५
इ। डा॥ २६ ॥५७

हे यूप! [यद्वा, यूपात्मक-दारु-निष्ठाग्ने! 'नः' अस्माकम् 'ऊतये' रक्षणाय 'ऊर्ध्वः' (१) उन्नतः 'तिष्ठा' (२)

---

५७ नास्तीयमुत्तरार्च्चिके।३२

I वशिष्ठ ऋषिः वीङ्कम्।

(१)—'ऊषुण'-इति मन्त्रे षत्व णत्वे ८, ३, १०७। ८, ४, २७। क, सु—इमौ द्वावेव पादपूरणार्थावित्यत्र न व्याख्यातौ।

(२)—मन्त्रे तिष्ठा-इत्यादन्तपाठः, तत्र द्यचोऽतस्तिङः (६, ३, १३५)-इत्यतो दीर्घः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

सौभरिर्ऋषिः।

२उ ३ १र २र ३ २ ३ १ २ ३ १ २ ३ १
प्र योराये निनीषति मर्त्तोयस्ते वसो दाशत्। सवीर
२ ३ २३ १ २ ३ १२
न्धत्ते अग्नउक्थशꣳसिनं त्मना सहस्रपोषिणम्॥४॥५८

तिष्ठ। 'सविता (३) देवः 'न' यथा सूर्योदिवउन्नतस्तिष्ठति, तद्वत् ऊर्ध्वः उन्नतः सन् 'वाजस्य' अन्नस्य 'सनिता' (४) दाता भविष्यसि। 'यद्' यस्मात् कारणात् 'अञ्जिभिः' (५) यज्ञेन यूपमञ्जद्भि 'वाघद्भिः' यज्ञं वहद्भिः ऋत्विग्भिः सह 'विह्वयामहे'। अन्नस्य दानाय त्वां विशेषेणाह्वयामः, तस्मादन्नस्य दाता भवेति पूर्वचान्वयः॥ ३ ॥५७

हे 'वसो' (१) वासकाग्ने ! त्वां 'ये' तव स्तोता 'राये'

---

५८ नास्तीयमुत्तरार्च्चिके।३३

(३)—'आदित्योऽपि सवितेत्युच्यते, तथाच—'हैरण्यस्तूपे स्तुतौ वन् हिरण्यस्तूप ऋषिरिदं सूक्तं प्रोवाच तदभिवादिन्येषर्ग् भवति'-इत्यादि नै० १०, ३, ८।

(४)—'सनितिर्लाभः, तस्मादियं तादर्थ्य-चतुर्थ्यां आ आदेशः (७, १, ३९। सनितये लाभायेत्यर्थः'-इति वि०।

(५)—'त्वद्-गुण-प्रकाशकैश्छन्दोभिः'-इति वि०।

(१)—'हे वसो ! प्रशस्तधनवन् !'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

कण्वऋषिः।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
प्र वो यह्वं पुरूणां विशां देवयतीनाम्। अग्निं

४ र र र ४ १ र १र र
I प्रयोरायाएइ। निनीषताइ। मर्त्तायस्तेवसोदाशत्।

र २ १ २ र
सवीरा२३न्धा। ताअग्नउ। क्थशाꣳसिनम्। त्मनासा

२ १र २ १
२३हा। सुपोषा२३इणा३४३म्। ओ२४३५इ। डा॥२७॥५८

धनार्थं 'प्र निनीषति' प्रणेतुमिच्छति(२)। 'यः' 'मर्त्तः' मनुष्यः 'ते' तुभ्यं 'दाशत्' (३) हवींषि प्रयच्छति। 'सः' मनुष्यः 'उक्थशंसिनम्' उक्थानां (४) शस्त्राणां शंसितारम् 'त्मना' (५) आत्मनैव 'सहस्रपोषिणं' बहु-धनम् 'वीरं' पुत्रं 'धत्ते' धारयति (६)॥

"प्र योराये निनीषति"-"प्रयं राये निनीषसति"-इति पाठौ॥४॥५८

---

I आङ्गिरसऋषिः, वैरूपसम्।

(२)'प्रकर्षेण पूर्वस्यां दिशि आहवनीये आत्मानं नेतुमिच्छति'-इति वि०।

(३)—दाशतीति दानकर्मसु द्वितीयम् नि० ३. २०।

(४)—'उक्थानि स्तोत्राणि तेषाम्'-इति वि०।

(५)—'मन्त्रेष्वाङ्यादेरात्मनः (६, ४, १४१)'-इत्यात्मन आदि-लोपः।

(६)—'तस्य पुत्रं ददासीत्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ २ ३ १ २ २ ३उ ३ २ ३ १ २
सूक्तेभिर्वचोभिर्वृणीमहे यꣳसमिदन्य इन्धते ॥५॥५९

५ ४ २ २ १ र र २ १
I प्रवाः। यज्ञं पुरू२३णाम्। विशांदेवयता२३यि-
२ १ र र र २ १ र २ १
नाम्। अग्निꣳसूक्तेभिर्वचोभिर्वृणीमा२३हाइ। याꣳसा

हे ऋत्विग्यजमानाः! 'देवयतीनां' देवान् कामयमानानां (१) 'पुरूणां' बहूनां (२) 'विशां' (३) प्रजारूपाणां (४) 'वः' युष्माकमनुग्रहाय 'यज्ञं' महान्तम् (४) 'अग्निं' 'सूक्तेभिः' सूक्तरूपैः 'वचोभिः' वाक्यैः प्र वृणी-महे' (५)। 'अन्ये इत्' (६) अन्येप्यृषयः 'यम्' एनमग्निं 'समिन्धते' सम्यग्दीपयन्ति तमग्निमिति पूर्वेणान्वयः॥

"वचोभिर्वृणीमहे"-इति, "अन्यइन्धते"-इति च छन्दोगाः।
"वचाभिरीमहे"-इति "अन्यईळते"-इति च बह्वृचाः॥५॥५९

---

५९ उत्तरार्चिकस्य १, २, ५ १।
I ऐतवाध्यम्।

(१)—देवान् यष्टुमिच्छन्त्यीयाः प्रजास्तासामित्यर्थः। 'न छन्दस्यपुत्रस्य ७, ४, ३५'-इति ईत्वाद्यभावः।

(२)—पुरु-बहु-पर्य्याय-शब्दौ नि० (३, १, ४) स्फुटम्।

(३)—यद्यपि 'विशः'-इति मनुष्य-साधारण-वाचकः (नि०२,२,६), परमिह देवयतीनामिति स्त्रीत्व-बहुत्व-निर्देशात् विशामित्यस्य प्रजारूपाणामित्यर्थः।

(४)—'यज्ञः'-इति महन्नामसु चयोदशम् नि० ३, ३।

(५)—'प्रवृणीमहे—याचामहे, किम्पुनर्याचामहे? सामर्थ्याद्धनम्'-इति वि०।

(६)—सायण-मते इच्छब्दोऽप्यर्थः, विवरण-नये पाद-पूरणार्थः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

अनेनात् कोलः स्तौति।

२ २ २ २ २ २ ३ २ २ १र २र २ १२

अयमग्निः सुवीर्यस्येशे हि सौभगस्य। रायईशे

३ १ २ ३ १ २३१२ ३ १ २

स्वपत्यस्य गोमतईशे वृत्रहथानाम् ॥६॥६०

१ १ २र १ १

ऽमाइदा२न्। यइन्धते। इडा२३भा३४३ओ२३४५ई।

५

डा ॥ २८ ॥५९

५ ५ १ २र २ २

I अयमग्निः सुवीर्यस्यहाउ। आइशेहिसौभगस्य।

१ २ २ २ १र २र १ २ १ २

होवा३हाइ। रायईशेस्वपत्य। स्यागो१माता२३ः।

१ २ २ २र१र २ १ २ २ २ २र

होवा३हाइ। ईशेहा२३इवृ३। होवा३हा। त्राहथा-

२ १ २ १ ५

नाम्। इडा२३भा३४३। ओ२३४५ई। डा ॥ २८ ॥६०

'अयम्' यजनीयत्वेनाङ्गुल्या निर्दिश्यमानोऽग्निः 'सुवीर्यस्य' शोभन-सामर्थ्योपेतस्य 'सौभगस्य' त्वम् 'ईशे हि' ईष्टे खलु (१)।

---

६० नास्तीयमुत्तरार्चिके। ३४

1 मनाकृषिः, दोहः।

(१) 'हीति पादपूरणः' इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

वसिष्ठऋषिः I

१२ ३१२३१र २र ३२ १र २र
त्वमग्ने गृहपतिस्त्वꣳहोता नो अध्वरे। त्वम्पोता
३१२३ २३ १२ ३१ २
विश्ववार प्रचेता यक्षि यासि च वार्यम् ॥७॥६१

४५र ४५४ १ र २र १
I त्वमग्ने गृहपताइ:। त्वꣳहोतानोअध्वराइ। त्वंपो

ईश्वरोभवसि [सर्वस्य बलारोग्य-हेतुतया-सौभाग्य-कारित्वात्] तथा 'गोमत.' गवादि-पशु-युक्तस्य 'स्वपत्यस्य' शोभनापत्यस्य 'रायः' धनस्य 'ईशे' ईष्टे, पुत्र-पश्वाद्युद्देशेन क्रियमाण-कर्म-फल-सम्पादकत्वेन तत्स्वामित्वात्। तथा एवम् भूतोग्निः 'वृत्रहथानां' [हननं हथः(२)] शत्रु-भूत-पाप-विनाशानामपि 'ईशे' [त्वयि समर्पित-कर्मणामस्माकं त्वत्प्रसादात्पाप-क्षयोभवतीति तस्यापिस्वामी॥

"ईशेहि"-इति "ईशेमहे,"-इति च पाठौ॥ ६ ॥६०

हे 'अग्ने !' 'नः' अस्माकम् 'अध्वरे' यज्ञे 'त्वं' 'गृहपतिः' यजमानोसि। 'त्वं' 'होता' देवानामाह्वातासि। हे 'विश्ववार' सर्वै

---

६१ नास्तीयमुत्तरार्च्चिके। ३५

I अग्निर्वसिष्ठो वा ऋषिः, समन्तम्।

(२)—'नपुंसके भावे क्तः (३, ३, ११४)'-इति क्ते, 'तप्-तनप्-तन-थनाश्च (७, १, १५५)'-इति तस्य थनादेशे रूपम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २र १ १र २र २ २र २
२३ता। वाइस्वा। रप्रचाइताः। औहोइ४वाहाइ।
१ २ १ २ ९ १र २
य। हाइया२३सीइ। होवाइहाइ। चवारा२३याइ ४३म्।
१
औ२३४पुइ। डा॥ ३०॥

४ ५ र ४ ४ २ २ ५ २ २
II त्वमग्नेइ। हापूपतोः। त्वꣳहो२३४ता। नोअध्वा
५ १ २ ५ १ २ ५ २र
राइ। त्वा२म्यो२३४ता। विश्वावा२३४रा। प्रचेताइः।
१ २ १ २ ५र र २१र २ ११११
यक्षायेइ। या२सा२३४औहोवा। चवारिया२३४पुम्॥३१॥

वरणीयाग्ने! 'त्वं' 'पोता' एतन्नामकऋत्विगसि(१)। अतः 'प्रचेताः' प्रकृष्टमतिस्त्वं 'वार्यं' वरणीयं हविः 'यक्षि' यज। 'यासि (२) च' अस्माकं धनं प्रागय।

"यक्षि यासि च"-इति छन्दोगाः। "यक्षि वेषि च" -इति बह्वृचाः॥ ७॥ ६१॥

---

II वरुणऋषिः,समन्तम्

(१)—'शोधयिता वा'-इति वि०।

(२)—'यामीति याच्ञा-कर्मसु पठितत्वात् (नि० ३, १९, २) यातिरत्र याच्ञा कर्मणि. लेट् लोडर्थे (३, ४, ७, पा० सू०); यक्षि याचस्व प्रार्थयेत्यर्थः'-इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

विश्वामित्रः स्तौति।

१ २ ३ १ २र ३ १ २ ३ १
सखायस्त्वा ववृमहे देवं मर्त्तास ऊतये। अपा न्न-
२र ३ १ २ ३ १ २ ३ १ २ ३ १ २
पातꣳ सुभगꣳ सुदꣳससꣳ सुप्रतूर्त्तिमनेहसम् ॥८॥६२

५ २ ४र ५ ४ ५ १ र २र र १ २ र १
III त्वमाइग्नेगृहापतीः। त्वꣳहोतानोअध्वरे। त्वा
र २ २र २ ४र ५र २र २ १ २र
२३म्पोता। औहोइ४इ। औहो। वाहाइ। वाइश्वा।
१ २र २र २ ४र ५र २र २ १
रप्रचाइताः। औहोइ४इ। औहो। वाहाइ। यज्ञा-
२ २र २ ४र ५र २र २ १र २
इयासा। औहोइ४इ। औहो। वाहाइ। ऽवारा२३या-
१
३४३म्। ओ२३४५इ। डा॥ २२ ॥६१

हे अग्ने! 'सखायः' सोमाज्यादि-हविः-प्रदानेनोपकारकत्वात् मित्राणि 'मर्त्तासः' मनुष्याः ऋत्विजो वयम् 'अपां नपातम्'[१]

---

६२ नास्तीयमुत्तरार्च्चिके। २६

III अस्यापि वरुणऋषिः, समन्तम्।

(१)—'अपां नपातम्, अपां पौत्रम्। कथं पुनरग्नेरपां पौत्रत्वम्? अद्भ्य ओषधयो वृक्षाश्च जायन्ते, वृक्षेभ्यः सकाशात् निर्मथ्यते; एवमग्नेरपां पौत्रत्वम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र　र र ४　५　२　२　५
I सखायस्त्वाऔहोहोहाइ। वन्रू। मा२३४हाइ।
२र १　२　२　१　३　५　१र　२
हेव म्मर्त्ताइहाइ। सजू२ता२३४याइ। अपान्नपा३।
४　५　३ २　२　१ २ ३　५
त७सू। भगौ। वा३हा३इ। सूद७सा२३४साम्।
२ १　२　२ १र　२　१
सुप्रतू२३र्त्तीम्। अनेहा२३सा३४३म्। ओ२३४५इ।
डा ॥ ३३ ॥ ६२

इति प्रथमादशति।

अपां नप्तारं 'सुभगं' शोभन-धन-युक्तम्। 'सुदंससं' सुकर्म्माणं (२) 'सुप्रतूर्त्तिं' (३) शोभन-प्रतरं कर्म्मानुष्ठातृभिः सुखेन गन्तव्यम् 'अनेहसम्' (४) उपद्रव-रहितम्। एतादृशन्त्वाम् 'ऊतये' (५) रक्षणाय 'वव्रमहे' (६) वृणीमहे ॥ ८ ॥ ६२

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य षष्ठखण्डः ॥ ६ ॥

---

I वाम्र-वैखानस ऋषिः, आङ्गिरस-दानवो वा।

(२)—दंसः कर्म-नामसु तृतीयम् नि०२,१।

(३)—'तूर्वति हिंसार्थः (नि०२,२०,१२) सुष्ठु प्रकर्षेण हिंसितारं शत्रूणाम्' इति वि०।

(४)—'अनेहसम् अक्रोधम्'-इति वि०। हेडः-इति क्रोधनामसु षष्ठम् नि०२,१३।

(५)—'चतुर्थ्येकवचनमिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्'-इति वि०। 'चतुर्थ्यर्थे बहुलं छन्दसि (२, ३, ६२)'-इति सूत्रं तत्र साधकम्।

(६)—'प्रार्थयामः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



खण्डयोराजुहोतेति त्रिष्टुभोदशपञ्च च।
अग्निर्नरोविराट्, चित्र-इमंस्तोममितिद्वृचः।
जागतोऽग्नेर्ऋचः सर्वाः, पूष्णः शुक्रन्तइत्यसौ (०)॥

अथ सप्तम-खण्डे—

सेयं प्रथमा।

श्यावाश्वऋषिः वामदेवो वा।

१ २ ३ १ २ २
आ जुहोता हविषा मर्जयध्वं

१ २र ३ १ २
नि होतारं गृहपतिं दधिध्वम्।

३ २ ३ १ २र ३ १ २
इडस्पदे नमसा रातहव्य९

---

(०)—आजुहोता हविषामर्जयध्वमित्याद्येकः सप्तमः खण्डः, अबोध्यग्निः समिधेत्याद्यपरः; तत्र प्रथमे ऋचोदश, द्वितीये अष्टौ; तदित्थमुभयोः खण्डयोरष्टादश ऋचः सन्ति। तत्राह— आजुहोता-इत्याद्योः द्वयोः खण्डयोः अग्निर्नरो-इति या सप्तमखण्डस्यान्तिमा ऋक्,— सा विराट्-छन्दस्का; ये इमे चित्र इमंस्तोममित्याद्ये सप्तमखण्डस्य द्वितीय-चतुर्थे— ते जगती-च्छन्दस्के, अथावशिष्टाः पञ्चदश ऋचः त्रिष्टुप्-छन्दस्काः। किञ्च, शुक्रन्तेअन्यदिति अष्टम-खण्डस्य तृतीया ऋक् सौरी, तदितराः समस्ताः आग्नेय्य इति स्फुटार्थः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २   ३ २ ३क २र

सपर्यता यजत म्पस्त्यानाम्॥ १ ॥६३

४र ५ र ४   २ १ र   १   १र

I आ जुहोता। हविषामर्ज्जगा२ध्वाउवा२। नि-

र २   १   ३ २   ३ २

होतारङ्गृहपतिन्दधा२इध्वाउवा२३४। इडा३४स्पदाइ।

१ र र २ १   १ २ १   २ १   ४

नमसारातहाव्या२म्। सापर्यता। याजतम्पा२३। स्ति

५   ४   ५

योवा। आपुनोईहाइ॥ ३४ ॥६३

हे ऋत्विजः! (१) 'आ जुहोत' (२) अग्निमाह्वयत। किञ्च 'हविषा' 'मर्जयध्वं' मृडयध्वं सुखयध्वं (३) (डकारस्य जकारश्छान्दसः (४) अपिच। 'इडः' इलायाः (५) 'पदे' उत्तरवेद्याम्

---

६३ नास्तीयमुत्तरार्चिके। ३७

I श्यावाश्वम्।

(१)—'हे ऋत्विजः! मत्पुत्रादयोवा'-इति वि०।

(२)—जुहोतेति सम्प्रसारणे(५,१४,२४) रूपम्, 'ऋचि तुनु'-इत्यादिना (६,३,१३३) ऋचि दीर्घः।

(३)—'मर्जयध्वम्, शोधयध्वम्, सम्मार्गं तृणैः कुरुध्वम्'-इति वि०।

(४)—सुप्तिङित्यादिना—(३,४,९८) हल्-वर्ण-व्यत्ययः-इति भावः।

(५)—इला शब्दस्य पञ्चम्यन्तम् इलः-इति, डलयोरैक्यात् इडः श्रुतिः; "षष्ठ्याः पति-पुत्र-पार-पद-पयस्पोषेषु-(८,३,५३)"-इति सत्वे इडस्पदे-इति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

वार्ष्टहव्य * ऋषिः † ।

२ २३ ३ १ २ ३ २३
चित्र इच्छिशोस्तरुणस्य वक्षथो

२३ ३ १२ ३२ ३ १ २
न यो मातरावन्वेति धातवे।

३ १र २र ३१ २ ३ २
अनूधा यदजीजनदधा चिदा

३१२ ३१ २र ३ २ १२
ववक्षत्सद्यो महि दूत्यं चरन्॥ २ ॥६४

इत्यर्थः (६)। 'होतारं' देवानामाह्वातारं 'गृहपतिं' गृह-पालकम् अग्निं 'निदधिध्व' निःशेषेण धारयध्वम्। किञ्च 'नमसा' नमस्कारेण हविषा वा युक्तम्। अतएव 'रातहव्यं' दत्त-हविष्कं 'पस्त्यानां' यज्ञ-गृहाणां (७) मध्ये 'यजतं' यजनीयं पूजनीयमग्निं 'सपर्य्यत' परिचरत॥ १ ॥६३

---

* वार्षहव्येति पाठान्तरम्।

(†)—'उपस्तुतस्य वार्षम्'-इति वि०।

६४ नास्तीयमुत्तरार्च्चिके। ३८

(६)—'इडित्यन्न-नाम (नि०२,७,१६) तेन चात्र हविर्लक्षणमन्नं परिगृह्यते, तस्य पदे वेद्याख्य-स्थाने इत्यर्थः''-इति वि०।

(७)—'पस्त्यानि गृहाणि (नि०३,४,७), तेषु ये निवसन्ति ते पस्त्याः, तेषाम्'-इति वि०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१　　　　　　２　　　　　४ २ ३ ५
I ओइ । चित्रइच्छाइशोः१स्तरुणा२३ । स्याइवक्षयः ।
१　　र र　२　　　　४ २र३५र　　१
ओइ । नयोमातारा१वनुवा२३इ । तोइधातवे । ओइ ।
२र　७ र　　　　४ २र ३ ५र　　१
अनूधायादजीजना२३त् । आइधाचिदा । ओइ । वव-
२　　　　　२ ४　　　　२र१
क्षत्साद्यो१महिदू२३ । तियाइश्चापुराइ५ईन् । दूत्यञ्चर-
२ १ १ १ १
न्मह्दे२३४५ ॥ ३५ ॥

'शिशोः' शिशु-भूतस्य (१) । अतएव 'तरुणस्य' (२) अग्ने 'वक्षथः' (वक्षेरौणादिकोऽथस् प्रत्ययः) हविर्वहनं (३) 'चित्रइत्' आश्चर्य्यभूत मेव(४) । 'यः' जातोऽग्निः 'मातरौ' सर्वस्य निर्मात्र्यौ सर्वस्य मातृ-भूते द्यावापृथिव्यावरण्यौवा 'धातवे'(धेट् पाने' तुमर्थे इति (३,४,९) तवेन् प्रत्ययः) स्तनपानाय न अन्वेति' न गच्छति (इण्, गतौ लट्युपसर्गेण समासः (५) तिङि चोदात्तवतीति

(१)—'शंसनीयस्य'-इति वि० ।

(२)—'तृ प्लवन-तरणयोरित्यस्यैतद्रूपम्, प्लवन-समर्थस्य ; अथवा तरुणस्य युनः ।

(३)—'वक्षथः वहनं गमनमित्यर्थः'-इति वि० ।

(४)—इह चिवइति पुंल्लिङ्गोव्यत्ययेनेति (३.४,९८) बोध्यम ! चित्रः पूज्यं गमनमिति विवरण-कृद्-व्याख्यानम् ।

(५)—'सह सुपा (२,१,४)'-इत्यत्र सहेति योगविभागात् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

५ ५ २ ५र ४ ५ ४ ५
II चित्राइए। ए३१२३४। शिशोस्तरुणस्यवक्षथः।

४ ५ ५ ५ २ र ५र ४ ५र
क्षथः। हिहिहियाइहाउ। ए३१२३४। नयोमातरा

४र ५ ४र ५ र ४ ५र ५ ५ २
वन्वेतिधातवे। तवे। हिहिहियाइहाउ। ए३१२३४।

५र ४र ५ र ४ ५र ४र ५र ५
अनूधायदजीजनाद्धाचिदा। चिदा। हिहिहियाइहा-

२ ५ ४र ५ र ४ ५ ४ ५ ४ ५
उ। ए३१२३४। ववक्षत्सद्योमहिदूतियश्चरन्। चरन्।

५ २ २ १
हिहिहियाइहाउ। वा। ए३। ऋतून्॥ ३६ ॥६४

(८,१,७१) गतेर्निघातः) 'अनूधाः' (नञा बहुव्रीहि-समासः([६]), तस्मिन्, अनूङ्स्त्रियामिष्टत्वात् ([७]) अत्रानङ्ङभावः। प्रत्येक-विवक्षया एकवचनम्) ऊधोरहितः। अयं लोकोऽसौ लोकश्च 'यत्' यदि एनमग्निम् 'अजीजनत्' जनयेत् तर्हि स्तनपानाय न गच्छतीति युक्तम्, तथा न भवति, किन्तु द्यावापृथिव्यौ हि सर्वेषां कामदुघे खलु तथापि न याति, तस्मादस्य हविर्वहनं विचित्रम्। 'अध चित्' उत्पत्त्यनन्तरमेव 'सद्यः' तदानीमेव

---

I,II इमे ऋतु-सामनी।

(६)—'नञोऽस्त्यर्थानां वोत्तरपदलोपः (२,२,२४)'-इति वचनात्।
(७)—'उधसोऽनङ् (५,४,१३१)'-इति सूत्रे स्त्रियामित्युपसङ्ख्यानात्।

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

बृहदुक्थऋषिः।

२ २　३ १ २ ३ १ २ ३ १ २
इदं त एकं पर ऊ त एकं

३ १ २ ३ १　२ ३ १ २
तृतीयेन ज्योतिषा संविशस्व।

३ १ २　३ २　१ २
संवेशनस्तन्वे३चारुरेधि

३ २　३ १ २　३ २ ३ १ २
प्रियो देवानां परमे जनित्रे ॥ ३ ॥ ६५

शीघ्रं 'महि' महत्वम् 'दूत्यं' ["दूतस्य भाग-कर्म्मणी (४,४,१२०)" इति कर्म्मणि यत् प्रत्ययः] दूत-कर्म्म 'चरन्' आचरन् 'आ वक्षत्' देवान् प्रति हवींष्यावहति ॥ २ ॥ ६४

एतया बृहदुक्थो वाजिनं नाम स्व-पुत्रं मृतं वदति। हे मृत-पुत्र! 'ते' तव 'इदम्' (उपरि(१)ज्योतिषेति वक्ष्यमाणत्वात् अत्रेदं शब्देन ज्योतिरभिधीयते) इदं ज्योतिरग्न्याख्यम्, 'एकम्' एकोऽशः, अतः 'ते' तव देह-गताग्न्यंशेनवाह्यमग्निं 'संविशस्व' सङ्गच्छस्व। तथापरः 'ऊ' अन्योपि 'ते' तव 'एकं' वाय्वाख्योऽंशः, तेन च प्राणवाय्वाख्येनांशेन वाह्यं वायुं संविशस्व (शरीराग्नि-

---

६५ नास्तीयमुत्तरार्च्चिके। ३९

(१)—अस्या एव ऋचो द्वितीये पादे इति यावत।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ २ २ १ २ १ २ ३ ४
I ओ४हा। हहाइ। इदन्तए। का३म्पर:। उतए

५ २ १ र र र २ २ ३ ४ ५ २ १र
काम्। तृतीयेना। ज्योतिषा३। संविशस्वा। संवेशना:।

२ १र २ ३ ४ ५ २ ५ २ २ १र र
तनुवे। चारुरेधी। ओ४हा। हहाइ। प्रियोदेवा।

२ १ २ २ ४
ना३म्पर। मा३४३इ। जा३ना५इत्रा३इ५ईइ ॥३७॥ ई५

-प्राणवायुः वाह्याग्नि-वाय्वोरैकत्वादंशत्वमिति भावः) तथा, 'तृतीयेन ज्योतिषा' आदित्याख्येन तेजसा तवात्मना संविशस्व (सूर्यगतात्म-चैतन्ययोरभेदादंशत्वम्, "योऽहं-सोऽसौ"—"योऽसौ सोऽहं"-"सूर्य आत्मा जगतः"-इत्यादि-श्रुतेः आत्मनः सूर्य-प्रवेशो-युक्तः) 'तन्वे' तनवे पुनः शरीर-ग्रहणाय 'चारुः' कल्याणोभूत्वा तस्मिन् सूर्ये 'संवेशनः' सम्यक् प्रविष्टा 'एधि' भव। कीदृशस्त्वं ? 'प्रियः' तेन सह प्रीयमाणः। कीदृशि तस्मिन् ? 'देवानां' 'परमे' उत्तमे 'जनित्रे' जनके ("देवानां ह्येतत् परमं जनित्रं यत् सूर्यः"-इति हि श्रुतिः (२) ॥ ३ ॥ ई५

---

I यामं कौत्सं वा, अग्नेः।

(२)—'इदं' 'ते' तव 'एकं' ज्योतिः वैद्युताख्यम्, 'परः' परम् उत्कृष्टमित्यर्थः (ज-इति पादपूरणः)। 'ते' तव 'एकम्' आदित्याख्यम्। 'तृतीयेन ज्योतिषा' पार्थिवेन अग्न्याख्येन 'संविशस्व'। क्व पुनः संविशामि? उच्यते,—'संवेशनः तन्वै' संविशते अस्मिन्निति संवेशनं स्थानम्, तस्मिन्नित्यर्थः; 'तन्वे' तन्वः शरीरस्य। संविश्य



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

कुत्स ऋषिः।

२ २उ ३ १ २ ३ १ २ २
इमꣳ स्तोममर्हते जातवेदसे

१ २ ३ १ २ ३ १ २
रथमिव सम्महेमा मनीषया।

३ २उ ३ १ २ ३ १
भद्रा हि नः प्रमतिरस्य सꣳसद्-

२र ३ १र २ र ३ १ २
यग्ने सख्ये मा रिषामा वयन्तव ॥ ४ ॥६६

'अर्हते' पूज्याय 'जातवेदसे' जातानामुत्पन्नानां वेदित्रे जात-प्रज्ञाय जात-धनाय वा अग्नये 'मनीषया' निशितया बुद्ध्या 'इमं स्तोमम्' एतत् स्तोत्रं 'रथमिव' यथा तक्षा रथं संस्करोति तथा, 'सम्महेम' सम्यक् पूजितं कुर्म्मः(१)। 'अस्य' अग्नेः 'संसदि' सम्भजने 'नः' अस्माकं 'प्रमतिः' प्रकृष्टा बुद्धिः 'भद्रा हि' कल्याणी

---

६६ उत्तरार्चिकस्य ४,१,७,१।

'चारुः एधि' शोभनोभव। 'प्रियः' 'देवानाम्'। क्व पुनः प्रियः? उच्यते,—'परमे' उत्कृष्टे 'जनित्रे' जन्यतेऽस्मिन्निति जनित्रं कर्म यागाख्यम्, तस्मिन्नित्यर्थः। अथवा जन्मैव जनित्रम्, परमे जन्मनि, द्युत्पादौ यज्जन्म, तस्मिन्नित्यर्थः"-इति वि०।

(१)—'सम्महतिरवगमनार्थः, अन्तर्णीत-ण्यर्थश्च द्रष्टव्यः। यथा कश्चिद्रथं गमयति तद्वद् गमयेम उच्चारयामीत्येतदाशास्महे-इत्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी ।

द्वयोर्भारद्वाज* ऋषिः ।

२ १२ २५ २३१ २३ १
मूर्द्धानं दिवो अरतिं पृथिव्या

२ २ २ ५ २ ५ १ २२ १ २
I इमाꣳस्तो२३४माम् । अर्हते२३४जा । तावेदसे

१ २ २ २ ५ २ २ ५ २२
३ । होइ । रथामी२३४वा । सम्माहे२३४ः.। मानी-

२ २ १ २ २ २ ५ २ २ ५
षया३ । होइ । भद्राही२३४ना: । प्रमाती२३४रा ।

१ २ १ २ १ २ २ २ ५ २ २
स्यासꣳसदे३ । होइ । अग्नाइसा२३४ख्याइ । माराइषा

५ १ २ १ २ १
२३४मा । वायन्तवा३ । हो२३४५इ । डा ॥ २८ ॥ ६६

समर्थाः खलु (२) अतस्तया बुद्ध्या कुर्म इत्यर्थः । हे 'अग्ने !' 'तव सख्ये' अस्माकं त्वया सह सखित्वे सति वयं 'मा रिषाम'(३) हिंसिता न भवाम । अस्मान् रक्षेत्यर्थः ॥ ४ ॥ ६६

---

* भरद्वाजइति पाठान्तरम् ।

I यज्ञसारथिः, अग्नेः ।

(२)—'हि यस्मादर्थे । यस्मात् 'भद्रा' कल्याणी 'नः' अस्माकम् 'उपरि'-इति वाक्यशेषः । 'प्रमतिः' प्रकृष्टा मतिः अनुग्राहिका बुद्धिरित्यर्थः'-इति वि० ।

(३)—रिष् हिंसायाम्-इति रेषतेः रूपम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३ २ ३ २ ३ ३ २ ३ २
वैश्वानरमृत आ जातमग्निम्।
३ २ ३ २ ३ १ २ ३ १ २
कविं सम्राजमतिथिं जनाना-
३ २ ३ १ २ ३ २
मासन्नः पात्रं जनयन्त देवाः॥ ५ ॥ ६७

'मूर्द्धानं' शिरोभूतम्। कस्य? 'दिवः' द्युलोकस्य, 'पृथिव्याः' प्रथितायाभूमेः 'अरतिं' गन्तारम् (१)। यद्वा गन्तव्यं स्वामिनं। 'वैश्वानरं' विश्वेषां सर्वेषां नराणां सम्बन्धिनम्। 'ऋते' ऋतमिति सत्यस्य (२) यज्ञस्य वा नाम। (निमित्तसप्तम्येषा (३)) ऋत-निमित्तम् 'आ' आभिमुख्येन जातं (४) सृष्ट्यादावुत्पन्नम्। 'कविं' क्रान्त-दर्शिनम् 'सम्राजं' सम्यग्राजमानं, यजमानानाम् 'अतिथिं' हविर्वहनाय सततं गन्तारम्। यद्वा, अतिथिवत्पूज्यम्। 'आसन्' (५) (आसनि आस्यं, द्वितीयार्थे सप्तमी) आस्य-भूतम् (अग्नि-लक्षणेनास्येन हि देवा हवींषि

---

६७ उत्तरार्चिकस्य ४,२,३,१।

(१)—पृथिवीतः हवींषि गृहीत्वा द्यु-लोकस्य गन्तारमित्यर्थः।

(२)—नि० ३,१०,६।

(३)—'निमित्तात् कर्म-योगे (२,३,३६)'-इति वचनात्।

(४)—'आ- इत्येष उपेत्येतस्य स्थाने। उपजातम् प्रवृद्धमित्यर्थः'-इति वि०।

(५)—पद्दन्नो-इत्यादिना (६,१,६३) आस्य-शब्दस्यासन्, सुपां सुलुगित्यादिना (७,१.३९) सप्तम्यालुक् च।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र ४ ५ २ ३ ५ १ १ २
I मूर्द्धीहोहाइ। नन्दा२३४इवाः। अरताइम्। पृथी-
२ २१र २ १ र २ ३४५ २१
३व्याः। वैश्वानराम्। ऋतआ। जातमग्नीम्। कविꣳ
र ७ २ र १ २
सम्राजमतिथायिम्। जना२३नाम्। आसन्नःपा। त्रा-
१ २ २ ४
३ज्जन। या३४३। ता३दा५इवा६५६ः॥ २९॥

४र५र र ४ ५ २ १ २ १ २
II होवाइ। मूर्द्धीहोहाइ। नन्दाइ। वा३अर। ति
२ ४ ५ २ र ऽ २ २र १र २ १ र
म्पृथिव्याः। इहोइया३। ई३या। वैश्वानराम्। ऋतआ
२ ३ ४ ५ २ र ऽ ऽ २ १ २
जातमग्नीम्। इहोइया३। ई३या। कविꣳसम्रा। जा
१ २ ३ ४ ५ २ र ऽ २ र १
३मति। थिञ्जनानाम्। इहोइया३। ई३या। आसन्नः
२ १ १ २ ३ ४ ५ २ र २ १ २
पा। त्रा३ज्जन। यन्तदेवाः। इहोइया३। ई२। या२३
५र र ३ १ १ १ १
४५औहोवा। ई२३४५॥ ४० *॥ ६७

भुञ्जते (६) 'पात्रं' पातारं रक्षकम्। यद्वा, आस्येन धारकम्।

---

I,II वैश्वानरस्येमे।

(६)—तथाहि ऐतरेयादौ श्रूयते 'अग्निमुखा वै देवाः'-इत्यादिः।

* इति ग्रामे गेय-गाने द्वितीयस्यार्द्धः प्रपाठकः॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी ।

२३ ३ १ २र ३ २
वि त्वदापो न पर्वतस्य पृष्ठा-
२ १ २ ३ २
दुक्थेभिरग्ने जनयन्त देवाः ।
२ १२ ३१२
तं त्वा गिरः सुष्टुतयो वाजय-
२ १ २र३ १ २ ३ १ २
न्त्याजि न गिर्ववाहो जिग्युरश्वाः ॥ ६ ॥ ६८

एवं गुण-विशिष्टं वैश्वानराग्निं 'नः' अस्माकं सम्बन्धिनि यज्ञे 'देवाः' स्तोतारऋत्विजः (०) देवाएव वा 'आ जनयन्त' यज्ञाभिमुख्येनाजनयन् अरण्योः सकाशाद् उदपादयन् ॥ ५ ॥ ६७

हे 'अग्ने' ! 'त्वत्' (१) त्वत्-सकाशात् 'उक्थेभिः' (२) उक्थैः स्तोत्रैः यज्ञै र्हविर्भिश्च (३) 'देवाः' स्तोतारः कामान् आत्मनः 'व्यजनयन्त' विविधं जनयन्ति । तत्र दृष्टान्तः—'पर्वतस्य' मेघस्य (४) 'पृष्ठात्' उपरि भागात् 'आपो न' (५) आपः उदकानि

---

६८ नास्तीयमुत्तरार्चिके । ४०

(०)—द्युतिमत्त्वेन स्तोतारः ऋत्विजोपि देवाः उच्यन्ते ।

(१)—पञ्चम्यादृच लुक् ७,१,३९ ।

(२)—भिसऐसादेशोन ७,१,१० ।

(३)—उक्थ-शब्दः स्तोत्रे एव रूढः, यज्ञादावौपचारिकः ।

(४)—नि० १,१०,९ ।

(५)—न-शब्दः उपरिष्टादुपमार्थीयः नि० १,२,६ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



I ओम्॥ विल्वत्। ओहाइ। आपोनपर्वतस्य पा२३ष्ठात्। उकथेभिरग्नेजनयन्तदा२३इवाः। तंत्वागिरः सुष्टुतयोवाजया२३न्तो। आजिन्नगाइर्वंवा२३हाइः। जाये ३। ग्यू२रा२३४ औहोवा। अश्वा२३४५ः॥१॥

II हा। ययाइदिवोहाइ। विल्वत्। आपो। तपर्व। तस्यपृष्ठात्। हा। ययाइ। दिवोहाइ। उकथाइ।·भिरा ग्ने३जन। यन्तदेवाः। हा। ययाइ। दिवो हाइ। तं त्वा। गिराः। सुष्टुतयः। वाजयन्तो। हा। ययाइ। दिवोहाइ। आजीम्। नगाइर्वंवा२३हाइः। जाये३। ग्यू२रा२३४औहोवा। अश्वा२३४५ः॥ २ ॥ ६८

यथा, तद्वत्। अपिच, हे 'गिर्वंवाहः' गीर्भिः स्तुति-रूपाभिः

I,II अनयोरभिधानमाश्वम् ऐरतं वा।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

वामदेवोब्रूते ।

१ ३१ २ ३१२ ३१

आ वीराजानमध्वरस्य रुद्रꣳ

२र ३२३ १ २

होतारꣳ सत्ययजꣳ रोदस्योः।

३ २ ३१ २ ३२ ३ २३

अग्निं पुरा तनयित्नोरचित्ता-

१ २ ३१२

द्धिरण्यरूपमवसे कृणुध्वम् ॥ ७ ॥ ६९

धाग्निर्वहनीयाग्ने ! 'भरद्वाजाः' (६) स्तोतारः 'तं प्रसिद्ध' 'त्वा' त्वां 'वाजयन्ति' बलिनं (७) कुर्वन्ति। यद्वा, वाजमन्न (८) मिच्छन्ति। अपिच, त्वां 'सुष्टुतयः' शोभन-स्तुति-रूपाः 'गिरः' वाचः 'जिग्युः' जयन्ति वशीकुर्वन्ति। तत्र दृष्टान्तः— 'अश्वाः' वाहाः 'आजिन' संग्रामं यथा शीघ्रं जयन्ति तद्वदित्यर्थः ॥ ६ ॥ ६८

---

६९ नास्तीयमुत्तरार्चिके। ४१

(६)—अस्याभरद्वाजदृष्टत्वात्।

(७)—नि०२,९,३।

(८)—नि०२,७,२।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र ५र र ४   ३२ ३   २२ ४ ५   १ २र
I आवोराजा। नमध्व। रस्यरुद्राम्। होता।

१ २   २ ३ ४ ५   २ १
राम्। स। त्ययजा३म्। रोदसीयोः। अग्निम्पु। रा।

२ ३   २ ३ ४ ५   १ २ १ २ १ २
तनयि। त्नोरचित्तात्। हिरण्य। रू। पा३मव। सा

२ ३
३४३इ। का३र्णूपूध्वाई५ईम्॥ २॥ ६९

हे ऋत्विग्यजमानाः! 'अध्वरस्य' यज्ञस्य 'राजानम्' अधिपतिं 'होतारं' देवानामाह्वातारं 'रुद्रं' (१) रोरूयमाणं द्रवन्तं, शत्रून् रोदयन्तं वा। यद्वा, 'एषा वा घोरातनूर्यद्रुद्रइति रुद्रात्मकम्। 'रोदस्योः' द्यावा-पृथिव्योः (२) 'सत्ययजं' सत्यस्यान्नस्य (३) दातारम्। यद्वा सत्ययजं सत्येन हविषा (४)

---

I वामदेव्यं रौद्रं वा।

(१)—रुद्र इति निघण्टोस्तृतीय-काण्डीय-तृतीय-खण्डस्य तृतीयं पदम्। "रुद्रो-रौतीति, सतो रोरूयमाणो द्रवतीति वा, रोदयतेर्वा, यदरुदत्तद्रुद्रस्य रुद्रत्वमिति काठकम्, यदरोदीत्तद्रुद्रस्य रुद्रत्वमिति हारिद्रविकम्"-इति नैरुक्तम् १०,१,५। 'रुद्रं रोदनस्वभावकरम्। पार्थिवोग्निः प्रदीप्तः धुग्धुगाशब्दं करोति, वैद्युतोपि गर्जित-लक्षणम्, सौर्यो ** स्यः। अतोऽसौ रोदन-क्रिया-योगात् रुद्रः उच्यते' -इति वि०।

(२)—नि०३,३०,४। 'द्यावा-पृथिवी-ग्रहणञ्चात्र प्रदर्शनार्थं सर्वदेवानां यष्टारम्' -इति वि०।

(३)—नि०२,७,२४।

(४)—हविर्लक्षणेनान्नेनेत्यर्थः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

वसिष्ठऋषिः।

२ २उ २ २ ३ १ २ २२ ३
इन्धे राजा समर्यो नमोभिः
२ ३ १२ ३ १ २ ३ १ २
यस्य प्रतीकमाहुतं घृतेन।
१ २ ३ १ २ ३ २ ३
नरोहव्येभिरीडते सबाध
१२ २२ ३ १ २
अग्निरग्रमुषसामशोचि ॥ ८ ॥ ७०

देवान् यजन्तम्। यद्वा, सत्यस्यानन्द-लक्षणस्य सङ्गमयितारं रोदस्योर्व्याप्य वर्त्तमानम्। 'हिरण्य-रूपं' सुवर्ण-प्रभम्। एवं विधम् 'अग्निं' 'वः' युष्माकम् 'अवसे' रक्षणाय 'तनयित्नोः' तनयित्नुरशनिः (५) सह्याकस्मिकः, तत् सदृशाद् 'अचित्तात्' न विद्यते चित्तं यस्मिन् तदचित्तम्, (चित्तोपलक्षित-सर्वेन्द्रियोप-संहारो मरणमिति यावत्) तस्मान्मरणात् 'पुरा' प्रागेव 'आ कृणुध्वं' यूयं समन्ताद्धविर्भिरग्निं भजध्वम् ॥७॥ ६९

---

७० नास्तीयमुत्तरार्च्चिके। ४२

(५)—स्तनयित्नुर्मेघ-वाचकः प्रसिद्धः, तच्छब्द-परोऽशनि-परश्चौपचारिकस्तुल्यः। तथा च विवरण-नये 'अचित्तात्' अचेतनात् 'तनयित्नोः' गर्जित-लक्षणाच्छब्दात् 'पुरा' प्राक् दृश्यमानम् 'हिरण्यरूपं' वैद्युतात्मानमग्निम्-इत्याद्यर्थः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ ५र र र ४र ५र ४ ५ ४र
I इन्द्रा३१२३४इ। हाउहाउहाउ। राजासमर्यौन।
५ ४ ५ ४ ५ ३ २ ५र र
मोऽमोरोभीः। ओभीः। यस्या३१२३४। हाउ। हाउ
र ४५र ४र ५ ४ ५ ४ ५ ४ ५
हाउ। प्रतीकमाहुतङ्कृ। ताइनाआइना। आइना।
३ २ ५र र र ४र ५ र र ४ ५
नरा३१२३४ः। हाउहाउहाउ। हव्येभिरीडतेस। बाधा
४ ५ ४ ५ ३र २ ५र र र
बाधाः। बाधाः। आग्ना३१२३४इ। हाउहाउहाउ।
२ १ २ १ १ १ १
अग्रमुषसा२३मश्राउ। वा३। चो२३४५॥ ४॥

१ १ १र २ र र र र
II हौहो२। हौहो२। हौहोइ। इन्द्रेराजासमर्यौ-
१ १ १ २ र र
ना३मोभी२ः। ओभी२ः। ओभी२ः। यस्यप्रतिकमाऽऽहुत
१ १ १ र र
ङ्कृ३ताइना२। आइना२। आइना२। नरोहव्येभि-
र र १ १ १ १
रीडतेसा३बाधा२ः। बाधा२ः। बाधा२ः। हौहो२।
१र २र १ २
हौहोइ। आग्निरग्रमुषसा२३मश्राउ। वा३। चो
१ १ १ १
२३४५॥ ५॥ ७०

---

I,II इमे वैश्वज्योतिषे।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

त्रिशिरास्त्वाष्ट्रऋषिः।

३ १ २   २ १ २ ३ १र
प्र केतुना बृहता यात्यग्नि

२र  ३ १ २
रा रोदसी वृषभोरोरवीति।

'राजा' दीप्तः (१) 'अर्य्यः' स्वामी (२) हविषां प्रेरकोवा 'अग्निः' 'नमोभिः' स्तुतिभिः सह 'समिन्धे' समिध्यते। 'यस्य' अग्नेः 'प्रतीकं' रूपं (३) 'घृतेन आहुतं' भवति। ये च 'नरः' अस्मदीयाः 'सबाधः' संश्लिष्टाः सञ्जात-बाधाः(४) 'हव्येभिः' हव्यैः सार्द्धम् 'ईडते' स्तुवन्ति। 'सः' अग्नि 'उषसाम्' 'अग्रम्' 'आ अशोचि' आ दीप्यते॥ ८॥७०

'अग्निः' 'बृहता' 'केतुना' प्रज्ञानेन (१) युक्तः सन् 'आ' इदानीं 'रोदसी' द्यावापृथिव्यौ 'प्र याति' प्रकर्षेण गच्छति।

---

(१)—यद्यपि राजेति राजतोत्यैश्वर्य्यकर्मणोरूपम् (नि०२,२१,४) भवितुं युक्तं, परमिहोत्तरमीश्वर-वाचकापराय्य-शब्द-श्रुतेर्दीप्तार्थस्य प्रसिद्धस्यैव ग्रहणम्।

(२)—नि०२,२२,२। स्वामिनः प्रेरकत्वं सम्भवत्येव।

(३)—'प्रतीकं, नाम मुखं वा'-इति वि०।

(४)—'सबाधः ऋत्विजः'-इति वि०। युक्तं चैतत् तस्य निघण्टु-तृतीयाष्टादश-पञ्चम-पद त्वात्।

(१) —नि०७,९,२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३२ ३१२ ३१र २र
दिवश्चिदन्तादुपमामुदान
३२३१२ ३१२
ड़पामुपस्थे महिषोववर्द्ध ॥ ८ ॥ ७१

२र१ २ १र २१ २ १
I प्रकेतुना। बृहताया। तियग्नाइः। होइहोवा३होइ।
२र र २ २ १र २१र २ १
आरोदसाइ। बृषभोरो। रवीताइ। होइहोवा३होइ।
२ १ २र २१र १ २ १
दिवश्चिदा। तादुपमाम्। उदानाट्। होइहोवा३होइ।
२र१ २र१ २१ २र
अपामुपा। स्थेमहिषो। ववर्द्धा। होइहोवाहा३१उ।
२ १ १११
वा२३। दे३। दिवा२३४५म्॥ ६॥

किञ्च, देवानामाह्वान-काले 'वृषभः' (३) इव 'रोरवीति' अत्यर्थं शब्दं करोति। 'दिवश्चित्' अन्तरिक्ष-लोकस्यापि 'अन्तात्' पर्य्यन्तात् 'उपमाम्' (उपमेत्यन्तिक-नाम ४) मेघस्य समीपम् 'उदानट्' उदश्नुते ज्वलनात्मनादित्यात्मनावस्थितः सन् ऊर्द्ध्वं

---

७१ नास्तीयमुत्तरार्चिके। ४३

(३)—'वृषभः वर्षिता'—इति वि०।
(४)—नि०३,१६,११।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी ।

वसिष्ठऋषिः ।

२ २उ　२ १ २　२२ २
अग्निं नरोदीधितिभिररण्यो

५　२ र　२　५ १　२ ३ २
॥ हा । हाऔहोइ । प्रा२३४के । तुना । वृहता३ ।
२ ३ ४ ५　२ र　३ ५ १
यातियग्नोः । हा । हाऔहोइ । आ३४रो । दसाइ ।
२ ३ २　२ ३ ४ ५　२ र　३ ५
वृषभोइ । रोरवीति । हा । हाऔहोइ । दी२३४वाः ।
१　२ १　२ ३ ४ ५　२ र
चिदा । ता२दुप । मामुदानट् । हा । हाऔहोइ ।
२ ५ १ २ १ २ ३ ४ ५ २
आ२३४पाम् । उपा । स्थे२मह्वि । षोववर्द्धा । हा । हा
र　२ ५र र　२ १ १११
औहो । वा२३४औहोवा । ए३ । दिवा२३४५म् ॥७॥७१

व्याप्नोति । अश्नोतेर्व्यत्ययेन परस्मैपदम् । तिपोहल्ङ्यादि लोपः । 'अपां' वृष्टिलक्षणानामुदकानाम् 'उपस्थे' उपस्थाने अन्तरिक्षे (४) वैद्युतात्मना 'महिषः' महान् 'ववर्द्ध' वर्द्धते ॥८॥७१

---

I, II इमे यामे, इन्द्रस्य ।

(४)—'आपउपगम्य यत्र तिष्ठन्ति, तदपामुपस्थमन्तरिक्षम्. तस्मिन्नित्यर्थः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ २
हॅस्तच्यूतं जनयत प्रशस्तम्।
२ १ २ ३१२ ३ २
दूरेदृशं गृहपतिमथव्युम्॥ १०॥ ७२*

५र र र ४ ५ २१ २१ २१
I हाउहाउहाउ आग्नोम्। नराः। नराः। नराः।
२ १ २ ३४ ५र र र र ४ ५ २ १
दीऽधिति। भिररण्योः। हाउहाउहाउ। हास्ता। च्युताम्।
२ १ २ १ २१ २३४ ५ र र र
च्यूताम्। च्यूताम्। जनय। तप्रशस्तम्। हाउहाउहाउ।
४ ५ २ १ २१ २ १ २ १ २ ३ ४ ५
दूराइ। दृशाम् दृशाम्। दृशाम्। गृहप। तिमथव्युम्।
ऽ ऽ ऽ ३ १ १ १ १
हाउहाउहाउ। वा। ई२३४५॥ ८॥

'नरः' नेतारऋत्विजः 'प्रशस्तं' प्रकर्षेण स्तुतं 'दूरे दृशं' दूरे दृश्यमानं दूरे पश्यन्तं वा 'गृहपतिं' गृहाणां पालकम् 'अथव्युं' (अथर्वतिर्गत्यर्थः [१]) अगमम् अतनवन्तवा 'हस्तच्युतं' हस्तेन गतम् हस्तेन जातम्, अरण्यो विद्यमानम अग्निः 'दीधितिभिः'

---

७२ उत्तरार्च्चिकस्य ६,१,१०,१।

* यदुक्तं पुरस्तात् सप्तमखण्ड-भाष्यारम्भे 'अग्निर्नरोविराट्' इति तदिह साक्षात् प्रदृश्य प्रमाणीकार्य्यम्

(१)—अथर्यति-इति गति-कर्मसु नि०२,१४,९७। अथर्युमिति नैगम काण्डे ४,२,४१। उभवैव यकार-वकारात्मकः पाठ-भेदः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पर र र ४ ५ २ १ २ १
II हाउहाउहाउ। आग्नीम्। नराः। दीश्धिति।
२ ३ ४ ५र र र र र र ४ ५
भिररण्यो। ण्यो। ण्योः। हाउहाउहाउ। हास्ता।
२ १ २ १ २ ३ ४ ५
च्यूताम्। जनय। तप्रशस्तम्। स्तम्। स्तम्।
र र र ४ ५ २ १ २ १ २ ३ ४
हाउहाउहाउ। दूराद्। दृशाम्। गृहप। तीमथ-
५ ऽ ऽ ऽ २
व्यूम्। व्यूम्। व्यूम्। हाउहाउहाउ। वा। ई
१ १ १ १
२३४५॥ ८॥ ७२

इति द्वितीय-दशति॥

अङ्गुलिभिः(२) 'जनयत' जनयन्ति। [अत्र यास्कः—(३)"दीधितयो-

1,II अनयोर्वसिष्ठः प्रजापतिर्वा ऋषिः, राशिमरायं, सरायराशिनं वा स्फान्तिकरणं वा च्यावनं वा शैखण्डिनं वा द्वन्वकं वा नाम।

(२)—'दीधितयः'-इति नि०२,५,८।

(३)—यास्क-धृतेऽस्मिन् मन्त्रे 'जनयन्त', 'हस्तच्युती', 'अथर्युम्'-इति त्रयः पाठ-भेदाः परिलक्ष्यन्ते। किञ्च अथर्युमिति नानेन व्याख्यातम्। व्याख्यातमेतद् देवराज-यज्वना, तद्यथा,—'ऋततेः जनि-मनि-यजि-दमिभ्यो युच् निधीति बाहुलकाद्





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ङ्गुलयो-भवन्ति, धीयन्ते कर्म्मस्वरणी प्रत्यृतराने अग्निः समरणाज्जायत इति वा, हस्तच्युती हस्त-प्रच्युत्या जनयन्त प्रशस्तं दूरे दर्शनं गृहपतिमतनवन्तम् (५,२,११)”-इति ॥ १० ॥ ७२

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने,

प्रथमस्याध्यायस्य सप्तमखण्डः ॥ ७ ॥

---

अथ अष्टम-खण्डे—

प्रथमा।

बुधस्य गविष्टिरस्य द्यावृषी।

१ २ ३२ ३ २३ १ २ ३
अबोध्यग्निः समिधा जनानाम्

१ २ ३ १ २ ३१ ३ १ २
प्रति धेनुमिवायतीमुषासम्।

३ १३२ ३ २ ३ १ २ ३
यह्वा इव प्र वयामुज्जिहानाः

२ ३ १२ ३ २ ३ १ २
प्र भानवः सस्रते नाकमच्छ ॥ १ ॥ ७३

---

७३ उत्तरार्च्चिकस्य ८,३,१३,१ ।

युस-प्रत्ययो धातोः अथरादेशस्य, सकार इत्संज्ञकः। अतनं गमनं अथर्यु-शब्देनोच्यते। मत्वर्थीयस्य लुक्, गमनवन्तमित्यर्थः'।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५र   ४   १   २ १ २र   १ ५र   र   १   २
I अबोधिया। ग्राइःसमिधा। जना२नाम्। प्रताइधे३

२   र १र   र २   २ २ २   १ ५र १र २
नूम्। इवायतीमुषासम्। यह्वाई३वा। प्रवा२यामु

१ २र र   १र   २   र १र २ १ २   १
ज्जिहानाः। प्रभाना२३वाः। सस्रतेनाकमक्त। इडा२३

२   १
भा३४३। ओ२३४५इ। डा ॥१०॥ ७३

अयम् 'अग्निः' जनानाम् अध्वर्य्वादीनां 'समिधा'(१) समिद्भिः 'अबोधि' प्रबुद्धोभूत्। 'धेनुमिव' अग्निहोत्रार्थं धेनुं प्रति यथा प्रातर्बुध्यते तद्वद् 'आयतीम्' आगच्छन्तीम् 'उषासम्'(२) प्रति उषः काले इत्यर्थः। अथ प्रबुद्धस्याग्नेः 'भानवः' रश्मयोज्वालाः 'यह्वाः' महान्तः (३) 'वयां' (४) शाखां 'प्रोज्जिहानाः' प्रोद्गमयन्तोवृक्षाइव। यह्वामहान्तः प्रोज्जिहानाः स्वाधिष्ठानं

---

I श्येनः प्रजापतिर्वा ऋषिः, श्यैतं वा शयनं वा शायनं वा दीर्घायुष्यं वा नाम।

(१)—'समिन्धनेन'-इति वि०।

(२)—'वा ष-पूर्वस्य निगमे (६,४,९)'-इति सूत्रे अनवनतुदृत्तिमते तेनैव दीर्घः।

(३)—'पक्षिणः'-इत्यधिकोभावार्थः परिदृश्यते विवरण-ग्रन्थे।

(४)—'वयां, द्वितीयैकवचनमिदं पञ्चम्येकवचनस्य स्थाने द्रष्टव्यम्; वयायाः-इत्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

वत्सप्रिर्ऋषिः ।

२ ३ १ २ २ १ २ ३ २
प्र भूर्जयन्तं महां विपोधां

३ १र २र ३ २ ३ १ २
मूरैरमूरं पुरान्दर्माणम् ।

१ २ ३ २ ३ १र २र ३
नयन्तङ्गीर्भिर्वनां धियं धां

१ २ ३ १र २र ३ २
हरिश्मश्रुं न वर्मणा धनर्च्चिम् ॥२॥ ७४

त्यजन्तोभानवः 'नाकम्' अन्तरिक्षम् (५) 'अच्छ' आभिमुख्येन 'प्र सस्रते' प्रसरन्ति ॥

"सस्रते"-"सिस्रते"-इति पाठौ ॥१॥ ७३

हे स्तोतः ! त्वम् 'जयन्तम्'(१) असुर-सेनानां जेतारं 'महां'

---

७४ नास्तीयमुत्तरार्च्चिके । ४४

(५)—'नाकं द्युलोकम्'-इति वि० । नाकमिति निघण्टौ दिवआदित्यस्य च साधारण-नामसु दृतीयम् । 'सूर्य्यायु-स्थानः'-इति नैरुक्ताद्यम-शासनाद् आदित्य-पर-पक्षेऽपि द्यु-लोक-परं सुलभम्, अन्तरीक्ष-परन्तु कृच्छ्र-लभ्यम् ।

(१)—'प्रेत्ययं जयन्तमित्यनेन सम्बन्धयितव्यः, भूः प्रथमैकवचनमिदम् द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्, भुवं पृथिवीलोकं जयन्तम्, भूर्ग्रहणञ्च प्रदर्शनार्थम् त्रीनपि लोकान् जयन्तम्'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५र ४ ५ ४ २ २ २ ३र ५र २र १२ र
I प्रभूर्जयन्ताम्। महा३४३०विपोधाम्। मूरैरमूरं पुरां
० २ २ २ २ ३र ५ २ २ २ ३ ५र
दर्मा३३णाम्। नया३४३न्तङ्गीर्भिः। वना३४३धियन्धाः।
४ ५ ४ ५ २ १ १ १ १ १
हरिश्मश्रुं नवर्मणाई। हाउवा। धना३र्ची२३४५म्॥११॥७४

महान्तं 'विपोधां' (२) मेधाविनः (३) धर्तारं 'मूरैः' मूढैरधिष्ठितानां 'पुरां' शरीराणां 'दर्माणं' आदरेण रचकम् 'अमूरम्' अमूढमग्निं 'प्रभूः' स्तोतु प्रभव समर्थीभव 'गीर्भिः' स्तुतिभिः 'वना' वननीयं सम्भजनीयं 'नयन्त' धनानि प्रापयन्तं 'वर्मणा' कवच-स्थानीय-ज्वालयोपेतं 'हरिश्मश्रुं न' (४) हरित-वर्ण-केशमयमिव 'धनर्चिं' धार्यमाणं क्रियमाणं स्तोत्रं यस्य तम्, प्रीणनकर-स्तोत्रं वा अग्निमुद्दिश्य 'धियं' परिचरण-रूपं कर्म 'धाः' विधेहि॥

"मूरैः"-"मूराः"-इति च पाठौ॥ **'नयन्तं गीर्भिर्वना धियन्धा हरिश्मश्रुं न वर्मणा धनर्चिम्"**-इति छन्दोगाः, **"नयन्तोगर्भं वनां धियं धुर्हरिश्मश्रुं नार्वाणं धनर्चम्"**-इति बह्वचाः॥ २॥ ७४

---

I पौषम्।

(२)—'वेपइति कर्म-नाम (नि० २, १, १) तस्येदमादि-कुशलम्, स्व-कर्मणः हविर्वह-नादेर्धारयितारम्'—इति वि०।

(३)—विपइति निघण्टौ मेधावि-नामसु चतुर्दशतमम्।

(४)—हरिश्मश्रुम्, श्मश्रु-स्थानीय-हरित-वर्ण-ज्वाला-समेतम्। न शब्दः पाद-पुरणे-इति वि० सम्मतोर्थः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

भरद्वाजऋषिः।

२ १ २ ३ १ २ ३ १ २ ३ १र
शुक्रं ते अन्यद्यजतं ते अन्यद्
२र ३ १ २ ३ १ २
विषु रूपे अहनी द्यौरिवासि।
२ ३ २ ३ १र २र
विश्वा हि माया अवसि स्वधावन्
३ १ २ ३ २ ३ १ २
भद्रा ते पूषन्निह रातिरस्तु ॥ ३ ॥ ७५

हे 'पूषन्'! 'ते' तव 'शुक्रं' शुक्लवर्णम् 'अन्यत्' एकमहर्भवति वासरात्मकम्, तथा 'ते' तव सम्बन्धि 'यजतं' [यजिरत्र सङ्गतिकरणे (१) वर्त्तते] यजनीयं प्रकाशेन सङ्गमनीयं स्वतः कृष्णवर्णम् 'अन्यत्' एकमहर्भवति रात्र्याख्यम्। इत्थं 'विषु रूपे' शुक्ल-कृष्णतया नानारूपे 'अहनी' तव महिम्ना निष्पद्येते। यद्वा। हे पूषन्! त्वदीयमन्यद्रूपं 'शुक्रं' निर्मलं दिवसस्योत्पादकम्, त्वदीयमन्यदेकं रूपं 'यजतं' केवलं यजनीयं न प्रकाशकं रात्रेरुत्पादकम्। अतएव 'विषु रूपे' विषम-रूपे 'अहनी' अहश्च रात्रिश्च भवतः। अहोरात्रयोर्निर्माणे सूर्य्यएव कर्त्ता।

---

७५ नास्तीयमुत्तरार्च्चिके। ४५

(१)—'यज देवपूजा-सङ्गतिकरण-दानेषु'-इति भ्वा० उभयपदिषु।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४ र५ ४ ५ ४ ५ ५ १ रर
I शुक्रंतेअन्यद्यजतम्। तआाइन्यात्। विषुरूपे
र ७ २ १ र र र
अहनिद्यौः। इवा२३सी। वाइश्वाहिमायाअवसाइ।
२ २ १र २र १ २ १ २ २४ ५
स्वधा३वान्। भद्रा ते। पू। षा३निह। रातिरस्तु।
४
तिरा५स्तृहाउवा॥ १२॥ ७५

कथमस्य प्रसक्तिरिति? तत्राह,—'द्यौरिवासि' यथा द्यौरादित्यः प्रकाशयिता तथा त्वं प्रकाशकोऽसि। कुतः? इत्यत आह,—हे 'स्वधावन्!' अन्नवन्! (२) पूषन्! 'विश्वाः' सर्व्वाः मायाः प्रज्ञाः 'हि' यस्मात् कारणाद् 'अवसि' रक्षसि, अतः कारणात् त्वं सूर्य्य-इव भवसीत्यर्थः। तादृशस्य 'ते' तव 'भद्रा' कल्याणी 'रातिः' दानम् 'इह' अस्मासु 'अस्तु' भवतु(३)। यास्कस्त्वाह—"शुक्रं तेऽन्यल्लोहितं तेऽन्यद्यजतं तेऽन्यद्यज्ञियं तेन्यद्विषमरूपे ते अहनी कर्म्मणा द्यौरिव चासि सर्व्वाणि प्रज्ञानान्यवस्यन्नन्नवन् (१२,२,६)" इति॥

"स्वधावन्"-"स्वधावः"(४) इति च पाठौ॥ २॥ ७५

---

I शुक्रम्।

(२)—स्वधेत्यन्न-नामसु विंशतितमम् (नि० २, ७, २०)।

(३)—क्वचित् 'ते अन्यत'-इति पाठः, 'प्रकृत्यान्तःपादमव्यपरे (६, १, ११५)'-इति साधनीयः।

(४)—'मतुवसो रुसम्बुद्धौ छन्दसि (८, ३, १)'-इत्यादिना सिद्धम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

विश्वामित्रऋषिः।

१ २ ३ १ २ २ १र
इडामग्ने पुरुदꣳसꣳ सनिं गोः
२र ३ १र २र
शश्वत्तमꣳ हवमानाय साध।
१ २ ३ १र २र ३ २उ
स्यान्नः सूनुस्तनयो विजावा
३ १ २ ३ १ २ ३ २
ग्नेसा ते सुमतिर्भूत्वस्मे ॥ ४॥ ७९

५ २ २ २ ३ ४ ५ ४ २ ४
I इडामग्नाइ। पुरुदा३। सꣳसनिंगोः। शश्वत्तमꣳहव
५र र २ ५ १र र २ २
माना। यसा२३४धा। स्यान्नसूनुस्तनयः। विजा३वा३।
४ ५ ४ ५ २ २ २ ४र ५ २
आग्नेसाताइ। सुमा३४३। तीः३ः। भूतुद्दाउवा। स्मा
१ १ १ १
२३४५इ ॥ १३ ॥ ७९

हे 'अग्ने !' 'पुरुदंससं' [ 'दंसः वेषः'—इति (नि० १२,१,३) कर्म्म-नामसु पठितत्त्वाद्दंसः-शब्दः कर्म्म-वाची ] पुरूणि बहूनि

---

७९ नास्तीयमुत्तराच्चिंके। ४६
I कौत्सम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

वत्सप्रिर्ऋषिः*।

१र २र २ २ ३ १ २ ३ २
प्र होता जातो महान्नभोविन्
२ १ २ ३ १ २ ३ २
नृषद्मा सीददपां विवर्त्ते।

दंसांसि कर्म्माणि यस्याः सा, तां बहु-कर्म्माणं 'गोः सनिं' (१) गवादि-पशूनां सम्पादयित्रीं 'इडाम्' (२) एतन्नामिकां गो-रूपां देवतां 'शश्वत्तमं' निरन्तरं 'हवमानाय' यजमानाय मह्यं 'साध' साधय। किञ्च। 'नः' अस्माकं 'सूनुः' पुत्रः 'तनयः' पौत्रः 'स्यात्' भवतु—इति 'ते' तव या 'सुमतिः' शोभना बुद्धिः सा 'विजावा'(३) अवन्ध्या सती 'अस्मे'(४) अस्माकं 'भूतु'(५) भवतु॥ ४॥ ७६

'यः' अग्निः 'अपाम्' [ अन्तरिक्ष-नामैतत् ( नि० १, ३, ८) ]

---

* 'वत्सप्रीः'-इति वि० पाठः।

(१)—"छन्दसि वन-सन-रक्षिमथाम् (३,२,२७)"-इति इनि रूपम्। 'षणदाने, तत्पूर्वकत्वाल्लाभउपलक्षते; सनिं च लाभं च गोः'-इति वि०।

(२)—'इडामन्नमिति (नि० २, ७, १६) वि०। 'कीदृशमन्नम्? पुरुदंससमिति च वि०। एतदुक्तम्भवति—'अन्नं गावश्च अस्मभ्यं देहीत्यपि वि०।

(३)—विजावेति तनय-विशेषणमिति वि०-मतम्। तथाचोक्तम्—'कीदृशः पौत्रः उच्यते—'विजावा' विविधं जनयिता पुत्राणाम्, अनेन प्रकारेण वंशस्याविच्छेद आशास्यते'-इति वि०।

(४)—सुपां सुलु गित्यादिना (७,१,३९) विभक्तेः शे-भावे, 'शेश्छन्दसि बहुलम् (६,१,७०) इति सिद्धम्।

(५)—विकरणाभावादिकं सर्वं बाहुलकात् (२,४,७३)।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३ २ ३ २ ३ १र २र
दधद्यो धायी* सुते वयांसि
३ १र २र ३ १ २ ३ २
यन्ता वसूनि विधते तनूपाः ॥ ५ ॥ ७७

अन्तरिक्षस्य 'विवर्त्ते' (१)विवर्त्तनउत्सङ्गे वैद्युत-रूपेण निषण्णोऽभूत्, सइदानीं 'होता' यजमानानां होम-निष्पादकोजातः प्रादुर्भूतः 'महान्' गुणैः पूज्यः। 'नभोवित्' अन्तरिक्षस्य ज्ञाता यतस्तत्रोत्पन्नः अतस्तस्य ज्ञाता 'नृषद्मा' नृषु सीदन् [सदेर्मनिन्, नित्स्वरः (६,१,११७)] 'प्रसीदत्' वेद्यां प्रसीदति। "अपामुपस्थे महिषा अगृभ्णत"-इति हि निगमः(२)। यद्वा, अपामयसामित्यर्थः, कर्म्मणामुपस्थे(३) उपस्थाने समीपे वेद्यामुक्तलक्षणः सन्। अथवा, अपाम् उदकानां(४) विवर्त्ते मध्ये योऽग्निर्हविर्वोढुमसहमानो निगूढः सन् स देवैः पुनः प्रार्थितः, उक्तविधः सन् वेद्यां प्रसीदति, सोऽग्निः 'दधत्' हवींषि धारयन् 'सुधायी'(५) वेद्यां निहितोऽभूत्। हे स्तोतः! सोऽग्निः

* प्रतीच्यमुद्रितपुस्तके, भाष्ये च'धायि'-इति ह्रस्वान्तपाठः।

७७ नास्तीयमुत्तरार्च्चिके।४७

(१)—'आपो यत्र विविध वर्त्तते सोऽपां विवर्त्तः अन्तरिक्षलोकः'—इति वि०।

(२)—नैरुक्त-सप्तमाध्यायीय-सप्तमपादस्य तृतीये खण्डे एतद्विमर्षोद्रष्टव्यः।

(३)—अपः-इति नि० २,१,१ कर्म-नामसु।

(४)—आपः-इति नि० १,१२,५१ उदक-नामसु।

(५)—'धायीसुते'-इत्येवं पाठोमन्त्रे। तत्र 'छन्दसि परेऽपि (१,४,८१)' इति व्यासन-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ र ५र र ४ २ १र र र २
I प्रहोताजाता:। महान्नभोविन्नृषद्मा२३सीदात्।
१र २ र १र
अपांविवर्त्ताइ। दधद्यो२३धा। याइ। सुतेवया॑ᳬसि-
२ २ १ र २ १ २ ५रर
यन्ताउ। वा। वासूनिविध। ता२। या२३४ओहोवा।
२ १ १ १ १ १
तनू३पा२३४५ः॥१४॥

४ र ५र र ४ ५ ४ ५ १ १
II प्रहोताजातः। उऊवाहाइ। माहा२न्नाभो२।
१ र र ७ २ १ २ २ १ २
वाइन्नृषद्मासीददपांविवा२३र्त्ताइ। आऔ३हो। इहा।

'विधते' परिचरते 'ते' तुभ्यं 'वयांसि' अन्नाजि (५) 'वसूनि' धनानि च 'यन्ता' नियमयिता भवतु। किञ्च, तनूपाः, 'तन्वः'(६) पाता च भवत्वितिशेषः॥

"नृषद्मा"-"नृषद्वा"-इति च पाठौ। "दधद्यो धायी सुते"-इति छन्दोगाः, "दधिर्यो धायी सते"-इति बह्वृचा॥ ५॥ ७७

---

I,II इमे काश्यपे।

बलात् 'सुधायी'-इत्येवं स्थापनं शक्य-परम्। वि०-मते तु 'धायी' धारयिता हविर्वहनादि-कर्मणः-इत्येकं दलमग्नि-विशेषणम्, सुते इत्येकं पदमभिषुते-इति तदर्थः। पदकारस्तु 'धायी,' 'सुते'-इत्येवमेव चिच्छेद।

(५)—वयः-इति नि० २,७,९।

(६)—'तन्वादीनां छन्दसि बहुलम्'-इति वचनम (६,४,७७)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

वसिष्ठऋषिः।

२ ३ २ ३ १ २ ३ २
प्र सम्राजमसुरस्य प्रशस्तं
२ १ २ ३ १ २ ३ १ २
पुंसः कृष्टीनामनु माद्यस्य।
१ २ ३ २ ३ १ २ ३ १ २
इन्द्रस्येव प्र तवसस्कृतानि
३ १ २ ३ १ २
वन्दद्वारा वन्दमाना विवष्टु॥ ६॥ ७८

१ १ १ र र र २ १
दाधा२द्योधा२। याइस्तुते वयाꣳसियन्तावसू२३नो। आ
२ २ १ २ १ २ १ ३ ५ र र
औ३हो। इहा। विधताये३। तनू२पा२३४औहोवा।
२ र ३ १ १ १ १
हविष्मते२३४५॥१५॥७७

'असुरस्य' बलवतः(१) 'पुंसः' वीरस्य [पौंस्यमिति वीर्यमुच्यते(२) तथाच यास्कः—'पुमान् पुरुमना भवति पुंसतेर्वेति] 'कृष्टीनां'

---

७८ नास्तीयमुत्तरार्च्चिके। ४८

(१)—'प्राणवतः'-इति वि०। "असुरिति प्राणनाम"—इति नै०३,२,९। तेन तद्वान् असुरः। प्राणबलयोरेकार्थता प्रायः प्रसिद्धा।

(२)—पौंस्यानि-इति नि० २,९,२६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र २ २ ३ ४ ५ २ १
I प्रसंम्राजाम्। असुरा३। स्याप्रशस्ताम्। पु(ं)सः
२ १ २ ३ ४ ५ २ र २ ३
कृष्टाइ। ना३मनु। मादियस्या। इंद्रस्येवा३४३प्रतव।
२ ३ ४ ५ २ १ र २ र १ २ र र १ २ ५ र र
सस्कृतानि। वन्दद्वारावन्दमाना। विवा२ष्ट२३४ओहोवा।
२ ५
वो२३४आ: ॥ १६ ॥ ७८

जनानाम् 'अनु माद्यस्य' स्तुत्यस्य 'तवसः'(२) बलवतः 'इन्द्रस्येव'(३) तस्याग्नेः प्रशस्तम् (४) उत्कृष्टं 'सम्राजं' सम्यग्राजमानं स्वरूपं प्रस्तौतु। तथा 'वन्दद्वारा'(५) वन्दनं वन्दः स्तुतिः, तद्द्वाराणि स्तुति-प्रमुखानि 'वन्दमाना' सर्वैः स्तूयमानानि 'कृतानि' कर्माणि 'प्र विवष्टु' प्रकर्षेण-कामयताम् ॥

**"प्रसम्राजमसुरस्य प्रशस्तम"**-इति छन्दोगाः; **"प्रसम्राजो असुरस्य प्रशस्तिम्"**-इति बह्वृचाः। **"वन्दद्वारा वन्दमाना विवष्टु"**-इति, **"वन्दे दारुं वन्दमानो विवक्मि"**-इति च पाठौ॥ ६ ॥७८

---

I घृताचेराङ्गिरसस्य साम।

(२)—तवः-इति नि० २,९,५। पदमेतत् 'इन्द्रस्य'-इत्यस्य विशेषणम्।

(३)—'यथा इन्द्रस्य कृतानि वृत्र-वधादीनि कर्माणि कश्चिद् वदति, तद्वदग्नेरपि कृतानि कर्माणि हविर्वहनादीनि 'प्र वदतु' प्रकर्षेण स्तौति'—इति वि०।

(४)—विवरण-कृन्मतेऽसौ द्वितीया षष्ठ्यर्थे, तथाचेदमपि पदमिन्द्र-विशेषणम्।

(५)—विवरण-मते 'वदद्वारा'-इति पाठः। प्रेत्यनेन च वददित्यस्य सम्बन्धः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

विश्वामित्रऋषिः।

३ २ ३ १ २र ३ १ २ ३
अरण्योर्निहितो जातवेदा
१ २३१र २र ३१२
गर्भइवेत्सुभृतो गर्भिणीभिः।
३ १ २३१२ ३१२
दिवे दिवईड्योजागृवद्भि-
३१२ क२र ३ २
र्हविष्मद्भि र्मनुष्येभिरग्निः॥ ७॥ ७९

५ २ र २३र५र २ ४ ३र ४ ५र
I अरण्योः। निहितोजा३४३तवेदाः। गर्भइवेत्सुभृतो-
३ ५ २१र रर ७ २
ग। भिणा२३४इभीः। दिवेदिवईड्योजागृवा२३द्भीः।

'जातवेदाः' सर्व-विषय-ज्ञानवान् 'अयम्' अग्निः 'अरण्योर्नि हितः' देवैर्यज्ञार्थं नितरां स्थापितः। तत्र दृष्टान्तः—'गर्भः इव'-

---

७९ नास्तीयमुत्तरार्च्चिके। ४९

I भरद्वाजस्य, प्रासाहम्।

तथाच,—'प्रवदत्' प्रकर्षेण स्तौति 'वारा' वारं वरणीयं 'वन्दमाना' वन्दमानं स्तुवन्तं 'विवष्टु' विविधं कामये-इत्यर्थः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

पायुर्ऋषिः।

२ १ २    ३ २ ३
सनादग्ने मृणसि यातुधानान्
२ ३ १ २  ३ १ २
न त्वा रक्षांऽसि पृतनासु जिग्युः।

२ ५ २ ५ ४र ४ ५र
हा२३४वी। आ२३४ङ्गोः। मनुष्येभिरग्निः। एह्रियाइ
५ ४
हा। होपुइ। डा॥१७॥७९

इति, यथा गर्भोगर्भिणीभिः स्त्रीभिः 'सुभृतः' सुष्ठु धार्यते तद्वत्। स तादृशोऽग्निः 'हविष्मद्भिः' सम्भृत-हविष्कैः अतएव 'जागृवद्भिः' कर्मणि जागरूकैः 'मनुष्येभिः' मनुष्यैरस्माभिः 'दिवे दिवे' प्रत्यहं स्तुत्यर्थम् 'ईड्यः' स्तुति-रूपाभिर्गीर्भिः स्तोतव्यः(१)॥

"सुभृतोगर्भिणीभिः"-इति, "सुधितोगर्भिणीषु"-इति च पाठौ॥ ७॥ ७९

हे 'अग्ने'! त्वं 'सनात्' चिरादेवारभ्य 'यातुधानान्' कु-व्यापारेण युक्तान् 'क्रयादः' क्रव्यादोमांस-भक्षकान् राक्षसान्(०)***

---

(१)—इह मन्त्रे अुतइच्छन्दः पाद-पूरणार्थएवेति न व्याख्यातः।

(०)—इह किञ्चित् पाठोनष्टइति लक्ष्यते, मृणसीत्यादेर्व्याख्यानादर्शनात्। विष-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ १ २ ३ २ ३
अनु दह सह मूरान् कयादो
१ २ ३ १ २ ३ १ २
मा ते हेत्या मुक्षत दैव्यायाः॥ ८॥ ८०

३ २ २ २ १२ २ १
I अहा। वो३हा। वो३हा। सनादग्नाइ। मृणसि।
२ ३४ ५ २ १२ २ १ २ २ ३ ५
यातुधानान्। नत्वारक्षा। सी३पृत। नासुजिग्यूः।
२ १ २ १२ २ ३४ ५ २ २ २
अनुदहा। सहमू। रान्कयादाः। अहा। वो३हा।

'दह' तेजसा भस्मीकुरु। किञ्च। तव सम्बन्धिनो 'दैव्यायाः'

---

८० नास्तीयमुत्तरार्च्चिके। ५०

I अग्नेर्वैश्वानरस्य अत्रेर्वा, राक्षोघ्नम्।

रणकारस्त्वस्यैवं व्याख्यानं कृतम्—हे 'अग्ने' त्वं 'मृणसि' मारयसि 'यातुधानान्,' राक्षसान् [नेत्ययं प्रतिषेधो जिग्यु रनेन सम्बन्धयितव्यः] 'त्वा' त्वां 'रक्षांसि 'पृतनासु' सङ्ग्रामेषु (नि०२,१६,९) 'न जिग्युः' न जयन्तीत्यर्थः, सर्वदा अपराजेता एव, अतो ब्रवीमि—'अनुदह'। 'सह मूरान्' सह मूतान् मूढान् मूर्खानित्यर्थः। 'कयादः' क्रव्य-शब्दस्य रेफवकारयोश्छन्दसि वर्णलोपेन कयइत्येतद् भवति, तानि ये अदन्ति ते कयादः, तान्, मांसस्य भक्षितृनित्यर्थः। किञ्च 'मा ते' 'हेत्याः' हेतिर्वधः तस्य मांसम 'मुक्षत' अमुचत इत्यर्थः दैव्यायाः देवानां स्वभूतायाः; सर्वदा देवैर्दत्तस्यामित्यर्थः"-इति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२　　२ १ २र १　　२ १　　२　　२ ४
वोऽ३हा । माताइहेत्याः । मुञ्चत । दाऽ३४ऽ३इ । वोऽ३या

पूयाई५ई ॥ १८॥ ८०

इति तृतीय-दशति ॥

दैव्यात् 'हेत्याः'(२) 'आयुधात्' ते यातुधानाः 'मा मुञ्चत' मुक्ता मा भूवन् ॥

"कयादः"-"क्रव्यादः"--इति च पाठौ ॥ ८ ॥ ८०

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
प्रथमस्याध्यायस्य अष्टमखण्डः ॥ ८ ॥

---

षोडशानुष्टुभोह्यग्नओजिष्ठमिति खण्डयोः ।
सोमंराजानमित्येषा वैश्वदेवी ततः परा ।
स्तुतिरङ्गिरसां शिष्टाः आग्नेय्यस्तु चतुर्दश (०) ।

---

(२)—हेतिः—नि०१,२०,२ । ऊति-यूतीत्यादिना (३,३,९७) सिद्धम् ।

(०)—अग्नओजिष्ठमाभरेत्यादि-नवम-दशम-खण्डयोः प्रथमे दश, उत्तरे षट्-इति षोड़श ऋचः सन्ति । तत्र दशम-खण्डारम्भकं सोमंराजानमिति, अस्याः विश्वेदेवा देवताः, तदत्यवहित-श्रुता इतएतेति, सा तु अङ्गिरसां स्तुतिः, तदितराः सर्वाएव आग्नेय्यइति विवेकः ।

३०क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमि खण्डे —

सेयं प्रथमा।

गयत्रिर्ऋषिः।

२ ३ १ २ ३ १ २ ३ २ ३ १ २

अग्न ओजिष्ठमाभर द्युम्नमस्मभ्यमध्रिगो।

१ २ ३ १र २र ३ २ ३ १ २ ३ १ २

प्र नो राये पनीयसे रत्सि वाजाय पन्थाम्॥ १ ॥ ८१

हे अग्ने! 'ओजिष्ठं'(१) बलवत्तमं 'द्युम्न' द्योतते कटक-मुकुटादि-रूपेण सर्वत्र काशतेइति द्युम्नं(२) धनम् अस्मभ्यम् 'आभर' आहर। हे 'अध्रिगो!' अधृत-गमन! [अधृतमप्रतिहतं गमनं यस्येति, अधृता अनिवारिता गावोरश्मयोयस्येति वा, अध्रिगुः(३), तस्य सम्बोधनं हे अध्रिगो] 'पनीयसे' पनीयसा स्तोतव्येन 'राये' राया धनेन। [सुपां सु लुगिति (७,१,३९) शे आदेशः] 'नः' अस्मान् प्रकर्षेण योजय। 'वाजाय' अन्नस्य लाभाय 'पन्थाम्'

---

८१ नास्तीयमुत्तरार्च्चिके। ५१

(१)—ओजः-इति निघण्टौ द्वितीय-नवमे बल-नामसु प्रथमं पदम्।

(२)—'द्युम्नम्'-इति निघण्टौ द्वितीय-नवमे धन-नामसु त्रयोदशतमम्। द्यासाह्याद्युम्नमित्यादिना द्युत-दीप्तावित्यस्मात् नञ् प्रत्ययो मकारान्तादेशश्च निपात्यते।

(३)—'अधृत-शब्दस्याध्रिभावः, गमनं गौः'-इति निघण्टु-भाष्यम्। रश्मि-नामस्वपि गो-शब्दः परिलक्ष्यते, तथाहि-'गावः'-इति नि० १,५,२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २ ५ २र १ २ २
I आग्नाओ२३४वा । ओजिष्ठा३मा । भाराओ२३४
५ २ १ २ १ २ २ ५
वा । द्युम्नमस्मभ्यमध्रिगो३ । ओइ । प्रानाओ२३४वा ।
२र १र ६र १ २ २ ५ १र २र १ २
रायेपनो २यसे३ । ओइ । रात्साओ२३४वा । वाजायपन्था
१ १ १ १
२३४५म् ॥ १९ ॥

४ ५ १र २ २ ३र
II अग्नेद्दाउ । ओजि । ष्ठामा१भारा । औहो२३४
५ २ १ ७ २ ३र ५ १ र
वा । द्युम्नस्म । भ्यामध्रीगा । औहो२३४वा । प्रनो-
र र २ २ ३र ५ १ १
राये । पानो१यासा । औहो२३४वा । रात्सी२वाजा२ ।
१ २ १ ५ ४ ५
यपीवा३ । ओ२३४वा । था५वोईहाइ ॥ २० ॥ ८१

पन्थानम् अन्नस्य, मत्समीप-प्राप्ति-साधनं मार्गं, 'रत्सि'(४) विलिख कुर्वित्यर्थः ॥

"प्र नो रायें पनीयसे"-इति छन्दोगाः; "प्र णो राया परीणसा"-इति बह्वृचाः ॥ १ ॥ ८१

---

I, II इमे पाये हे ।

(४)—'रद' विलेखने आदिः, द्वितीयाध्यायीय-बहुल-वचनाच्छपोलुक ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

वामदेवऋषिः, भरद्वाजोवार्हस्पत्योवा।

१ २ ३ २उ ३ २ ३ १ २ ३ १ २
यदि वीरो अनु ष्यादग्निमिन्धीत मर्त्यः।
३ १ २ ३ १ २ ३ १र २ ३ १ २
आ जुह्वद्धव्यमानुषक् शर्म्म भक्षीत दैव्यम्॥ २॥ ८२

२ २ र ३र ४ ५र २र २ ५ ४ २
I यदिवीरो अनुष्यात्। ऐया३४३ई३४या। अग्नि
४ ५र र ऽ २ १ ऽ १ १
मिन्धीतमौ। हो३हा३। हो२३४र्त्तियाः। आजु२ह्वा
१ २ ५ १ २ १ २
द्वा२३। व्यमा२नू२३४षाक्। शर्मभ। क्षाइ। तदा३
२ २ १ ५ ३ १ १ १ १
हा३इ। वा३ओ२३४वा। व्या२३४५म्॥ २१॥ ८२

'यदि' यदा 'यस्य' मनुष्यस्य 'वीरः' पुत्रः 'स्यात्' भवति, तदा सः 'मर्त्यः' 'अग्निमिन्धीत' आधानमादधीत कुर्वीत। किञ्च। 'आनुषक्' अविच्छिन्नं यथा भवति तथा 'हव्यम्' 'आ जुह्वत्'

---

८२ नास्तीयमुत्तरार्च्चिके। ५२
I बृहत्, आग्नेयम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

द्वयोर्भरद्वाजऋषिः।

३ १ २ ३ १ २ ३ २उ ३ १२ २२
त्वेषस्ते धूम ऋण्वति दिवि सञ्छुक्र आ ततः।
२ २उ ३ २उ ३ १ २ ३ १ २
सूरो न हि द्युता त्वं कृपा पावक रोचसे ॥ ३ ॥ ८३

२२ १ ४२ ५ २ १ २
I त्वेषास्ते२३धूमऋण्वतिद्वाउ। दिविसंच्छुक्रा३आताता

आभिमुख्येन जुहोति। अपिच। 'दैव्यं' देव-सम्बन्धि 'शर्म्म' गृहं सुखं वा 'भक्षीत' भजेत सेवेतेत्यर्थ(१) ॥ २ ॥ ८२

हे अग्ने! 'त्वेषः' दीप्तस्य 'ते' तव 'शुक्रः' शुक्लोनिर्मलः शुभ्र-वर्णोवा 'धूमः' 'दिवि' अन्तरिक्षे 'आ ततः' विस्तीर्णः 'सन्' 'ऋण्वति' मेघात्मना परिणतोगच्छति। अपिच। हे 'पावक!'

---

८३ नास्तीयमुत्तरार्च्चिके। ५३
I यामम्।

(१)—'यदि' 'मर्त्यः' 'हव्यम्' 'आनुषक्' आनुपूर्व्वेण 'आजुहवत्' अग्निम् 'इन्धीत', तर्हि 'वीरः' 'स्यात्', किञ्च 'दैव्यं' 'शर्म' 'भक्षीत' लभेतेत्यर्थः; अन्विति पाद-पूरणः—इति वि०-सम्मतोर्थः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

१र २र३१र २र ३ १र २र
त्वꣳ हि चैतवद्यशोऽग्ने मित्रो न पत्यसे ।
१ २ ३ २ ३ १ २ ३ १र २र
त्वं विचर्षणे श्रवो वसो पुष्टिं न पुष्यसि ॥ ४ ॥ ८४

४र र ५ २ १ २ ४ र ५
३: । सूरोनहोहाउ । द्युताद्ववाइम् । क्रपापवाहाउ ।
२ १र २ १
करोचार२३सा३४३इ । ओ२३४५इ । डा ॥ २२ ॥ ८३

शोधक ! अग्ने ! 'सूरोन' सूर्य इव 'क्रपा'(१) स्तोतव्याभिमुखीकरण-समर्थया स्तुत्या स्तूयमानस्त्वं 'द्युता' दीप्त्या 'रोचसे हि' प्रकाशसे खलु ।

"दिवि सन्"-इति, "दिवि षन्"-इति च पाठौ(२)॥३॥८३

हे 'अग्ने !' 'त्वं हि' त्वं खलु 'चैतवत्' चितिः चयोऽपचयः तत्सम्बन्धि चैतं शुष्क-काष्ठं, तद्युक्तं 'यशः' अन्नं (नि०२,७) हविर्लक्षणं 'पत्यसे' अभिपतसि गच्छसि । तत्र दृष्टान्तः—'मि-

८४ नास्तीयमुत्तरार्च्चिके । ५४

(१)—'क्रपा'-इति निघण्ट,-तृतीय-चतुर्दशे अर्चति-कर्मसु द्वादशं पदम्, ततः सुपामित्यादिना (७,१,३९) तृतीयायालुक् ।

(२)-'पूर्वपदात् (८,३,१०६)'-इति षत्व-वैकल्पाच्च सिद्धमेव ।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



I त्वꣳ हि चैतवद्यशः। इयइयाहाइ। अग्नाइमि। त्रो। नापत्या२३४साइ। आओ३४हो। इयाहाइ। त्वंवि। चा। षणो२आ२३४वाः। आओ३४हो। इया-हाइ। वासा३उवा। पु। ष्टाइम्। नापुष्या२३४सी। आओ३४हो। इयाहा। हो५इ। डा॥ २३॥ ८४

त्वेन' अहरभिमानी मित्रोदेवः(१) सइव [यद्वा। चयइति गृह-नाम (नि०३,४) 'चैतवत्' चैतं निवासकं हविर्लक्षणमन्नं तद्युक्तम् यजमान-गृहं मित्रभूतः पुरुधाभिपतसि। यद्वा। पत्यतिरैश्वर्य-कर्मा, (नि०२,२१) ईदृशमन्नं 'पत्यसे' ईशिषे] अतः कारणात् हे 'विचर्षणे!' विशेषेण सर्वस्य द्रष्टः! 'वसो!' वासकाग्ने! त्वं 'श्रवः' श्रवणीयमन्नम् (नि०२,७) अन्न-कार्य-भूतां 'पुष्टिं' च पुष्यसि वर्द्धयसि॥ ४॥ ८४

---

I बृहच्चैवाग्नेयम्।

(१)—स च अन्तरिक्षस्थः, नैरुक्तो (१०,२,८-९) वाय्वादिषु परिगणितत्वात्। 'मित्रो जनान्यातयति ब्रुवाणोमित्रोदाधार पृथिवीमुतद्याम्। मित्रः कृष्टीरनिमिषाभिचष्टे मित्रापहव्यं घृतवज्जुहोत'-इति ऋक् च तत्रैवोदाहृतम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

मृक्ता*वाहाद्वितऋषिः।

३ २३ १ २ ३ २ ३ १ २ ३ १ २
प्रातरग्निः पुरुप्रियो विशस्तवेतातिथिः।
२ २ ३ १ २ ३ १ र २र ३ १ २
विश्वे यस्मिन्नमर्त्ये हव्यं मर्त्तास इन्धते॥ ५॥ ८५

५र र ५ २ १ र १
I प्रातरग्नाइः पूईरुप्रियाः। विशास्तवे। ता२३। अ-
२ २ १ २ १ ३ ५ १
तिथाइः। वाइश्वेयास्मीइन्। अमा२र्त्ता२४याइ। हव्या

'पुरुप्रियः' बहु-प्रियः 'विशः' यजमाने धनस्य निवेशकः(१) 'अतिथिः' यजमानानां गृहान् प्रति [तिथिषु न अभ्येतीत्यतिथिः। तथाह यास्कः—"अतिथिरभ्यतितो गृहान् भवत्यभ्येति तिथिषु पर-कुलानीति पर-गृहाणीतिवा(४,१,५)" इति] एवं विधोऽग्निः 'प्रातः' 'स्तवेत' स्तूयते। 'अमर्त्ये' अमरण-धर्मके 'यस्मिन्'

---

८५ मास्तोयमुत्तरार्च्चिके। ५५

* सूक्त-इति वि०-पाठः।

I बृहतश्च कौमुदस्य साम।

(१)—'विशः; प्रथमा-बहुवचनमिदं तृतीया-बहुवचनस्य स्थाने द्रष्टव्यम्, विड्भिः यजमान-मनुष्यैः; 'स्तवेत' लिङयं लडर्थे द्रष्टव्यः कर्मणि च विड्भिः स्तूयते'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी ।

वसूयवआत्रेयाऋषयः ।

१र २र ३ २ ३ १ २ ३ १ २
यद्वाहिष्ठं तदग्नये बृहदर्च्च विभावसो ।
१ २ ३ २ ३ २उ ३ १ २
महिषीव त्वद्रयिस्त्वद्वाजा उदीरते ॥ ६ ॥ ८६

१ २ १ २१ २ १
२३ॱदोइ । मर्त्ताइहो । सइन्धा२३ता३४३इ । ओ२३
४५इ । डा ॥ २४ ॥ ८५

अग्नौ 'विश्वे' सर्वे 'मर्तासः' मर्ताः मनुष्याः 'हव्यम्' 'इन्धते' दीपयन्ति दधतइत्यर्थः(२) ॥

"विश्वे यस्मिन्नमर्त्त्ये हव्यं मर्त्तास इन्धते"-इति छन्दोगाः, "विश्वानि यो अमर्त्त्यो हव्या मर्त्तेषु रण्यति" इति बह्वृचाः ॥ ५ ॥ ८५

'वाहिष्ठं' वोढृतमं 'यत्' स्तोत्रं 'तत् अग्नये' क्रियते । अतः हे 'विभावसो !' (१)प्रभा-धनाग्ने ! 'बृहत्' बहुन्नं धनं च 'अर्च्च'

---

८६ नास्तीयमुत्तरार्च्चिके । ५६

(२)-'विश्वे यस्मिन्-इति परस्ताद् यच्छब्द-श्रवणात् पूर्वस्मिन्नर्द्धर्चे तच्छब्दोऽध्याहर्त्तव्यः। पाठक्रमादर्थ-क्रमस्य बलीयस्त्वात् पूर्वं द्वितीयोऽर्द्धर्चो व्याख्यातव्यः'-इति वि० । एवञ्च यस्मिन्नग्नौ विश्वे मर्तासोहव्यमिन्धते, सोऽयं विड्भिः स्तूयतइति भावार्थः ।

(१)—वसु धनं, तद् यस्य विविधं भाति दीप्यते स विभावसुः ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ र ५ ४ १ २ १र २
I यद्वाहिष्ठं तदा। ग्नयाइ। बृहदर्चविभावा२३साउ।
१ १ १ २ १र २
माही२षाइवा२। त्वद्रयिः। त्वद्वा२३जाः। उदीरा२३ता
१
३४३इ। ओ२३४पुइ। डा॥ २५॥

४ र ५ ४५४५र र ४ ५ २ १
I यद्वाहिष्ठं तदग्नये। यद्वाहिष्ठोवा। तदग्नयाइ।
२ १र २ १
बृहदा२३र्चा। विभावसाउ। महिषा२३इवा। त्वद्रयिः।
२ १र २ १
त्वद्वा२३जाः। उदीरा२३ता३४३इ। ओ२३४पुइ। डा
॥ २६॥ ८६

अस्मभ्यं प्रयच्छ। कथमस्यान्न-धन-प्रदातृत्वमित्यपेक्षायामाह— यतः 'त्वत्' त्वत्तः सकाशात् 'महिषी' महती(२) 'रयिः' धनम् 'उदीरते' उद्गच्छन्ति(३)। 'इव'-इति पाद-पूरणः(४)॥ ६॥ ८६

---

I,II अग्निऋषिः, यद्वाहिष्ठीये यन्मंहिष्ठीये वा।

(२)—महन्नामसु 'महिषः'-इति षष्ठं पदम् (नि० ३, २)।

(३)—'त्वद्वाजा'-इत्यस्य व्याख्यानमिह नोपलभ्यते। विवरणकारस्तु 'त्वद्रयिः'-इत्यस्य त्वया सह धनम् इति व्याख्याय 'त्वद्वाजा' त्वया सह अन्नानि इति व्याख्यातम्। भाष्य- -तु 'त्वत्' त्वत्तः सकाशात् 'वाजा' अन्नानि इत्यर्थः सम्भवपरः।

(४)—'एतदुक्तं भवति—यस्मादग्निना दत्तं धनमन्नं च त्वया सङ्गच्छते, यस्मा-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

गोपवनऋषिः, सप्तवध्रिर्वा ।

२ १　१　३　१ २　　३ १ २　　३ २
विशोविशो वो अतिथिं वाजयन्तः पुरुप्रियम् ।
३ २ ३ २३ १२ ३२ ३२३ १२
अग्निं वो दुर्यं वचः स्तुषे शूषस्य मन्मभिः ॥ ७ ॥ ८७

I विशोविशोऊम्वोइअतिथाइम । वाजयन्ताः । पू-
इरुप्रीइयाम् । अग्निंवोर । दूरा२३याम् । हुम्माइ ।
वाइचाइः । स्तूर३४षेहाइ । ओ । हुवाइ । शूर२३४षा ।
हुम्मा । स्याइमाइ । न्मार३४भाइ । एहियाइहा । हो
पूइ । डा ॥ २७ ॥ ८७

हे ऋत्विग्यजमानाः ! 'वः' यूयं 'वाजयन्तः' अन्नमिच्छन्तः

---

८७ उत्तरार्चिकस्य ७,२,१२,१ ।
I अग्निऋषिः, विशोविशीयम् ऐडं वा ।

इभिना दत्तेन धनेनान्नेन च त्वमीश्वरोऽसि। (कथम्पुनर्धनमन्नानि च त्वया सङ्गच्छन्तो उच्यते—'महिषीव' यथा राजभार्य्यां तेनैव सह सङ्गच्छते तद्वदित्यर्थः)'-इति वि० । अतः 'अग्नये' अग्निम् 'अर्च'-इति योजना ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

पुरुरात्रेयऋषिः।

२ १ ३ २ २ २ १ २ २ २ ३ २ ३ १ २
बृहद्वयो हि भानवे र्च्चादेवायाग्नये।

३ १ २ २ २ २ ३ १ २ ३ २ ३ २
यं मित्रं न प्रशस्तये मर्त्तासो दधिरे पुरः॥ ८॥ ८८

५ २ १ २ २ १ २ २ २ १ २ २
I बृहद्वयाः। हिभानाऽ३वाइ। आर्चादेवा। य-

'विशोविशः' सर्वस्याः प्रजायाः 'पुरू-प्रियं' बहुप्रियम् 'अतिथिं' पूज्यम् 'अग्निं' स्तुत्या परिचरतेतिशेषः। अहं च 'वः' युष्मदर्थं 'दुर्यं' गृह-हितम्(१) अग्निं 'वचः' 'स्तुषे' स्तौमि 'शूषस्य' सुखस्य(२) लाभाय। कैः साधनैः? 'मन्मभिः' मननीयैः स्तोत्रैः॥ ७॥ ८७

यज्ञे 'भानवे' दीप्तिमते 'अग्नये' 'बृहत्' महत् 'वयः' हवी-

८८ नास्तीयमुत्तरार्च्चिके। ५७

(१) 'दुर्य्याः'-गृहाणाम्'-इति नि० ३, ४, ९। 'दुर्य्यं यज्ञं गृह-द्वारि भवम्'-इति वि०।

(२)—'शूषम्'-इति निघण्टु-तृतीय-षष्ठे सुख-नामसु एकादशतमम्। लाभायेति षष्ठी-श्रवण-सामर्थ्याद् गम्यते।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ ७ १ २
अग्नार३याइ । यम्मित्रन्न । प्राशस्ताया२इ । मर्त्तासो-
२ ४ ५ ४ ५
इदाइ । धिरोवा । पुपूरो६हाइ ॥२८॥

५ २ २ ५ १ २२२२ १
II बृहद्वयोहिभानाइवाइ । आर्चादेवा । यअग्नार३-
२ १ २ १ ७ १ २२२ १
याइ । यम्मित्रन्न । प्राशस्ताया२इ । मर्त्तासोद । धा-
२ २ २२ २ २ २ ५२ २ २ १ ११
इरे१पूरा । औहोवाहा३४औहोवा । वा३हा २३-
११ १२
४५ः ॥ २९ ॥ ८८

रूपमन्नं(१) दीयते 'हि' अतस्त्वमपि 'देवाय' द्योतमानायाग्नये वयः 'अर्च' प्रयच्छ । 'मर्तासः' मनुष्याः 'यम्' अग्निं 'मित्रं न' सखायमिव 'प्रशस्तये'(२) प्रकृष्ट-स्तुतये अस्मदर्थं देवानग्निः स्तौत्विति 'पुरः' 'दधिरे' पुरस्कुर्वंति(३) ॥

"प्रशस्तये"—"प्रशस्तिभिः"-इति पाठो ॥ ८ ॥ ८८

---

I,II भार्गप्रजापतिऋषिः, कनीनिके द्वे ।

(१)—'वयः'-इत्यन्न-नामसु द्वाविंशतितमम् । नि० २,७ ।

(२)—'प्रशस्तये, चतुर्थ्येकवचनमिदं तृतीया-बहुवचनस्य स्थाने द्रष्टव्यम्, प्रशस्तिभिः स्तुतिभिः; स्तुवन्तइति वाक्यशेषः'-इति वि० ।

(३)-'पुरः' पूर्वस्यां दिशि 'दधिरे' धारयन्ति आहवनीयात्मनेति वि०-सम्मतोऽर्थः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी ।

गोपवनऋषिः ।

१ २ ३ १ २ ३ १ २ ३ १र २र
अगन्म वृत्रहन्तमं ज्येष्ठमग्निमानवम् ।
१ २ ३ २ ३ २ ३ १ २ ३ १ २
यः स्म श्रुतर्वन्नार्क्षे बृहदनीक इध्यते ॥ ९ ॥ ८९

५ २ १ २ २ १ २ १
I अगन्मवृ । त्रा३हान्ता३माम् । ज्या३इष्ठम । ग्निमा-
२ २ १ १ २ १ २
ना३वाम् । यस्मा२३होइ । श्रुतर्वन्नार्चाइ । बृहा२३-
१ २ २ २ ५ २
द्धोइ । आनीकया३१उवाये३ ध्या२३४ते ॥ ३० ॥ ८९

'वृत्रहन्तमं' पापानामतिशयेन हन्तारं 'ज्येष्ठं' प्रशस्यम् 'आनवं' मनुष्य-सम्बन्धिनं, तेषां हित-कारिणम्(१) 'अग्निम्' 'अगन्म' गन्ता 'वयं' [पूजार्थे बहुवचनम्] अग्निः 'यः' 'आर्क्षे' ऋक्ष-पुत्रे 'श्रुतर्वन्' नाम्नि राजनि(२) निमित्तं 'बृहत्' महान् 'अनीकः'

---

८९ नास्तीयमुत्तरार्च्चिके । ५८
I अत्रिऋषिः, श्रौतर्वणम् ।

(१)—'अनवः मनुष्याः' नि० २, ३, २० । 'अनुर्मनुष्यः तस्यापत्यम् मनुष्येण हि मन्थनेन अग्निर्जन्यते, तेनासौ आनवः, अतस्तम् आनवम्'-इति वि० ।

(२)—'श्रुतर्वा नाम ऋषिः'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

वामदेवः कश्यपोवा मारीचोमनुर्वा वैवस्वतउभौवा।

२ १र २र३ १ २ ३ २ ३ १ २ ३ १ २
जातः परेण धर्मणा यत्सवृद्भिः सहाभुवः।
२ २उ २ १ २ ३ २ ३ २ ३ १र २र ३ २
पिता यत् कश्यपस्याग्निः श्रद्धा माता मनुः कविः ॥१०॥ ९०

२र र १ ३ २ १ ३ २ ३
I जातः परेणा३धा। इहा। मणा। इहा। यो
५ १र २ १ ३ २
२३४नीम्। योनिमिन्द्रस्वगक्थः। यत्सवृद्भिःसा३हा। इहा।

ज्वाला-समूहः सन् 'इध्यते स्म' प्रवृद्धो भवत्। [लट् स्मे (३,२,११८) इति भूते लट] तमग्निमागताइति समन्वयः। एवं श्रुतर्वाणं भिक्षणायागतो गोपवनः अग्निं स्तौति॥

"अगन्म"—"आगन्म"-इति च पाठौ। "यः स्म श्रुतर्वन्नार्क्षे बृहदनीकइध्यते"-इति छन्दोगा,: "यस्य श्रुतर्वा बृहन्नार्क्षोअनीकएधते"-इति च बह्वृचाः॥ ९॥ ८९

---

९० नास्तीयमुत्तरार्च्चिके। ५९
I कश्यपस्य च स्वयोनीन्द्रस्य वा, इन्द्रियम्। इन्द्रस्य वा प्रियम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ ३ २ २ ५ १र २
भुवाः। इहा। योर२३४नीम्। योनिमिन्द्रस्वगक्थः।
र १ २ २ र १ २ र२ २ ५
पितायक्तश्या३पा। इहा। स्याग्नाइ। इहा। योर२३४नीम्।
१र २ र र र १ २ २ १
योनिमिन्द्रस्वगक्थः। अद्धामातामा३नूः। इहा। कवा-
२ २ २ ५ १र २ २ १ १ १ १
इ। इहा। योर२३४नीम्। योनिमिन्द्रस्वगच्छथा२३४५ः॥
३१॥ ९० *

इति चतुर्थ-दशति॥

हे 'अग्ने' त्वं 'परेण' उत्कृष्टेन 'धर्मणा'(१) आधानादि-कर्मणा 'जातः' प्रादुर्भूतोसि। 'यत्' यः 'सवृद्भिः' यज्ञे सह वर्तन्ते इति सवतः ऋत्विजः, तैः सह 'अभुवः' भुमि-सम्बन्धि-यज्ञे वर्तसे [कश्यपस्याग्निरित्येतयोः परस्परं विभक्ति-व्यत्ययः(२)] 'यत्' यस्या

---

(१)—धर्म इति यज्ञ-नामसु अन्त्यम् नि० ३, १७।

(२)—विवरण-ग्रन्थे तु यथा-विभक्ति व्याख्यानं दृश्यते। तथाहि—'यत्' यः 'अग्निः', 'कश्यपस्य' ऋषेः 'पिता' पालयिता, 'अद्धा' अद्दिति सत्य-नाम (नि० ३, १०, २), तस्य धारयिता, 'माता' वृष्टि-प्रदान-द्वारेण सर्वस्य जगतो निर्माता, 'मनुः' ज्ञाता अधिकारस्य भक्ततया अभक्ततया वा, 'कविः' मेधावी; यस्य 'सदृद्भिः' सह विद्यमानैर्देवैः 'सहाभुवः' सहैव प्रादुर्भवति; सोयम् 'परेण' उत्कृष्टेन 'धर्मणा' कर्मणा 'जातः' प्रादुर्भूतः। इति विवरण-निष्पन्नोर्थः।

* इति ग्रामे गेय-गाने द्वितीयः प्रपाठकः। २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ग्नेः 'काश्यपः' 'पिता' 'श्रद्धा' देवी 'माता' च 'मनुः' 'कविः' क्रान्त-कर्मा मेधावी वा [“मनुर्वैवस्वतः स्तोतासीत् सोऽग्निः यजमानायाभीष्टं फलं प्र यच्छतु” अनेन सुचितमुपाख्यानं ब्राह्मणान्तरे द्रष्टव्यम् ॥ १० ॥ ९०

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य नवमखण्डः ॥ ९ ॥

---

अथ दशमे खण्डे—

सेयं प्रथमा।

अग्निस्तापसऋषिः* ।

२ ३ १२ ३ १ २ ३ २ ३ १ २
सोमꣳ राजानं वरुणमग्निमन्वारभामहे ।
१ १७ २ १२ ३ १ २ ३ २ ३ १ २
आदित्यं विष्णुꣳ सूर्यं ब्रह्माणं च बृहस्पतिम् ॥ १ ॥ ९१

२५ ४२४२ ४५३ २ १ २ १२
I ओम्। सोमꣳ राजानं वरुणाम्। अग्निमन्वारभाम-

---

* 'वामदेवस्यार्षम्'-इति वि० ।

९१ नास्तीयमुत्तरार्च्चिके । ६०

I बार्हस्पत्यम् ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २ २ १ २ १२२ १ २
हे३। होवा३हाइ। आदित्य विष्णु९सूर्यम्। होवा३
२ १२ २ १ २ २ १ ऽ २
हाइ। ब्रह्माणा२३स्वा३। होवा३हाइ। बृहा३उवा३।
५ ८
पा२३४तीम्॥ १॥ ९१

'राजानं'(१) राजमानमीश्वरं वा 'सोमं'(२) 'वरुणं'(३) च 'अग्निं' च 'गीर्भिः' स्तुतिभिः 'अन्वारभामहे' रक्षणार्थम् आह्वयामहे। तथा 'आदित्यम्' अदितेः पुत्रं(४) 'विष्णुं'(५) च 'सूर्यं'(६) च 'ब्रह्माणं'(७) च बृहस्पतिं'(८) च अन्वारभामहे(९)॥ १॥ ९१

---

(१)—राजानमिति सोममित्यादेर्विशेषणम्।

(२)—"चन्द्रमसो वैतस्य वा 'सोमं मन्यत' ** सोमोरूपविशेषैरोषधिश्चन्द्रमा वा"-इति नै० ११,१,२—५।

(३)—"वरुणो वृणोतीति ** वृष्टिर्गुनक्ति भूमिम् इत्यादि नै० १०,१,४-५।

(४)—यद्यप्यादित्यः सूर्यइति प्रसिद्धः "सूर्यमादितेयम्"-इति नैरुक्तश्च (२,१,१६) परमिह सूर्यमिति पृथक्श्रुतेः अदितेः पुत्र-विशेषस्य इन्द्रानुक्तस्य वायोर्ग्रहणमित्याशयः, तथोक्तम् तत्रैव नैरुक्ते—"अदितेः पुत्रः ** अन्यासामपि देवतानामादित्य-प्रवादाः स्तुतयो भवन्ति"-इति।

(५)—"विष्णुर्भवति ** 'इदं विष्णुर्विचक्रमे"-इत्यादि नै० १२,२,८।

(६)—"सूर्यः ** उदुत्यं जातवेदसम्"-इत्यादि नै० १२,२,२-५।

(७)—"ब्रह्मा सर्वविद्यः, सर्वं वेदितुमर्हति"-इति नै० १,२,१२। नायं दैवतकाण्डे देवतासु परिगणितः।

(८)—"बृहस्पतिर्बृहतः पाता"-इत्यादि नै० १०,१,११।

(९)—आश्रयामहइत्यर्थः। इह मन्त्रे क्षित्यप्तेजोमरुद्व्योमसूर्य्यचन्द्रब्रह्मनामयजमानेत्यष्टमूर्त्त्युपासनं ध्वन्यतइति बोध्यम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

वामदेवोद्वयोः ।

२ २ ३ २ ३ १ २ ३ २ ३ १र २र
इत एत उदारुहन्दिवः पृष्ठान्यारुहन् ।
२ ३ २ ३ १ २ ३ १र २र
प्रभूर्जयो यथा पथो द्यामङ्गिरसो ययुः ॥ २ ॥९२

१र २ ३ ३ २ १ २
I आरो३हान् । ३ । इत एतऊ३दारु१हा२न् । दिवः
र १ २ र र १ २
पृष्ठानो३याहृ१हा२न् । प्रभूर्जयोया३थापा१था२ । उ-
र १ २ १र २ ३ १
द्यामङ्गिरा३सोया१यू२ः । आरो३हान्२ । आ२३ ।
१ ३ ५र र ३ ५ १२
रो२ । हा२३४ । औहोवा । ऊ२३४पा ॥ २ ॥९२

एते अङ्गिरसः 'यथा' 'उत्' मार्गेणैव 'द्यां' दिवं 'प्र ययुः' प्रापुः । कीदृशाः ? 'भूर्ज्जयः' [भृज्जतिः पाक-कर्मा] हविषां पक्तारः(१) । तत्र दृष्टान्तः--'पथा' मार्गेण जना ग्रामादीन

---

९२ नास्तीयमुत्तरार्च्चिके । ६१
I आरूढवत् आङ्गिरसं यामं वा ।

(१)—नेदं व्याख्यानं साधु मन्यते, 'भूः, जयः'-इत्येवं पदकारकृतावग्रह-दर्शनात्, न हि भृज्जतेर्भूर्जयदतिरूपे 'भूः, जयः'-इत्येवमवग्रहः सम्भवति, नापि तदधीन-स्वर-श्रुतिः । विवरणकारस्तु—'भः पृथिवी तां ये महावीराख्येनानुष्ठानेन जितवन्तः ते'-इत्याह ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

एतस्याः कश्यपोऽसितोदेवलोवा*।

३ १ २ ३ २ ३ १ २ ३ १ २
रायें अग्ने महे त्वा दानाय समिधीमहि।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
ईडिष्वा हि महे वृषन्द्यावा होत्राय पृथिवी॥ ३॥ ९३

५र ४र ५ र ४ १ र र र
I रायें अग्नेमहाइ। त्वा। दानायसमिधीमा२३

२ १ १ १र १
ही। आइडी२ष्वाही२। महेवृषन्। द्यावा२होत्रा२।

१ २ १ ५ ४ ५ ०
यपोवा३ ओ२३४वा। थापृइवो६हाइ॥ ३॥

२र १ ४र र र ५ १र र र
II रायायार३ग्नेमहेत्वाहाउ। दानायसमिधीमा२३

गच्छन्ति, तथा इतः भूमेः सकाशात् 'उदारुहन्' उदगच्छन्। आगत्य च 'दिवः' स्वर्गस्य 'पृष्ठानि' स्थानानि 'आरुहन्' प्राक्रामन्ति॥ २॥ ९२

---

* 'वामदेवस्यार्षम्'-इति वि०।

९३ नास्तीयमुत्तरार्च्चिके। ६२

I, II इमे आसिते।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

भार्गद्युतिः सोमो वा ऋषिः* ।

२ २ २ २३१२ ३ २ ३ १२ ३ ३३ २
इधन्वे वा यदीमनु वोच इन्नोनि वेरु तत् ।
२३ १ २ ३ १ २ ३ २ ३ १ २
परि विश्वानि काव्या नेमिश्चक्रमिवाभुवत् ॥ ४ ॥ ९४

२ १ २ २ १ २ ३ ५ १र
हाइ । आइडाइधाइहाइइ । माहेवा३३४र्धान् । द्यावा-
२ २ २ १ ५ ४ ५ ८
होइना३ । यपो२३४वा । या५इवो६हाइ ॥ ४ ॥ ९३

हे 'अग्ने' ! 'त्वा' त्वां 'महे' महतः 'राये'(१) धनस्य 'दानाय' दानार्थं 'समिधीमहि' वयं सम्यग् दीपयामहे । 'इधन्' वर्षितः । अग्नये 'महते' 'होत्राय' अग्निहोत्रार्थं(२) 'द्यावा' दिवं 'पृथिवी' च 'ईडिष्व' स्तुहि ॥ ३ ॥ ९३

---

* 'वटलमदस्यार्षम्'-इति वि० ।

९४ नाम्लीयमुत्तरार्चिके । ६२

(१)—'राये महे द्वे चाप्येते षष्ठ्यर्थे द्रष्टव्ये-इति वि० । स्वार्थ कथः द्वे-भावे कप-मिति ध्वनितम् ।

(२)—'इयते तदिति होत्रं होमद्रव्यम्; द्वे चानिचैते तादर्थ्य-चतुर्थ्यौ, महतो होमद्रव्यस्यार्थायेत्यर्थः । होम-ग्रहणञ्चात्र प्रदर्शनार्थम्, सर्वासां दानादि-क्रियाणां सम्बन्धिनो द्रव्यस्यार्थायेत्यर्थः'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

एतस्याः कश्यपोऽसितोदेवलोवा* ।

३ १ २ ३ २ ३ १ २ ३ १ २
राये अग्ने महे त्वा दानाय समिधीमहि।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २
ईडिष्वा हि महे वृषन्द्यावा होत्राय पृथिवी॥ ३॥ ९३

५र ४र ५ र ४ १ र र र
I रायेअग्नेमहाइ। त्वा। दानायसमिधीमा२३

२ १ १ १र १
हो। आइडी२ष्वाहो२। महेवृषन्। द्यावा२होत्रा२।

१ २ १ ५ ४ ५ ०
यपोवा३ ओ२३४वा। थापृइवो६हाइ॥ ३॥

२र १ ४र र र ५ १र र र
II रायायार३ग्नेमहेत्वाहाउ। दानायसमिधीमा२३

गच्छन्ति, तथा इतः भूमेः सकाशात् 'उदारुहन्' उदगच्छन्। आगत्य च 'दिवः' स्वर्गस्य 'पृष्ठानि' स्थानानि 'आरुहन्' प्राक्रमन्ति॥ २॥ ९२

---

* 'वामदेवस्यार्षम्'-इति वि०।

९३ नास्तीयमुत्तरार्च्चिके। ६२

I,II इमे आसिते।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

भार्गहुतिः सोमो वा ऋषिः* ।

२ २ २ २३२ ३ २ ३ २उ ३ २३ २
दधन्वे वा यदीमनु वोच द्ब्रह्मेति वेरु तत् ।
२३ १२ ३१ २ ३२३१२
परि विश्वानि काव्या नेमिश्चक्रमिवाभुवत् ॥ ४ ॥ ९४

२ १ २ २ १ २३ ५ १र
हाइ । आइडाइषाश्हाइइ । माहेवा३३४र्षान् । द्यावा-
२ २ २१ ५ ४ ५ ८
होइचा३ । यपो२३४वा । थापूइवो६हाइ ॥ ४ ॥ ९३

हे ‘अग्ने’ ! ‘त्वा’ त्वां ‘महे’ महतः ‘राये’(१) धनस्य ‘दानाय’ दानार्थं ‘समिधीमहि’ वयं सम्यग् दीपयामहे । ‘वृषन्’ वर्षितः । अग्नये ‘महते’ ‘होत्राय’ अग्निहोत्रार्थं(२) ‘द्यावा’ दिवं ‘पृथिवी’ च ‘ईडिष्व’ स्तुहि ॥ ३ ॥ ९३

---

* ‘गृत्समदस्यार्षम्’-इति वि० ।

९४ नास्तीयमुत्तरार्च्चिके । ६३

(१)—‘राये महे इे आप्येते षष्ठ्यन्ते द्रष्टव्ये-इति वि० । एवञ्च ङसः ऐ-भावे रूपमिति ध्वनितम् ।

(२)—‘हूयते तदिति होत्रं होमद्रव्यम् ; इे अपिचैते तादर्थ्य-चतुर्थ्यौ, महतो होमद्रव्यस्यार्थायेत्यर्थः । होम-ग्रहणञ्चात्र प्रदर्शनार्थम्, सर्वासां दानादि-क्रियाणां सम्बन्धिनो द्रव्यस्यार्थायेत्यर्थः’-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ र र ४ १र र र
I दधन्वेवापूयदीमनू। वोचद्ब्रह्मेतिवे-रुतत्। पारि-

१र २ ३ ५
विश्वा२। निकाव्या। नाइमिस्त्रक्रौवा। ई२३४वा।

२ १ ४ ५ ४ ६
भुवात्। औ२३होवा। होपूइ। डा॥ ५॥९४

'वा' अथवा 'ईम्' एनं यज्ञम् 'अनु' लक्षीकृत्य(१) 'यत्' हविरादिकं 'दधन्वे' धारयत्यध्वर्य्वादिः(२) यद् 'ब्रह्म' स्तोत्रम् 'अनुवोचत्' अनुवक्ति होत्रादिः [अत्र वा अन्वित्येतद्योज्यम्]। 'तत्' सर्वं 'वेरु' (३) वेरेव कामयते जानाति वा स्वयमनुष्ठातुम्। अयमग्निः 'विश्वानि' सर्वाणि 'काव्या'(४) काव्यानि 'कवयः' मेधाविनऋत्विजः तत्-सम्बन्धीनि कर्माणि 'पर्यभुवत्' परिभवति स्वायत्तानि करोति व्याप्नोतीत्यर्थः। व्याप्नो-

---

I त्वाष्ट्रीसाम।

(१)—'वेति पाद-पूरणः'-इति वि०। 'इम्', 'अनु' इत्यपि पाद-पूरणौ-इति च वि०।

(२)—'दधन्वे धारयति, अत्र तस्य धारणं न सम्भवति अतः धारणेनात्र श्रवणं लक्ष्यते शृणोतीत्यर्थः, किम्पुनः शृणोत्यग्निः ? उच्यते'-इत्यादि वि०।

(२)—इह वेः, उ—इतिच्छेदः ; उ-शब्द एवार्थः।

(३)—'वेः, मध्यमपुरुषस्यैकवचनमिदं प्रथमपुरुषैकवचनस्य स्थाने द्रष्टव्यम् ; वक्ति जानातीत्यर्थः।

(४)—'सुपां सुलुगित्यादिना। 'काव्यानि श्रुति-वचांसि हव्यानि वा'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

पायुर्ऋषिः।

१ २३ १ २३ १ २ ३ २ ३ १ २ ३ १ २
प्रत्यग्ने हरसा हरः शृणाहि विश्वतस्परि।
३ १ २ ३ २ ३ २ ३क २र ३क २र
यातुधानस्य रक्षसो बलं न्युब्ज वीर्यम्॥ ५॥ ९५

३ ४ ५र २ ३ ४ र ५ ५ २ १र २ १
I प्रत्यग्ने। ह्वोइ। हरसाहरा६ए। शृणाहिवा२
३ २ २ ५ २र १र २ १ ३र
इ। श्वता३४५ः। पा२३४री। यातुधानस्यरक्षसो३।
१ २ १ २ १ ५ २ ५ ६
बा२३लाम्। नियुब्जवो२३४वारी२३४याम्॥ ६॥ ९५

दृष्टान्तः—'नेमिः' वहिर्वेष्टन-वलयः 'चक्रमिव' रथाङ्गं यथा कार्त्स्न्येन व्याप्नोति तद्वत्॥

"ब्रह्म"-इति "ब्रह्माणि"-इति च पाठौ। ""भुवद्"-"भवत्"—इति च॥ ४॥ ९४

हे 'अग्ने!' त्वं 'हरसा' त्वदीयेन तेजसा क्रोधेन वा(१)

---

९५ नास्तीयमुत्तरार्चिके। ६४
I अगस्त्यऋषिः, राक्षोघ्नम्।

(१)—'निघण्टौ—प्रथम-सप्तदशे ज्वलत् पर्य्याये, द्वितीय-त्रयोदशे क्रोध पर्याये चेत्युभयत्र पाठात्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

प्रस्कण्व ऋषिः।

१ २५ १ २ ३ २ ३ १ २ ३ २ ३ २
त्वमग्ने वसूꣳरिह रुद्राꣳआदित्याꣳ उत।
१ २ ३ १ ३ ३ १ ३ ३ १ २
यजा स्वध्वरञ्जनं मनुजातं घृतप्रुषम्॥ ६॥ ९६

४ ५ र ४ ५ ४ २१र र
I त्वमग्ने। त्वमग्नाइ। वसूꣳरिहा। रुद्राꣳआ२३
२ १र र २ १
दो। तियाꣳउता। यजास्वू२३वा। ध्वरञ्जनम्। मनु-

[तथाच यास्कः—हरोहरतेर्ज्योतिर्हरउच्यते-इति। 'यातुधानस्य' राक्षसस्य 'हरः' हरण-शीलं बलं 'विश्वतः' सर्वतः 'परि' गतं प्रति 'शृणाहि' नाशयेत्यर्थः। तथा, 'रक्षसः' राक्षसस्य 'वीर्य्यं' च 'न्युब्ज'(१) निःशेषेण रुज भञ्जयेत्यर्थः॥

"शृणाहि"—"शृणीहि"—इति पाठो। "बलं न्युब्ज वीर्यम्"-"बलं विरुज वीर्यम्"-इति च॥ ५॥ ९५

हे 'अग्ने' त्वम् 'इह' कर्मणि वस्वादीन् 'यज'। 'उत'

---

९६ नास्तीयमुत्तरार्च्चिके। ६५

I मानवम्।

(१)—'न्युब्ज, ऋजुं कुर्वित्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १२ १ ५ १
जा२३ताम्। घृतप्रुषम्। इडा२३भा३४३। ओ२३४
५
पूइडा ॥ ७ ॥ ९६

इति पञ्चम-दशति* ॥

अपिच 'जनम्' अन्यमपि देवता-रूपं प्राणिनं(१) यज। कीदृशम्? 'स्वध्वरं' शोभन-याग-युक्तं 'मनुजातं' मनुना प्रजापतिना उत्पादितं 'घृतप्रुषं' उदकस्य सेक्तारं(२) यजेति सम्बन्धः(३) ॥६॥ ९६

इति सायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने
प्रथमस्याध्यायस्य दशमखण्डः ॥ १० ॥

---

(१)—प्राणोवायुः, तदेकस्थानतया तद्वन्तं प्राणिनम् आकाशापरपर्य्यायं प्रजापति-देवमित्यर्थः। "वायुर्वेन्द्रोवान्तरिक्षस्थः"-इति हि नैरुक्तम् (७,२,१); प्रजापतेश्चान्तरिक्षस्थानेषु परिगणनञ्च स्पष्टं निघण्टु-शेष-काण्ड-तृतीय-खण्डे; आकाशो हि प्रजापतिरिति च शवरस्वामिना स्फुटमुक्तम् (१,२,१०)। अस्याञ्च ऋचि वस्वादीनां सर्वासामेव देवगणानामुल्लेखः परिदृश्यते, प्रजापतेरुल्लेखएवावशिष्टः उतेतानेन स एव द्योत्यते। एवञ्चोपपद्यते सर्वासामेव त्रयस्त्रिंशत्सङ्ख्याकानां देवतानां यजनमिति ध्येयम्।

(२)—घृतमित्युदकस्य नाम, निघण्टु-प्रथम-द्वादशे तस्य दशम-पदत्वात्। उदकसेचनञ्च वायोः कर्म,-तदुक्तं भगवता निरुक्तकारेण—"अथास्य कर्म—रसानुप्रदानं, वृत्र-वधः"-इत्यादि (७,२,३) "वृत्र-वधो मेघ-वधः"-इति च तद्भाष्यम्। वायुरिन्द्रश्चाभिन्नः "वायुर्वेन्द्रोवेति यास्कोक्तेः(७,२,१)। वायुरिन्द्रश्चैक एव यथा हस्तः करइति" तद्भाष्याच्च।

(३)—'इहेदं तत्त्वम्—"त्रयस्त्रिंशद्देवताः"-इति हि ताण्ड्यादि-श्रुतिः, तत्र च

---

* इति छन्द आर्च्चिके प्रथम-प्रपाठकः ॥ १ ॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



खण्डयोर्हं पुरुत्वेति ककुभोऽष्टौ दशोष्णिहः।
जज्ञानः पावमानी स्यादुतस्येत्यदितिः स्तुतिः।
शिष्टाः षोड़श चाग्नेय्यः समाख्या छत्रिणीति वत्(०)॥

अथैकादश-खण्डे—

सेयं प्रथमा।

दीर्घतमा ऋषिः।

२ १ २ २ १ २ ३ १ २ ३ १ २ ३ १
पुरु त्वा दाशिवाङ्* वोचे रिरग्ने तव स्विदा।
३ १ २ ३ २उ ३ १ २
तोदस्येव शरण आ महस्य॥ १॥ ९७

*"दाश्वान्"-इतिपाठो बह्वृचां निरुक्त-सम्मतश्च(५,३,८)।

९७ नास्तीयमुत्तरार्च्चिके। ६६

"अष्टौ वसवः, एकादश रुद्राः, द्वादश आदित्याः, इन्द्रश्चैव त्रयस्त्रिंशत्, प्रजापतिस्त्रयस्त्रिंशत्-सङ्ख्या-पूरकः"-इत्यादि भाष्यम्। ते च सर्वे मनु-जाताः, तद्यथा—"इति स्तुतासो असथा रिशादसो ये स्थ त्रयश्च त्रिंशच्च। मनोर्देवा यज्ञियासः"-इति ऋग्वेदीया श्रुतिः (८,४,१०,२)। तत् सर्वं यज।

(०)—'पुरु त्वा'-इत्यादिरेकादश-खण्डः, तत्र ऋचोदश; 'प्र मंहिष्टाय'-इत्यादि द्वादश-खण्डं तत्र ऋचोऽष्टौ; अनयोरुभयो खण्डयोः सङ्कलनया अष्टादश ऋचः श्रूयन्ते। तासु द्वादश-खण्डात्मकाष्टौ ककुप्छन्दस्काः, एकादश-खण्डात्मकास्तु दश उष्णिक्छन्दस्काः किञ्च एकादश-खण्डीय-जज्ञानइत्याद्या पञ्चमी ऋक् पवमान-देवताका, तदव्यवहित-श्रुता उतस्येत्याद्या षष्ठी अदिति-देवताका, अवशिष्टास्तु सर्वाः आग्नेय्यः। नन्वनाग्नेय-मन्त्र-संश्रवेऽपि कथमस्याग्नेय-पर्वत्वं न नश्यति? इति शङ्कामपनोदयितुमाह,—'समाख्या छत्रिणीति वत्' एकस्मिन्नेव प्रधाने छत्रिणि राज्ञि याने यथा, अप्रधानभूतास्तु



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४　　२र १र　र　र　र　　४ ५ ४ ५
I पुरु । त्वादाशिवाꣳवोचाये३ । आरोराग्नाइ ।
२र १　　२र १ र　　　　१　　　　१ २
तावस्विदा । तोदस्येवशरणआर३होइ । महार३होये
२　　२　र ५र　　२ १ १ १ १　　९
३ । स्यो । या२३४औहोवा । ई२३४५ ॥ ८ ॥

५ ४ ५र र　४र ५र　　२ ऽ २　　५
II पुरुत्वादाशिवाꣳवो । चे । आरोरा२३४ग्नाइ ।
२　२　　५　४र २ ४र ५　　२　　५　　ऽ
तावस्वा२३४इदा । तोदस्येवशर । णयो२३४हाइ । मा
२　　१　२　　२　　२　　५र र　　२ १ १
३हा३ । हुम्माये३ । स्यो । या२३४औहोवा । ई२३
१ १　　८
४५ ॥ ९ ॥

हे 'अग्ने' ! 'त्वा' त्वां 'पुरु' बहु 'वोचे' [यद्वा वहु दाश्वानि-तिसम्बन्धः] पुत्रं देहि, वित्तं देहि—इत्याद्याशासनानि ब्रवीमी-त्यर्थः । किन्तूष्णीम्? नेत्याह—यतः 'दाशिवान्' दाश्वान्(१) अभि-मतं हविर्दत्तवानस्मि, अतो वोचे । इतर-साधारणेन ब्रुवतः कथं दातव्यम्-इति न मन्तव्यम् । यतः हे अग्ने! 'तव स्विदा'(२)

---

1,II इमे तौदे, दैर्घतमसे वा ।

समस्तासु सेनासु छत्रिलारोपेण हविषो यान्तीति समाख्यानम्, तद्वदित्यर्थः । प्राधान्यानुरोधात् अनाग्नेय्योऽपि ऋचः आग्नेय्यः-इति व्यवह्रियन्ते-इति भावः ।

(१)—"दाश्वान्साक्षान् मीढ्वांश्च (६,१,१२)"-इति कसौ बाहुल्येन रूपम् ।

(२)—'स्वित्, आ-इत्येतौ एव-शब्दस्यार्थे द्रष्टव्यौ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४ ५र र ४र २ १
I पुरुत्वादाशिवाᳲवो। चे। चे। अराइरार३४

५ २ ३ ५ २र १ ५ २
शाइ। तावस्वार३४इदा। तोदास्यार३४इवा। शारा-

३ ५ २ ४ २ ५
णार३४या। माइहापुस्याई५६। ए३१॥ १०॥

५ २ ४र ५ ४र र ५ २ १
II पुरुत्वा३दाशिवाᳲवोचे। अरिर। शाइ। तवा

३ ५ ३ ५ ३ ५ २ ३
३स्वार३४इदा। तोर३४दा। स्यार३४इवा। शाराणा

५ २ ४ २
र३४या। माइहापुस्याई५६॥ ११॥

२ १ ४र र र र ५ २ २र ऽ
III पुरुत्वार३दाशिवाᳲवोचे* ओहा। हा। औहो३

२ ३ ५ २ १ २र १ २ १र २ २र ऽ
हा। ओर३४वा। अरिरग्नेतवस्विदा। हा। औहो

२ ३ ५ २र १ २र १ र २ ३र ऽ
३हा। ओर३४वा। तोदस्येवशरणआ। हा। औहो३

२ ३ ५ २ २ १ ३ १ १ १ १ २
हा। ओर३४वा। ए३। महस्यार३४५॥ १२॥ ९७

---

* ब्र० पुस्तके पञ्चस्वेषु सामसु "वाङ्वोचे"-इति स-ङकारः पाठः।

---

III, IV, V इमानि दैर्घतमसानि तौदानि वा।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

विश्वामित्रऋषिः।

१२ २२ ३२उ ३ १२ २२
प्र होत्रे पूर्व्यं वचोग्नये भरता बृहत्।
३ १२ २२ ३ १२३ २ ३१२
विपां ज्योतींषि बिभ्रते न वेधसे ॥ २ ॥ ९८

'अरिः'(३) तवैव अर्त्ता सेवकोहं(४) 'महस्य' महतः 'तोदस्य' प्रेच-कस्य स्वामिनः(५) 'शरणआ'(६) ['इव'—इत्युपमार्थे] तदा ईश-गृहे यथा गर्भ-दासादिर्नियतोवर्त्तते तद्वदहमपि। यस्मादेवं तस्मात् अभिमतं बहु वोचे। त्वमपि तत् सर्वं देहीत्यर्थः॥

अत्र निरुक्तम्—"बहु दाश्वांस्त्वामभिह्वयाम्यरिरमित्रऋच्छते-रीश्वरोप्यरिरेतस्मादेव यदन्यदेवत्या अग्नावाहुतयोह्रयन्तइत्येत-द्दृष्ट्वैवमवक्ष्यत्तोदस्येव शरणआ महस्य तुदस्येव शरणेधि महतः (५,१,८)"—इति ॥ १ ॥ ९७

---

९८ नास्तीयमुत्तरार्च्चिके। ६७

(३)—निघण्टु-तृतीय-पञ्चम-पठितस्य परिचरण-कर्मणः ऋच्छतेरूपम्। उक्तञ्च निरुक्तकारेण 'ऋच्छतेः'-इति ५,१,८।

(४)—'अरिः ईश्वरः त्वम्'-इति वि०। अर्य्यः-इति निघण्टौ द्वितीय-द्वाविंशे ईश्वर-पर्याये द्वितीयं पदम्। निरुक्त-कृतापुरुक्तम्—ईश्वरोप्यरिरिति (५,१,८)।

(५)—'तोद-शब्देनात्र गृहस्थ उच्यते'-इति वि०।

(६)—शरणे, आ—इति छेदः पदग्रन्थे तथैव दर्शनात्। आ-इत्येतत् पाद-पूरणे कस्मिन्नपि भाष्ये तदर्थादर्शनात्; निरुक्त-नये त्वयमा अध्यर्थः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ? २ ३ १ १ २ १२
I प्रहोत्रेपू । र्विथं वचो । अग्नयार३इभा । रताबृ-

२ २ १ २ १ २ ५२ २
हत् । विपाजज्यो२३ती । षिबायेइ । भार२ता२३४औहो-

१ २२ १२ ११११ ७
वा । न वे२धसे२३४५ ॥ १३ ॥

५ २२ ४२५ ४ ५ २ १ २ २ २ २ २
II प्रहोत्राइइपूर्वियं वचाः । अग्नये२भरताइबृ । हा

२ १२ २ २ २ ५ २ २ ३
२३त् । विपाज्ज्योताइ । षो२३४बी । भ्रताइइ । नार

४ २ ५ ६
३वेइ । धाइ४५सोइहाइ ॥ १४ ॥ ९८

यजमानो होत्रादीन् प्रति ब्रूते—हे होत्रादयः ! 'विपां' विप्राणाम् मेधाविनाम् अध्वर्य्यादीनां 'ज्योतीषि' सत्कर्मानुष्टान-सम्पाद्यानि तेजांसि 'बिभ्रते' निमित्ततया कुर्वाणाय 'वेधसे' जगतोविधात्रे 'होत्रे' देवानामाह्वात्रे 'अग्नये' 'बृहत्' महत् 'पूर्व्यं' पुरातनं 'वचः' स्तोत्र-शस्त्रादिकं वाक्यं 'प्र भरत'(१) सम्पादयत । नेत्ययं पाद-पूरणः, अन्वयाभावात् । यद्वा 'वेधसे न' यथा

---

I,II अनयोः आश्वक्तऋषिः, प्रहितो नाम ।

(१)—भरतेति हरते रूपम् हृग्रहोर्भश्छन्दसीति वचनाद्धस्य भत्वम् । क्वचि त्वन्यात्वन्तु "क्वचि तु-तु (६,३,१३३)"-इत्यादि सूत्रे तङ्-ग्रहणात् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

गोतमऋषिः ।

२ १ २ २ १ २ २ १ २
अग्ने वाजस्य गोमत ईशानः सहसो यहो ।
३ १ २ ३ २ ३ १ २
अस्मे देहि जातवेदो महिश्रवः ॥ ३ ॥ ९९

वेधाः जगद्विधाता परमेश्वरः आदित्यादीनि ज्योतींषि करोति तद्वदिति । प्र-शब्दस्य "छन्दसि" "व्यवहिताश्च"इति(२) भरते त्यनेन सम्बन्धः ॥ २ ॥ ९८

हे 'सहसोयहो'(१) बलस्य पुत्र ! 'अग्ने' ! 'गोमतः' बहुभिर्गोभि र्युक्तस्य 'वाजस्य' अन्नस्य 'ईशानः' ईश्वरस्त्वमसि, अतः 'अस्मे' अस्मासु हे 'जातवेदः' जात-धन ! जातानां 'वेदितः' वा अग्ने ! 'महि' प्रभूतं 'श्रवः' अन्नं 'देहि' प्रयच्छ स्थापयेत्यर्थः । सहसो-यहो-परांगवद्भावाद्(२) आमन्त्रितस्य षष्ठामन्त्रित(३) समुदायो-

---

९९ उत्तरार्चिकस्य ७,२,११,१ ।

(२) "छन्दसि परेऽपि (१,४,८१)"-इति सूत्रात् छन्दसीत्यधिकारे वर्त्तमाने "व्यवहिताश्च (१,४,८२)"-इति सूत्रेणेति स्फुटार्थः ।

(१)—निघण्टौ द्वितीय-नवमे बल-पर्यायेषु सहः पदमष्टादशम्, तृतीय-द्वितीये अपत्य-पर्यायेषु यहुः पदश्चैकादशम् ।

(२)—"सुबामन्त्रिते पराङ्गवत् स्वरे (२,१,२)"-इति सूत्रेणेति यावत् ।

(३)—"षष्ठ्यामन्त्रित-कारकं वचनम्"-इति वचनं-कृतं परिगणनं चाबाधमस्तीति-त्यभिप्रायः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ र र र ४ २र २र२ २ २

I अग्नेवाजा५स्य । गोमतोवा । ईशानः सा । ह-

२र २२ २ ३ २र २र १र र २ र

सोयह्रो । अस्माइदेहि जातवेदोम । हा२३इ । अवा-

२र २ २ २

ओवा । औधियाइ । ए२३हिया३४३ । औ३४३५ई ।

११

डा ॥ १५ ॥

५ र र र र ४ ५ २र २र १र २ १

II अग्नेवाजस्य गो३म् मतोहोहाइ । ईशानः सा ।

२ २ ५ १ २ २ ४र ५ २र २

हासोया२३४हो । आस्मे१दाइहो३ । जात । वेदा३ः ।

१ ४ २ ५ ८

मा२३हो३ । आ३४५वी६हाइ ॥ १६ ॥ ९९

निहन्यते (४) । अस्मे—सुपांसुलुगिति (७,१,३९) सप्तम्याः शे आदेशः(५) ॥

"अस्मे देहि"—"अस्मे धेहि"-इति च पाठौ ॥ ३ ॥ ९९

---

I,II इमे श्रुधिये वा श्रुधेय वा अग्नेर्वा सत्ये वा सामनी, अनयोः प्रजापतिर्ऋषिः ।

(४)—"आमन्त्रितस्य च (८,१,१९)"-इत्ययमाष्टमिको निघातः ।

(५)—"शेश्छन्दसि (६,१,७०)"-इत्याद्यपीह स्मर्त्तव्यम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

विश्वामित्रऋषिः ।

३ १ २  २३३१ २ ३ २र २
अग्ने यजिष्ठो अध्वरे देवान् देवयते यज ।
१ ३ २१र २र २२३ १ २
होता मन्द्रो वि राजस्यति स्निधः * ॥ ४ ॥ १००

५र र ५ २रर र १ २
I अग्नेयजिष्ठो अध्वराइए । देवा देवयाइताइया१
२२ ऽ२ १र२ १२
जा२ । हुवाइहोवा । होतामन्द्रः । विराजा१सी२ ।
२२ ऽ२ १ २ १
हुवाइ । होइवा । अतिस्रा२३इधा३४३ः । ओ२३४५इ ।
६
डा ॥ १७ ॥

हे 'अग्ने' ! 'यजिष्ठः' यष्टृतमः 'त्वम्' 'अध्वरे' यज्ञे 'देवयते' (१)

* "स्त्रधः"-इति क० पाठः । "स्निधः"-इति ग० पाठः ।

१०० नास्तीयमुत्तरार्च्चिके । ६८

I प्रजापतिर्ऋषिः सदोनाम ।

(१)—"न च्छन्दस्यपुत्रस्य (७,४,३५)"-इति दीर्घ-निषेधः, "देवसुम्नयोर्यजुषि काठके (७,४,३८)"-इत्यस्याबमविषयः ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

त्रितऋषिः।

२ २ २ २ २ १२ २ ३ १२ २ २२ १ ३ २
जज्ञानः सप्त मातृभिर्मेधामाशासत श्रिये।
३ २ ३ १ २ ३ १ २ ३ २
अयं ध्रुवो रयीणाञ्चिकेतदा॥ ५॥ १०१

५ र २ २ ५ १ र र
II अग्ने। इया३४३ई३४या। यजिष्ठो अध्वराइ।
१र र र १ १ १ १
देवां देवयते२। हौहो२। याजा२। होता२। मान्द्रो
१ २ २ १ ३२ ५र र २
२। विराजा३सी। आ२। तिया३४औहोवा। ह्वो२३-
५ ०
४धाः॥ १८॥

५ ४ ५ ४ ५ १ र २र
III अग्नइया। ओवा। यजिष्ठो अध्वराइ। देवां दा
२ १ २ १ २ २ र १
२३इवा। याते१याजा२। होता३ओवा। मन्द्रोवी३रा२३
१ ३ ५र र १ २ १ ३ १ १ १ १ ६
जा२सा२३४औहोवा। अतिस्विधा२३४५ः॥ १९॥ १००

देवानात्मनइच्छते यजमानाय 'देवान् यज' तदर्थं यष्ट-

---

१०१ नास्तीयमुरार्च्चिके। ६९

II,III इमे हविर्द्धाने, अनयोरपि प्रजापतिर्ऋषिः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र २ र १ २ ३ ५
I जज्ञानः सा। प्तमातृभाइः। मेधामार२३४आ।
२ १ ० २ ५ १ २ १
सतआयाइ। अयार२ध्रु२३४वाः। रयार२इणाम्। चि-
२ १ २ ५र र २ ५ ४
कायेइ। तार२दार२३४औहोवा। ऊ२३४पा॥२०॥१०१

व्यानग्न्यादीन् देवान् पूजय। किञ्च। 'होता' देवानामा-ह्वाता 'मन्द्रः' यजमानस्य मादयिता स त्वं 'स्रिधः' क्षपयितृन् शत्रून् 'अति' अतिक्रम्य 'वि राजसि' विशेषेण शोभसे॥४॥ १००

'ध्रुवः' स्थिरोऽयमग्निः 'रयीणां' धनानाम् 'आचिकेतत्' अस्यानुशासने जानाति। 'सप्त' सप्त-सङ्ख्याभिः 'मातृभिः'(१) हविर्मान-समर्थाभिर्जिह्वाभिः स्वात्मनि हविः-प्रक्षेप्त्रीभिर्वा जिह्वा-भिः सह 'जज्ञानः' प्रादुर्भूतः सोऽग्निः 'मेधां' कर्मणो विधातारं सोमं 'श्रिये' सेवार्थम् 'अनुशासत' अनुशास्ति। [शास्तेर्लटि व्यत्ययेनात्मनेपदम् (३,४,९८) "बहुलं छन्दसि"—इति(२,४,७३) शपो लुङ् न भवति] अन्विच्छतीत्यर्थः॥

"जज्ञानः सप्तमातृभिः"—"जज्ञानं सप्त मातरः"-इति च पाठौ। "चिकेतद्"-"अचिकेतयद्"-इति च॥५॥१०१

---

I त्वष्टाऋषिः, आतिथ्यम्।

(१)—'सप्त मातरः—सप्तच्छन्दांसि अथवा सप्त होत्राः अथवा सप्त सोम-संस्थाः, ताभिः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

इरिमिठिर्ऋषिः।

२ २३ २ १ १ ३१र २र ३ १ २
उत स्या नो दिवा मतिरदितिरूत्यागमत्।
१र २ ३ १ २ ३ २३१ २
सा शन्ताता मयस्करदपस्रिधः* ॥ ६ ॥ १०२

५ २ ४र५ ४र ५ १ २र १
I उतस्या३नोदिवामती:। आदितिरू। तिया
२ १र २ २ ४ ५ २२ २
गा१मा२त्। साशन्ता३ता३। मा। य:। करा३ओ२३४
५ ४ ४ ४
वा। अपा५स्रिधा:। होऽ५इ। डा॥ २१ ॥ १०२

'उत' अपिच 'स्या' सा पूर्वोक्ता 'मतिः' मन्त्री(१) मन्तव्या स्तोतव्या वा 'अदितिः'(२) 'ऊत्या' रक्षया सार्द्धं 'दिवा' अहनि 'नः'

---

* इह सर्वत्रापि "स्रुधः"-"स्त्रिधः"-"स्रिधः"-इति पाठ-भेदः।

---

१०२ नास्तीयमुत्तरार्च्चिके। ७०

I अदितिर्ऋषिः, आदित्यम्।

(१)—'मतिर्ज्ञात्री'-इति वि०।

(२)—दीङ् क्षये, क्त्य-ल्युटोबहुलमिति कर्त्तरि क्तिनि छान्दसं ह्रस्वत्वम्, नञ् समासः; अदितिः सकल-प्रपञ्च-धारणेष्वदीना, न खिद्यते इत्यर्थः। अदितिरदीनेत्यत्र भाष्ये स्कन्दस्वामी—यद्यपि नञ्-पूर्वात् द्यतेः क्तिनि 'द्यति-स्यति-मा-स्थामितीत्' च रूपं सिध्यति, तथापि द्यतेर्नित्यमपूर्वादर्थान्वयाच्च दीङ् क्षये इत्यस्यैवेदं छान्दसं रूपं द्रष्टव्यम्। तथा चोक्तं 'न संस्कार माद्रियेत, अर्थोनित्यः परीक्षेत'-इति। 'अदिति



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

द्वयोर्विश्वमनावैयश्वऋषिः * ।

१ २ ३ १ २ ३ २ १ २ ३ १ २
ईडिष्वा हि प्रतीव्या३ं यजस्व जातवेदसम् ।

३ १ २ ३ २ ३
चरिष्णु धूममगृभीतशोचिषम् ॥ ७ ॥ १०३

अस्मान् 'अगमत्' आगच्छतु ; आगत्य च 'शन्ताता' शन्तातिः(३) शान्तिकरं 'मयः' सुखं(४) 'सा' अदितिः 'करत्'(५) करोतु । 'स्रिधः' नाशकान् शत्रूंश्चापगमयतु [स्रिधिर्बाधनार्थः] ॥

"उत स्या"-"उत त्या"-इति च पाठौ । "सा शन्ताता"-"सा शन्ताति"-इति च ॥ ६ ॥ १०२

---

* 'विश्वमनसआर्षम्'-इत्येव वि० ।

१०३ नास्तीयमुत्तरार्चिके । ७१

देवमाता'-इति वि० । ऐतिहासिकानां मते देवमाता, नैरुक्तानां मते अदीनादि-गुणः, आत्मपक्षे प्रकृतिः । 'अदिति द्यौरदितिरन्तरिक्षम्"-इति निघण्टु-भाष्यम् । 'अदि-तिरदीना देवमाता । "अदिति द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वेदेवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्"-इत्यदितेर्विभूतिमाचष्ट एनान्यदीनानीति वा'-इति नै० ४,४,९३—२४ ।

(३)—"शिवशमरिष्टस्य करे (४,४,१४३)"-इति शङ्करोतीति विग्रहे तातिलि रूपम् ।

(४)—निघण्टोस्तृतीय-पञ्चमे सुख-पर्य्याये मयइत्यष्टमं पदम् ।

(५)—लेटोरूपमिदम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र १ ४ ५र १ २ १ २ १र
I ईडाइषा२३हिप्रतीवियाम्। याजस्वश्रा। तवे-
२ १ २ ३ २ ३ ५ २ २ १
दसा२३म्। चरिष्णुधू। मा२३४म। गृभा३इ। ता२
३ ५र र ३ ५ ५
शो२३४औहोवा। चोर३४षाम्॥ २२॥ १०३

'प्रतीव्यं' शत्रुषु प्रतिगमन-शीलम्(१) अग्निं ['हि' अवधारणे(२), अग्निमेव] 'ईडिष्व' स्तुतिभिः स्तुतं कुरु। किञ्च, 'चरिष्णुधूमम्' सर्वत्र चरण-शील-धूम-ज्वालम् 'अगृभीतशोचिषं'(३) रक्षोभिरप्रधृत-दीप्तिम् 'जातवेदसं' जातप्रज्ञं [यद्वा, जातानि भूतानि वेत्तीति जातवेदाः,(४) तमग्निं(५) 'यजस्व' हविर्भिः पूजय॥ ७॥ १०३

---

I वार्कजम्भम्।

(१)—'महाभूतत्वात् सर्वगतम्'-इति वि०।

(२)—'हीति पादपूरणः'-इति वि०।

(३)—'हृग्रहोर्भश्छन्दसि, हस्य'-इति भत्वे रूपम्।

(४)—"जातवेदाः, कस्मात? जातानि वेद, जातानि वैनं विदुर्जाते जाते विद्यत इति वा, जातवित्तो वा, जातधनोव, जातविद्यो वा, जातप्रज्ञानो यत्तज्जातः पशूनविन्दत, तज्जातवेदसो जातवेदस्त्वमिति** अयमेव सोऽग्निर्जातवेदाः"-इति नै०७, ५,१—५। 'एष माहाभाग्यात् कर्मपृथक्त्वादग्निरेव'-इति च तद्भाष्यांशः।

(५)—सूर्योऽपि जातवेदा इत्युच्यते, तथा च तत्रैव नैरुक्ते—"जातवेदसे सुनवाम"-इत्यृचमुदाहरणमुखेन व्याख्याय—"यत्तु किञ्चिदाग्नेयं तज्जातवेदसानां स्थाने युज्यते स न मन्येत अयमेवाग्निरिति अप्येते उत्तरे ज्योतिषी जातवेदसा उच्येते** अथासावादित्यः—उदुत्यं जातवेदसमिति"-इदमुक्तम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी ।

१र २र ३ १ २३२ ३ १ २ १२
न तस्य मायया चन रिपुरीशीत मर्त्यः ।
२ १२३ १ २ २
यो अग्नये ददाश हव्यदातये ॥ ८ ॥ १०४

५ ४ २ ५ २१र २ १ र
I नतोवा । स्यार२३४मा । ययाचार२३ना । रिपुरी-
र १ २ ५ १र ऽ १र
शीतमा३१श्रोवा२३ । तो२३४याः । योअग्नये२ददा ।
५ २ ५ ६
शहव्यदो२३४वा । ता२३४ये ॥ २३ ॥ १०४

'मर्त्यः' मनुष्यः 'रिपुः' शत्रुः [चनेति निपात-समुदायोऽप्यर्थे(१)] 'मायया चन' माययापि(२) 'तस्य' जनस्य 'न ईशीत' ईश्वरो न भवति । 'यः' जनः 'हव्यदातये' हविषामादान-समर्थाय 'अग्नये' योयजमानः 'ददाश' हवींषि प्रयच्छति तस्य रिपुर्न ईशीतेत्यर्थः ॥

'हव्यदातये'-"हव्यदातिभिः"-इति च पाठौ ॥ ८ ॥ १०४

---

१०४ नास्तीयमुत्तरार्च्चिके । ७२

I अगस्त्यऋषिः, राचोघ्नम् ।

(१)—'चन शब्दः पादपूरणः'-इति वि० ।

(२)—'मायया प्रज्ञया'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

भारद्वाजऋषिः*।

३ १ २ ३२३ २ ३ १ ३ क २र
अप त्यं वजिनꣳरिपुꣳस्तेनमग्ने दुराध्यम्।
१ २ ३ २ ३ २
दविष्ठमस्य सत्पते कृधी सुगम्॥ ९॥ १०५

३ ४ ३ ४ ५ ३ २ २ ३ १ १ १ १ २
I अपत्यं वृजिनम्। रिपूम्। स्तेना२३४५म्। अग्ना-
१र २ ३ ४ ५ ३ २
इ। दूराधा२३या३४म्। दविष्ठमस्य सत्। पता३इ।
१ ४ २ ५ ४
का२३ध्रो३। सू३४५गो६हाइ॥ २४॥ १०५

हे 'अग्ने!' त्वं 'त्यं' तं प्रसिद्धं 'वृजिनं' कुटिलं 'रिपुं' पापकारिणं 'दुराध्यं' दुःखस्याध्यातारं दुष्टाभिप्रायम् एवम्भूतं 'स्तेनं' हिंसकं 'दविष्ठं' दूरतमम् 'अपास्य' अप क्षिप [असु, क्षेपणे-इति धातुः]। हे 'सत्पते!' सतां पालयितः अग्ने! अस्माकं 'सुगं' शोभनेन गन्तव्यं सुखं 'कृधि' कुरु। [अत्र सर्वदेवात्मकस्याग्नेः स्तवनाद् वैश्वदेवत्वम्(१)॥ ९॥ १०५

---

* 'ऋजिश्वनआर्षम्'-इति वि०।

१०५ नास्तीयमुत्तरार्चिके। ७२

I सौमक्रतवं बृहदाग्नेयीयं वा।

(१)—'विश्वे देवाः सर्वे देवाः'-इति नैरुक्तम् (१२,४,५)। 'जनादिष्ट-देवता-लिङ्गो



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

विश्वमनाएवर्षिः।

३क२र ३ १ २ ३ १ २
अग्ने नवस्य मे स्तोमस्य वीर विश्पते।
३ १र ३ १ २ ३ १ २
नि मायिनस्तपसा रक्षसो दह ॥ १० ॥ १०६

५र र र २र १ २ १
I हाउअग्नेनवस्य मेहाउ। स्तोमास्य वाइ।
२ १ २ ५र र र ४ ५ २र १ २१
रविश्पतायेर३४। ऐहीहाउहोवा। निमायिनाः। तप-
२र १ ५र र र ४ ५ १ ५र र र
सारार३४। ऐहोहाउहोवा। चासार३४ः। ऐहीहाउ-
४ ५ २ ५ ५ ४ १५
होवा। दहए३४। हियाऽहा। होपुइ। डा ॥ २५॥ १०६

इति प्रथम-दशति ॥

'वीर' शत्रूणां विनाशयितः! वीर्यवन्! वा 'विश्पते' विशां पाल
यितः! हे अग्ने! 'नवस्य' इदानीं क्रियमाणत्वान्नूतनं 'मे' मदीयं

---

१०६ नास्तीयमुत्तरार्च्चिके। ७४

I अगस्त्यऋषिः, राक्षोघ्नम्।

मन्त्रराशिः स्यात् स सर्वसाधारणत्वाद् बहु-दवतो वैश्वदेवः स्यात्'-इति देवराजयज्वा (७,१,४)। आग्नेयत्वमप्यस्याव्याहतम्, अग्नावेव सर्व-देवताभिवादात्; अत उक्तं निरुक्त-भाष्य-कारेण—'अग्निर्वै सर्वा देवता इति ह विज्ञायते, अग्निर्वै देवतानां भूयिष्ठ भागिति च, अपरिग्रहं च प्रधानमासीति न्यायः, तस्मादाग्नेयः स मन्त्रः स्यात्' इति (७,१,४)।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



'स्तोमस्य' स्तोत्र-शस्त्रादिकं 'श्रुष्टी' श्रुत्वा 'मायिनः' मायाविनः रक्षसः कर्म-विघ्न-कारिणः, राक्षसान् 'तपसा' तापकेन तेजसा 'निदह' नितरां भस्मीकुरु(१) [श्रुष्टीति "स्नात्व्यादयश्च(७,१,४९)"-इति निपातितः(२); वकार-लोपश्छांदसः(३)]॥

"तपसा"-तपुषा-इति च पाठौ॥ १०॥ १०६

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य एकादश-खण्डः ॥११॥

---

अथ द्वादश-खण्डे—

सेयं प्रथमा।

प्रयोगोभार्गवऋषिः *।

१र २र २ १ २ ३२ ३ १ २
प्र मꣳहिष्ठाय गायत ऋताव्ने बृहते शुक्रशोचिषे।
३ १ २ ३ २
उप स्तुतासो अग्नये॥ १॥ १०७

---

* "सौमरेरार्षम्"-इति वि०।

१०७ उत्तरार्च्चिकस्य २,२,१७,१।

(१)—'मे' 'नवस्य' 'स्तोमस्य' बलेन 'वीर!' 'विश्पते!' 'अग्ने!' 'मायिनः' 'रक्षसः' 'तपसा' 'श्रुष्टी' क्षिप्रम् 'नि दह'—इति वि०-निष्पन्नोऽन्वयः; इह मते न विभक्ति-व्यत्ययः।

(२)—अनेन हि सूत्रेण आकारस्य ईत्वमात्रं विधीयते।

(३)—षकारागमश्च तथैव।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २ ४र ५ २१ १र
I प्र मᳪ᳖हाइइ ष्ठाय गायता । ऋतान्वेर । बृहते

२ ४ ५ २१२ २ १
शूक्रा२शो३ । चा२३४इषाइ । उपाश्रौ३हो । स्तोता

२ ४ २ ५ २
सो३आ३ । ग्ना३४५यो६हाइ ॥ २६ ॥

४ ५र ४ ४ २ १
II प्रमᳪ᳖ हिष्ठाय । गा५यता । ऋता२१न्वे२ । बृहा-

२ १र २ १
ता१इशू२ । क्र । शोचा२३इषाइ । उप । स्तुयतौ२ ।

१ ऽ २ २१ ५ ४ ५ २
ऊवाइ । वो३वा३ । सश्रो२३४वा । ग्ना५या६हाइ ॥ २७ ॥

२ ४५र र २ २ ५ १ रर
III प्र मᳪ᳖हिष्ठाय गा । इया२४३ई३४या । यतऋतान्वे

र २ १ १ १२
बृहतेशुक्रशो२ । चौ२ । हुवा२इ । चाइषा२इ । उपा-

१ २ १ २र१ २ १
३होइ । स्तुता३हो । सोअग्ना२३या३४३इ । औ२३४

६
५ । इ । डा ॥ २८ ॥

I,II प्रमᳪ᳖हिष्ठीये, इन्द्रऋषिः ।

III प्रमᳪ᳖हिष्ठीयम् आसितं वा, इन्द्रो वसिष्ठो वा ऋषिः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

द्वयोः सौभरिर्ऋषिः *।

१र २र३ २ ३ १ २ ३ १ २ ३ १ २
प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः।

४ ५ र र ४ ५ १ र २
IY प्र मꣳहिष्ठाय गायता। प्र मꣳहिष्ठो वा। यागायत।

१ २ २र ४ ५र २ २ र
ऋतार२३न्वा३४इ। बृहतेशुक्रशो। चा३इषाइ। उपौ-

र २ र र २ २ १
होवा३हाइ। स्तुतौहोवा३हा३। सस्रो२३४५इ। डा-

६
॥ २९ ॥ १०७

हे 'उपस्तुतासः!' (१) हे उपस्तोतारः! यूयं 'मंहिष्ठाय'(२) दातृतमाय 'ऋतावे'(३) यज्ञवते सत्यवते वा 'बृहते' महते 'शुक्रशोचिषे' दीप्त-तेजसे 'अग्नये' 'प्र गायत' स्तोत्रं पठत(४)॥१॥ १०७

---

* "सोभरिः"-इति वि० पाठः।

IY प्रमꣳहिष्ठीयम्, इन्द्रऋषिः।

(१)—कर्त्तरि तृजर्थे क्तः। 'उपगम्य ये स्तुवन्ति'-इत्यादि वि०।

(२)—मंहतिर्दान-कर्मा, निघण्टौ तृतीयाध्यायीय-विंशतितम-खण्डे पाठात्। तस्मात् तृचि "तुश्छन्दसि (५,३,५९)"-इतीष्ठनि रूपम्।

(३)—"मतौ (६,३,१३१)"-इति योग-विभागाद्कारस्य दीर्घः।

(४)—ऋचि 'स्तुतासो अग्नये'-इति (६,१,११५) प्रकृतिभावे रूपम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३१ २ ३१र २र
यस्य त्वꣳ सख्यमाविथ ॥ २ ॥ १०८

१ २ २ १ २ २
I प्रासो३हाइ। आग्ने३हाइ। तवा३१ओवा२३।

३ ५ २१र र २ १र २ १ २
तो२३४भीः। सुवीराभिस्तरतिवाजकर्मभिः। यस्या३-

२ १ ४ ५ ४ ५
हाइ। त्वा३सा२३। ख्यमोवा। वा५इयो६हाइ ॥२०॥ १०८

हे 'अग्ने'! 'तव' 'ऊतिभिः' रक्षाभिः 'सः' यजमानः 'प्र तरति' प्रवर्द्धते। ऊतयो विशेष्यन्ते—'सुवीराभिः' शोभन-वीराः पुत्रादयो यासु, ताभिस्तथोक्ताभिः 'वाजकर्मभिः' वाजानामन्नानां बलानां वा कर्म रक्षणं यासु, तादृशीभिः। हे अग्ने:! 'त्वं' 'यस्य' यजमानस्य 'सख्यं' सखित्वं मित्रत्वम् 'आविथ'(१) प्राप्नोषीत्यर्थः, स प्र तरतीति पूर्वेणान्वयः॥

"तरति वाजकर्मभिः"-"तिरते वाजभर्मभिः"-इति च पाठौ। "आविथ"-"आवरे"-इति च ॥ २ ॥ १०८

---

१०८ उत्तरार्च्चिकस्य ८,२,२,१।

I वाजभृद् वा वाजाभृद् वा वाजाभर्मीयं वा, भरद्वाजऋषिः।

(१)—"छन्दसि लुङ्-लङ्-लिटः (३,४,६)"-इति काल-सामान्ये लिट्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

१ २ क २र २ १ २ ३१२३१ २
तं गूर्द्धया स्वर्णरं देवासो देवमरतिं दधन्विरे।
३ २ ३ १ २
देवत्रा हव्यमूहिषे॥ ३॥ १०९

५ ४ १ ४ऽ ५ ४ ५ २र१रर र १
I तं गूर्३र्द्धा३या सुवर्णरोवा। देवासो देवमरा२ता
७ ५ ४ ५ १ ३ ५
इन्दधावा। ग्ना५यो६हाइ२३। हो। न्वा२३४इराइ।
२र १र ऽ २ १ ३ ५र र ३
देवत्राह। व्यम२हा३। हा२इषा२३४औहोवा। ऊ-
११११ ८
२३४५॥ ३१॥

५ र र ४ ५ २र१र२र१ २ ३२१
II तं गूर्द्धयासुवर्णाराम्। देवासोदाइ। व मरता२३
२३ २ २ ५ २र १
इम्। दधन्वउरा। वा३। दे२३४वा। त्राहा२३।
४ ५ ४ ५
व्यमोवा। हा५इषो६हाइ॥ ३२॥

५ र र र ४ ५ १र ३ ५ १
I,II तं गूर्द्धयास्वौहोर्णाराम्। देवा२सो२३४दे। वम-

---

१०९ उत्तरार्च्चिकस्य ८,२,११,१।

I,II,III इमानि त्रीणि सौभराणि।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ २ ५ २ २
रतार्२इम् । दा२३४धा । न्वा२३४इराइ । हाद्यो२३४
५ १र २ ५ २ २ ४ ३ १ १ १ १
द्दा । देवा२न्वा२३४द्दा । व्यमू२द्दा५इ । षा२३४५
५
॥ २२ ॥ १०९

हे 'स्तोतः' ! 'तं' प्रसिद्धमग्निं 'गूर्द्धय'स्तुहि[गूर्धयतिः स्तुति-कर्मा (नि०३,१४,५] कीदृशम्—'स्वर्णरं' सर्वस्य नेतारं सर्वैः यजमानैः कर्मादौ नेतव्यं वा । अथवा, स्वर्गं प्रति हविषां नेतारम्(१) । 'देवासः' दीव्यन्ति स्तुवन्तीति(२) देवा ऋत्विजः 'देवं' दानादि-गुण-युक्तम् अर्थं स्वामिनं, यद्वा, अभिप्राप्तव्यं(३) 'दधन्विरे' [धन्वन्ति गच्छन्ति] स्तुत्यादिभिः प्राप्नुवन्ति [धविर्गत्यर्थः[४]] प्राप्य च तेनाग्निना 'देवत्रा' देवान् [देवमनुष्येत्यादिना(५) द्वितीयार्थे त्रा

(१)—'स्वः', 'नरम्'—इति पृथक् पद-द्वयमिति पद-कृत्-पाठात् स्वर-श्रुतेश्च स्पष्टमवगम्यते ; विवरणकारश्चैवमेव व्याचष्टे, तद्यथा,—'स्वः लुप्तोपममिदं द्रष्टव्यम्, स्वरिव आदित्यमिवेत्यर्थः, [नरं नराकारम्'-इति । स्वः, पृश्निः—इत्यादि नाम-षट्कं दिव आदित्यस्य च साधारणम्, निरुक्त-द्वितीयस्य तृतीय-षोड़शं हि तत्र प्रमाणम् । क्वचि स्वर्णरमिति णत्वमसमानपदेऽपि छान्दसम् ।

(२)—दीव्यतेः स्तुतिश्चैकोऽर्थः स्पष्टोऽस्ति गण-पाठादौ ।

(३)—'अरतिम् अलमतिम्, पर्याप्त-मतिं सर्वज्ञमित्यर्थः ; अथवा देवान् यजमानांश्च प्रति गन्तारम्'-इति वि० ।

(४)—निघण्टोर्द्वितीय-चतुर्द्दशे पठितत्वात् । 'दधन्विरे, धारितवन्तः, स्थापितवन्तः'-इति वि० ।

(५)—"देव-मनुष्य-पुरुष-पुरु-मर्त्येभ्यः ।"



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

प्रयोगोभार्गवऋषिः, सोभरिः काण्वो वा *।

१ २ १ १ २ ३ १ २ ३ १ २ ३ २ ३ २
मा नो हृणीथा अतिथिं वसुरग्निः पुरुप्रशस्त एषः।
३ १ २ ३ २
यः सुहोता स्वध्वरः॥ ४ ॥ ११०

४५ ५ २ ५र १ ७ २ १ २ १
I मा। नाः। हृणी३था३तिथी३म्। वासूरा२३४
५ २र र २ र र २ २ १
ग्नीः। पुरौहोवा३हाइ। प्रशौहोवा३हा३। स्तश्रो२३
५ ४ ५ ५
४वा। आपूइषोई्हाइ॥ ३४ ॥ ११०

प्रत्ययः] 'हव्यं' चरु-पुरोडाशादि-लक्षणं हविः 'आ जुहिषे' अभि प्रापय [वहेर्लिटि(६) यजादित्वात् सम्प्रसारणम्(७)॥ २ ॥ १०९

---

* 'सौभरेरार्षम्'-इत्येव वि०।

११० नास्तीयमुत्तरार्चिके। ७५

(६)—"लिङर्थे लेट् (३,४,७)"। लिङर्थश्चात्र प्रार्थनं, लोडर्थश्च सएवेति भाष्यकृता अभिप्रापयेति लोटोरूपं प्रतिपदं दत्तम्।

(७)—'वचि-स्वपि यजादीनां किति (६,१.१५)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र ५ १ र र १ ४ ५ २
II मानोहाउ। हा२३४। णीथाअतिथिम्। वा

३ ५ २१र २ १ २ १र २ १ र
सूरा२३४याइ:। पुरौहहोइ। प्रशौहहो। स्ता२३४एषा:।

५र ५ ४ ७
एहियाइहा। होपूइ। डा॥ ३५॥ ११०

हे ऋत्विक्-सङ्घ! 'नः' अस्मत्-सम्बन्धि-यज्ञे 'अतिथिम्' अतिथिवत् प्रियम् अग्निम् 'मा हृणीथाः' मा हर। कमग्निम्? इत्यत आह—'यः' अग्निः 'सुहोता'(१) सुष्ठु देवानामाह्वाता(२) 'स्वध्वरः' शोभन-यज्ञो भवति 'एषः'(३) अग्निः 'पुरुप्रशस्तः' बहुभिः स्तुतः 'वसुः'(४) वासकश्च भवति [तमिति पूर्वत्रान्वयः(५) ॥

"मा हृणीथा अतिथिम्"-इति छन्दोगाः, मा हृणीतामतिथिः"-इति बह्वृचाः॥ ४ ॥ ११०

---

I,II पक्थस्य सौभरस्य सामनी।

(१)—षाष्ठ-बहुल-वचनात् (५,१,३४) कः सम्प्रसारणम्।

(२)—अन्यत्रापि 'त्वमग्ने यज्ञानां होता'-इत्यादौ (ऋ०१,१,१,२) अग्नेर्होतृत्वं श्रूयते। अतएव यास्कः—'अथास्य कर्म, वहनं च हविषामावाहनञ्च देवतानाम्'-इत्यादि(७,२,१,)।

(३)—'इण् गतौ(भ्वा०प०) इत्यस्येदं रूपम्, गन्ता'-इति वि०।

(४)—यद्यपि वसुर्देवविशेषोऽपि श्रूयते परं नेह तस्य ग्रहणम् अग्नेः तस्य च स्थानैक्याभावादसामञ्जस्यात्, अस्ति हि नैरुक्तम्—'अग्निः पृथिवी-स्थानः'(७,३,१)'-इति, 'मध्यस्थाना वसवः(१२,४,८)' इत्यादि च।

(५)—'यः' 'अतिथिम्' अतिथि-स्थानीयः, 'वसुः' प्रशस्त-धनवान् वा, 'पुरुप्रशस्तः'





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

तिसृणां सोभरिर्ऋषिः।

३१ २ ३१र २र ३२ ३ १ २ ३१ २ ३ २

भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः।

३ २ ३१र ३र

भद्रा उत प्रशस्तयः ॥ ५ ॥ १११

४ ३ ५ २ ३ ४ र ५ ५ ३ र ३र १

I भद्रो४नः। होइ। अग्निराहुता६ए। भद्रारातोइः।

२ १ २ १ ३ ५ २ १र २ १

सुभगाभा३। द्रो२ध्वा२३४राः। भद्राऊ२३ता३। प्रा२

४ २ ५ ४

३शा३। स्ता३४५योऽ६हाइ ॥ ३६ ॥१११

‘आहुतः’ हविर्भिस्तर्पितोऽग्निः ‘नः’ अस्माकं ‘भद्रः’ कल्याणो भवतु। हे ‘सुभग’ शोभन-धनाग्ने! ‘भद्रा’ ‘कल्याणी’ ‘रातिः’ दानं च अस्माकं भवतु। ‘भद्रः’ कल्याणः ‘अध्वरः’ यागश्च भवतु। ‘उत’ अपिच ‘भद्राः’ कल्याण्यः ‘प्रशस्तयः’ प्रशंसाः स्तुतयश्च भवन्तु ॥ ५ ॥ १११

---

१११ उत्तरार्चिकस्य ७,२,१०,१।

I दैवानीकम्, पथो वा पक्थस्य ऋषिः।

वसुभिः स्तोतृभिः स्तुतः, ‘सुहोता’ ‘स्वध्वरः’ ‘एषः’ गन्ता ‘अग्निः’ त्वम् ‘नः’ अस्माकमुपरि माहृणीयाः’ मा क्रोत्सीः—इत्ययमर्थो वि०-सम्मतः। हृणिर्निघण्टु-द्वितीय-द्वादशे क्रुध-कर्मसु, शंसतिश्च निघण्टु-तृतीय-चतुर्दशे पठितो दृश्यते।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

१ २　　　२ १र २ ३ १र　　२र ३ १ २
यजिष्ठं त्वा ववृमहे देवं देवत्रा होतारममर्त्यम।
३ २ ३ १ २　३ १ २
अस्य यज्ञस्य सुक्रतुम्॥ ६ ॥११२

३　　　४ २　४ ५　　१र १ र र र
I याऽ५जि। ष्ठं त्वा ३वा ३वृमहाइ। देवं देवत्रा हो·
२　　१　२　　१ ७　　　　१　४
ता२३राम्। आमर्त्तियम्। आस्ययाज्ञा२३। स्या२३सू३।
२　　५　४
क्रा३४५तो६हाइ॥ ३७॥ ११२

हे अग्ने! 'यजिष्ठं' यष्टृतमं 'त्वा' त्वां 'वव्रमहे' वृणीमहे सम्भजामहे। कीदृशं त्वाम्? 'देवत्रा'(१) देवेषु मध्ये 'देवम्' अतिशयेन दानादि-गुणम्। 'होतारं' देवानामाह्वातारम्। 'अमर्त्यम्' अविनाशिनम्। 'अस्य' 'यज्ञस्य' यागस्य 'सुक्रतुं' सुष्ठु कर्तारं(२)॥ ६ ॥ ११२

---

११२ उत्तरार्चिकस्य ६,२,१३,१।
I गौतमं साध्यं वा।

(१)—"निपातस्य च (६,३,१३६)" इति दीर्घः।

(२)—'यजिष्ठम्, 'देवत्रा' 'देवम्,' 'होतारम्, 'अमर्त्यम्' 'सुक्रतुम्' 'त्वा' त्वाम् 'वव्रमहे' प्रार्थयामहे। 'अस्य' प्रक्रान्तस्य यज्ञस्य परिसमाप्त्यर्थमिति शेषः। अयमर्थो विवरणकृत-सम्मतः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

१ २ ३ १र २र २ ३ २ ३ १ २ ३ १ २ ३ १ २

तदग्ने द्युम्नमाभर यत्सासाहा सदने कञ्चिदत्रिणम्।

३ १र २र ३क २र

मन्युं जनस्य दूढ्यम्॥ ७ ॥११३

४ र र ४ २ १र २ १

I तदग्नेद्यू५म्नम्। आभरोवा। यञ्चासार२३हा। स-

३ १ २ १

दार२३नाइ। कञ्चिदत्रार२३इणाम्। मान्युञ्जनस्यदू२३

१ ५ ५र ५ ४ ४

ह्वो। ढार२३४याम्। एह्यिया६हा। हो५इ। डा॥ ३८ ॥११३

हे 'अग्ने!' 'तत्' 'द्युम्नम्' अन्नं यशोवा 'आभर' अस्मभ्यमाहर। 'यत्' यदा 'आसदने' यज्ञ-गृहे वर्त्तमानं कञ्चित् कमपि 'अत्रिणम्' अत्तारं राक्षसादिकं 'सासाह' अत्यर्थमभिभव। तथा 'दूढ्यं'(१) दुर्धियं पाप-बुद्धिं(२) शत्रुं 'जनस्य' 'मन्युं' क्रोधं च अभिभव, तदेति पूर्वत्रान्वयः॥

"दूढ्या"-"दूढ्यम्"-इति च पाठौ॥ ७॥ ११३

---

११३ नास्तीयमुत्तरार्च्चिके। ७६

I संवर्गः, जमदग्निऋषिः।

(१)—"तन्वादीनां छन्दसि बहुलम (६,४,८६)"-इति वचनात् यणि, छान्दस-रफ-लोपे च रूपम्।

(२)—'दूढ्यः, दुर्धियः पापधियः'-इति नै० ५,४,२६।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

विश्वमना ऋषिः।

१र २र३ १ २ ३ १र २र३ १ २ ३ २
यद्वा उ विश्पतिः शितः सुप्रीतो मनुषो विशे।
२उ ३ १२उ ३ १ २
विश्वेदग्निः प्रति रक्षांऽसि सेधति॥ ८॥ ११४

२ १र ४ ५ १ र२र १ २र १र
I यद्वाउ२३विश्पतिः शिताः। सुप्रीतोमनुषोविशे।
२ १ २ १ २र २ र २ १ २ ४ ५
विश्वाइदा२३ग्नीः। प्रतिरक्षां। सिसेधता। औ२होवा।
५
होपुइ। डा॥ ३८*॥ ११४

इति द्वितीय-दशति॥

'विश्पतिः' विशां पतिः(१) पालयिता 'शितः' हविर्भिस्तीक्ष्णी-

---

११४ नास्तीयमुत्तरार्चिके। ७७
I राक्षोघ्नम्, अगस्त्यऋषिः।

(१)—विडितिमनुष्य-नामधाहि—'मनुष्य-नामान्युत्तराणि पञ्चविंशतिः'-इति नैघण्टुम् २,२,८ निघण्टौ द्वितीय-तृतीये चतुर्थम् पदं विशः-इति तेषां पतिरीश्वरः।

---

* इति ग्रामे गेय-गाने तृतीयस्यार्द्धः प्रपाठकः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



शातः(२) सोऽग्निः 'सुप्रीतः' सुष्टु प्रीतः सन् 'मनुषः' मनुष्यस्य 'विशि' [विश निवेशने (तु०प०] गृहे 'यद्वै'(३) यदा खलु वर्त्तते तदा-नीम् 'अग्निः' 'विश्वाइत्' विश्वान्येव(४) तस्य बाधकानि रक्षांसि 'प्रति(५)सिधे धति' हिनस्ति। [षिधु गत्यां(६) भौवादिकः]; 'उ'-प्रसिद्धौ॥

"विशे" "विशि"-इति च पाठौ॥ ८॥ ११४

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने प्रथमस्याध्यायस्य द्वादश खण्डः॥ १२॥

---

(२)—'शो तनुकरणे (दि०प०) इत्यस्यैतद्रूपम्, श्यतिः संस्कारार्थः, शितः संस्कृत इत्यर्थः'-इति वि०।

(३)—'वै, उ—द्वावपि पाद-पूरणे।

(४)—विश्वा-इति "सुपां सु लुक् (७,१,३९)"-इत्यादिना आले रूपम्। 'इदिति पादपूरणः-इति वि०।

(५)—'प्रति शब्दः पाद-पूरणः'-इति वि०।

(६)—गत्यर्थः सोऽयमिह हिंसार्थः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।

पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः॥ १॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिक-मार्ग-प्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्येण विरचिते माधवीये-सामवेदार्थ-प्रकाशे छन्दोव्याख्याने आग्नेय-पर्वणि प्रथमोऽध्यायः॥ १॥

॥ समाप्तम् आग्नेयं पर्व आग्नेय-काण्डं वा॥

॥ इति १म पर्व॥

(सामवेदीय-मन्त्र-भाग-लभ्याः सन्ति यावन्तः अग्नि-दैवता मन्त्राः तावन्तः सर्वएवेहैव पर्व्वणि काण्डे वा दृश्यन्ते।)

---



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १ ॥

## अथ द्वितीयाध्याय आरभ्यते ।

अस्मिन्नध्याये इन्द्रः स्तूयते * ।



अथ प्रथमे खण्डे—

सेयं प्रथमा ।

शंयुर्वार्हस्पत्यऋषिः † ॥

१ २    ३ १र   १र    ३ २ ३ १ २
तद्वो गाय सुते सचा पुरुहूताय सत्वने ।
२उ   ३ २   ३ १ २
शंयद्गवे न शाकिने ॥ १ ॥ १

---

* इत आरभ्य चतुर्थाध्याय-शेष-पर्य्यन्तमध्याय-त्रयात्मकमैन्द्रं काण्डमैन्द्रं पर्व्व वेत्युच्यते ।

† 'भरद्वाजस्यार्षम्'-इति वि० ।

१ उत्तरार्च्चिकस्य ८,२,४,१ ।१



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र ४ ५　　१　　३ २　३　५
I ओम् । तद्वौहोवा । गायार । सुताइसार२३४चा ।

१ २र र　　१ २　　१　　२ २
पुरुहूता । यसात्वा१नारइ । शंयन् । हा । औ३होइ ।

२　५　　१ ३　५र र　　२　१　१ १ १ १
गार२३४वाइ । नार२शार२३४औहोवा । ए३ । किने२३४५

॥ १ ॥

हे "स्तोतारः !" "वः" (१) यूयम् "सुते" अभिषुते सोमे सति "पुरुहुताय" बहुभिर्यजमानैराहुताय "सत्वने" शत्रूणां सादयित्रे [यद्वा धनानां सनित्रे दात्रे (२)] इन्द्राय "तत्" स्तोत्रम् "सचा"(३) सह संहता भूत्वा "गाय" गायत । "यत्" स्तोत्रं "शाकिने" (४) शक्तिमते इन्द्राय "शं" सुखकरं भवति । "गवे न" यथा गवे यवसं(५) सुखकरं तद्वदित्यर्थः(६) ॥ १ ॥ १

---

(१) —'द्वितीया-बहुवचनमिदं प्रथमैक-वचनस्य स्थाने द्रष्टव्यम्'-इति, 'अन्तरात्मन एवायं प्रैषः, हे मदीयान्तरात्मन् !'-इति च वि० ।

(२)—'सत्वने' षणु दाने इत्यस्यैतद्रूपम्, दात्रे स्तोतृभ्यः'-इति वि० ।

(३)—'सचा सह इत्यर्थः'-इत्यादि नैरुक्तम् ५,१ ।

(४)—शकनं शाकः शक्तिः ।

५ —यवसं इ-अमच् घासं तृणम् ।

(६)—विवरण-मते 'शाकिने'-गवे'-इति विशेष्य-विशेषणे । तथाच—यथा कश्चित् कृषीवलः शक्तिमते वृषभाय सुखकराः स्तुतीरुच्चारयति, तद्वदिन्द्रस्य सुखकरं स्तोत्रमुच्चारयेत्यर्थः सम्पन्नः ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र र २ १ र २
II तद्वोगाया। सुताइसचा३। पूरू२३हूता३४।

३र २ १ २ ३ ५ २ १ २
हाहो३। यासत्वा२३४नाइ। शंयद्गा२३वे। नशौ२।

१ ५ ४ ५
हौ२। ऊवो२३४। वा। का५इनो६हाइ॥२॥

५ र र र ५ २ र १र २र १
III तद्वोगायसुतेसचा६ए। पुरुहूतायसत्वने। पुरु।

र १र १ ० २ ५ २ २ ५
हूता। यासत्वा२३ना३४इ। शंयत्। गौवाओ२३४वा।

१ ४ २ ५
ना२३शा३। का३४५इनो६हाइ॥३॥

५ र र र ५ २ र १र
IV तद्वोगायसुतेसचा६ए। पुरुहूतायसत्वनाइ। शं-

२ २ १ १ २
यद्गा२३वे। ऐ२हो१आ२३इहो। नशा२३। का२इना-

५र र ३ ३ १ १ १ १
२३४औहोवा। ई२३४५॥४॥१

---

I,II,III,IY "रौद्रे द्वे मार्गीयवे द्वे, अपि वा मार्गीयवं च रौद्रे च मार्गीयवं च, सर्वाणि वा रौद्राणि सर्वाणि वा मार्गीयवाणि। इत्यार्षेयकम।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

सुभकाचकऋषिः * ।

१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

यस्ते नूनꣳशतक्रतविन्द्र द्युम्नितमो मदः ।

१ २ ३ १ र २ र

तेन नूनं मदेमदेः ॥ २ ॥ २

४ र र ४ १ र १

I यस्तेनूनापूꣳशतक्रताउ। इन्द्रद्युम्नितमोमा २हाः ।

२ र १ र २ १ ऽ २ १ १ १ १

तेननूना२३म्मा। दाइमा३उवा३। दे२३४५ः ॥ ५ ॥ २

अत्र सोमः स्तूयते—

हे "शतक्रतो"-शतविध-प्रज्ञान! (१) हे "इन्द्र!" (२)

---

* 'श्रुतकक्षस्यार्षम्'-इति वि० ।

I आख्यम् ।

(१)—'क्रतुरिति निघण्टु-तृतीय-नवमे पञ्चमं पदम्। 'शतमिति बहु-नाम (नि०३,१,१०), क्रतुरपि कर्म-नाम (नि०२,१,११) शतं क्रतवो यस्य स शतक्रतुः, तस्य सम्बोधनं शतक्रतो! बहु-कर्मन्!'-इति वि० ।

(२)—इन्द्रः अन्तरीक्षस्थ-देवः, "यो जातएव प्रथमो मनस्वान् देवो देवान् क्रतुना पर्यभूषत्। यस्य शुष्माद्रोदसी अभ्यसेतां नृम्णस्य मह्ना सजना स इन्द्रः"-इति ऋक्; "वायुर्वेन्द्रो वा अन्तरिक्ष-स्थानः (७,३,१)"-इति हि नैरुक्ताः; "वायु-स्य वायुरेव "इन्द्रः इरां दृणातीति वेरां ददा रिन्द्रस्यैक एव यथा बलः कः"-इति तद्-भाष्यम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

हर्यतः प्रगाथः*।

२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
गाव उपवदावटे मही यज्ञस्य रप्सुदा।

"द्युम्नितमः"(३) यशस्वितमः "यः मदः" [माद्यन्त्यनेनेति मदः सोमः] यः सोमः "नूनं" पुरा "ते" त्वदर्थम् अस्माभिरभिषुतोऽस्ति। "तेन" अस्माभिर्दीयमानेन सोमेन "नूनम्" इदानीम् "मदे"(४) तत्पानेन मदे। तव सञ्जाते सति अस्मानपि "मदेः" धनादिदानेन त्वं मादय [मदी हर्षे, अत्रान्तर्भावितण्यर्थः] "छन्दसि बहुलम्"-इति शप्(५)॥२॥२

---

* 'हर्य्यतस्यार्षम्'-इति वि०। प्रग्रथनं प्रगाथः।

तीति वेरां दधातीति वेरां दारयतइति वेरां धारयतइति वेन्धे भूतानीति वा तद् यदेनं प्राणैः समैन्धत तदिन्द्रस्येन्द्रत्वमिति विज्ञायत इदं करणादित्याग्रायण इदम्-मादित्यौपमन्यव इन्दते वैश्वर्यकर्मण इञ्छत्रूणां दारयिता वा द्रावयिता वा यज्वानाम्-इत्यादि नैरुक्तम् १०,१,८। "इरा शब्दे उपपदे दृणातेर्दधातेर्दारयतेर्धारयतेर्वा"—इत्यादि, "इरामन्नं तेन सम्बन्धाद्वा तद्धेतु-हेतुकं बलं लच्यते, तेन बल-लक्षित-लक्षणया तदाधार-भूतो मेघः"-इत्यादि च देवराजः॥

(३)—'द्युम्नं द्योतते, तेन दीप्तार्थस्य, अतिशयेन दीप्तितमः'-इति वि०।

(४)—'मदे सप्तम्येकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम्, मदेन; 'मदेः' माद्यस्वेत्यर्थः'-इति वि०।

(५)—'छन्दसि शायजपि (३,१,८४)'-इतश्छन्दसि पदं 'व्यत्ययो बहुलम् (३,१,८५)' इतो बहुलंपदञ्च सङ्कलय्य छन्दसि बहुलमिति वचनम्। वस्तुतोऽयमुपग्रह-व्यत्ययः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १र २र　२ १ २
उभा कर्णा हिरण्यया ॥ २ ॥३

४र ५　४　५　२　२　१　२
I गावः । ए गावाः । उपव । दा३ । वा२दा

५र र　२　५　१　२　५　२ १
२३औहोवा । वा२३४टे । महीया२३४ज्ञा । स्यरा३ ।

१　२　५र र　२　५　२　२　५
स्यार२रा२३४औहोवा । प्सू२३४दा । उभाका२३४र्णा ।

१ २　१　२　५र र　२　५
हिरा३ । दार२इरा२३४औहोवा । ण्या२३४या ॥ ६ ॥

हे "गावः" घर्मदुघाः ! (१) यूयम् "अवटे"(१) अवटं महावीरं(२) प्रति "उप वद" उपावत [वर्ण-व्यत्ययः (३,४,९८] उपागच्छत । "यज्ञस्य" घर्म-यागस्य(१) साधन-भूते "रप्सुदा"(१) रप्सुदे आ-रिप्सोः फलदे [रिप्सोरश्विनोर्दातव्ये वा ; यद्वा रपणं शब्दनं रप् मन्त्रः, तेन सुदातव्ये ; अथवा षुद चरणे (भ्वा० आ०), रपा मन्त्रेण चारणीये दोहनीये, ईदृशे] गवाजयोः पयसी "मही" महती(४) बहुले अपेक्षिते, अत उपावत [गो-शब्दो

---

३ उत्तरार्चिकस्य ७,३,१६,१ ।२

(१)—'शे-भावे (७,२,३९) पररूपे (६,१,७०) च रूपमिदम् ।

(२)—"घर्म-यागे प्रधान-भूतं महावीर-नामकमग्निम्"-इति वि० ।

(३)—,(४)—द्विवचनार्थे एकवचनम् (३,१,८५) ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३ ५ २ १ २ २
II ओइ गा२३४वाः। उपवा३दा। वाटाओ२३४-

५ २१र २ १ २ २ २ ५ १ ५
वा। महीयज्ञस्यरपसुदा३। ओ३उ२३४भा। कार्णा

५ २ १ १११९
ओ२३४वा। हिरण्यया२३४५॥ ७॥ ३

अजाया अप्युपलक्षकः, अजा-पयसोऽपि महावीरे आसेचनीयत्वात्]। अपिच अस्य महावीरस्य "उभा"(५) "उभौ" कर्णा(६) कर्णस्थानीयौ द्वौ रुक्मौ "हिरण्यया"(७) हिरण्मयौ सुवर्ण-रजतमयावित्यर्थः(८)॥

"उपवदावटे"-इति छन्दोगाः, "उपावतावतम्"-इति बह्वृचाः॥ ३॥ ३

I,II ऐटते।

(५),—(६).—सुपां सु-लुगित्यादिना (७,१,३९) आलम्।

(७)—"ऋत्व्य-वास्त्व्य-वास्त्व-माध्वी-हिरण्ययानि छन्दसि"। ६,४,१७५।

(८)—'गावः' हे मदीया वाचः! 'अवटे' अवटं मेघम् 'मही' महत्यौ च द्यावापृथिव्यौ 'उप' उपगम्य 'वद' वदत। कीदृशं मेघम्? 'उभा कर्णा हिरण्यया' उभौ कर्णौ हिरण्मयौ यस्य। कीदृश्यौ द्यावापृथिव्यौ? 'यज्ञस्य रप्सुदा' यज्ञस्य रूपदे। अयमर्थो विवरण-कृत्सम्मतः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

द्वयोः श्रुतकक्षनाम ऋषिः।

३ १ २    ३ १ २ ३ २ ३ १ २
अरमश्वाय गायत श्रुतकक्षारङ्गवे।
३१ २३ १ २
अरमिन्द्रस्य धाम्ने ॥ ४ ॥ ४

२ २ ५र ५ १ १
I अरा३४म्। अश्वाय। गायाऽ६ता। श्रूतक।
र १ २ २ ५ २ २ १
क्षाराङ्गावाइ। आर२३४राम्। हा३हाइ। इ। द्राम्ना-
२ १ २ २ २ ५र र २
२३धा। ऊम्नाये३। म्नो। या२३४औहोवा। ई२३
५
४नी ॥ ८ ॥

४ ५ ४ ५र र र ४ ५ १ र २ १ २
II अरमश्वायगायता। रमश्वोवा। यागायत। श्रुत-
१ २ २ १ २ ५ १
क। क्षार३। हा३हा३इ। आरार२ङ्गा२३४वाइ। आ

श्रुतकक्षऋषिरात्मानमेव सम्बोधयति(१)—हे'श्रुतकक्ष' आत्मन्!

---

I, II श्रौतकक्षे।

(१)—नेदं वि०-सम्मतम्, तत्र हि "हे 'श्रुतकक्ष' श्रुतकक्षस्य मम पुत्र!"-इति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

श्रुतकक्षचक्षृषिः।

१र २र ३ २ ३ २ ३ १ २
तमिन्द्रं वाजयामसि महे वृत्राय हन्तवे।

१र २र ३ १ २
स वृषा वृषभो भुवत्॥ ५॥ ५

२ २ २ १ २र १ २ ४ ५ ४
रमिन्द्रा३। हा३हा। स्याधाम्ना। औ३होवा। हो

५इ। डा॥ ८॥ ९

"अरम्" अलं "गायत" [वचन-व्यत्ययः (३,१,८५] गाय गीतिं कुरु। किमर्थमिन्द्रोद्देशेनस्तुतिस्तत्राह—"अश्वाय" इन्द्रेण दीयमानायाश्वाय तदर्थम् "अरम्" अलं गाय इन्द्र-विषयं स्तोत्रं कुरु, तथा "गवे" अलं गाय; "इन्द्रस्य" इन्द्रकर्तृकाय "धाम्ने" गृहाय तदर्थञ्च "अरम्" पर्याप्तं स्तुहि; गृहादिकमिन्द्रः प्रयच्छति, तस्मै गायेति [यद्वा इन्द्रस्येति कर्मणि षष्ठी, गवादिलाभार्थमिन्द्रं स्तुहि॥

"श्रुतकक्षा"—"श्रुतकक्षः"-इति च पाठो॥ ४॥ ४

यजमानाआहुः—"तम" पूर्वोक्तलक्षणम् "इन्द्रम्" वाजया-

---

५ उत्तरार्चिकस्य ५,१,१०,१। ३



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ ०४र ५र १ २र२र १ २
I तमिन्द्रा२३वाजयामसि। माहेवृत्रा। यहान्ता-

१ २ २ १ ५ ४ ५
१वे२। सवाषी१वा२३। षभो२३४वा। भूपुवो६हा

इ॥ १०॥

२ १ ०४र र ५ १ र२र १
II तमिन्द्रा२३वाजयामसिहाउ। माहेवृत्रा। यहा

२ १ २ २ २ १ २ १ २
न्ता१वे२३। होवा३हाइ। सवाषी१वा२३। होवा३

२ १ १ २ ५र र २ २र १ १
हा। षभो२३। भूरवा२३४औहोवा। ए३। दावह-

१ १ १ १
२३४५॥ ११॥

मसि"(१) सोमेन स्तुतिभिर्वाजयामः वाजवन्तं कुर्मः, किमर्थम्? "महे"(२) महान्तम् "वृत्राय"(३) अपावरकं वृत्रासुरं "हन्तवे"(४) हन्तुम्, सोमपानेन मत्तः स्तुतिभिर्वा स्तुतः सन्, वृत्रहत्यायाञ्च,

---

I तन्वः पार्थऋषिः।

II तन्वः पार्थो वा दावसुराङ्गिरसो वा ऋषिः।

(१)—'वाजयति'-इति निघण्टु-तृतीय-चतुर्दशे पञ्चत्रिंशत्तमं पदम्। "इदन्तो मसि (७,१ ४६)"-इति मसइगागमे रूपम्।

(२),—(३)—द्वितीयार्थे चतुर्थी (२,४,९८)।

(४)—"तुमर्थे से सेन् (३,४,९)"-इति तवेन् प्रत्ययः।

३८क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र र ५ २ २ १ २र
III तमिन्द्रं वाजयामसीऽ६ए। महाइहाइ। वृत्राइ-
१ ७ १ २ र १ २ र
याहन्तवे२। ओ२। ई२३या। ओमोवा। सहे-
१ १ १ २ १ २ १
वार्षा२। ओ२। ई२३या। ओमोवा। वृष। भो२
२ ५र र २ ५
या२३४औहोवा। भू२३४वात्॥ १२॥

२र र १ २ र ४५
IV औहोइऊवाइहोइ। तमिन्द्रं वाजयाइमसी।
२र र १ २र ४ २ ३५र ५र र
औहोइऊवाइहोइ। महेवृत्राइयाइहन्तवे। औहोइ
१ २ २३ ५ २१र २ १ २
ऊवाइहोइ। सवार्षा२३४वृ। षभोभुवत्। इडा२३भा
४ ५ ४ ५
३। एहीडा। होपुइ। डा॥ १३॥५

[वाजयामसि वाजवन्तं करोतीत्यर्थे तत् करोतीति(५) णिच्, 'णाविष्ठवत्(६)'-इति णेरिष्ठवद्भावात् 'टेः' (६,४,१५५)-इति टिलोपः,

---

III वसिष्ठऋषिः, निवेष्टो नाम।

IV वसिष्ठऋषिः इडा वा ऋषयः, निवेष्टः संचारी नाम।

(५)—"तत् करोति तदाचष्टे"-इति गणसूत्रम् (३,१,२५)।

(६)—"प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च"-इति ग०(३,१,२५)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

इन्द्रमातरोदेवजामयऋषिकाः।

१ २ ३ २ ३ २ ३ १ २ ३ १र २र
त्वमिन्द्र बलादधि सहसो जातओजसः।
१र २र३ १र १र
त्वꣳसन् वृषन् वृषेदसि॥ ६ ॥६

५र २ १ २ २ १
I हाउत्वमिन्द्रा। बलादधि। हाउवहाउ। सह-
२र र १ २ २ २ २ १ २
सोजा। ताओ१जसा२ः। हा३उहाउ। त्वाꣳसन्वृषा
२ २ १ २ २ ५र र
३न्। हा३उहाउ। वृषाये३त्। आ२सा२३४औहो
२
वा। वृषे१॥ १४॥

'विन्मतोर्लुक्(५,३,६५)'-इति वचनान्मतुपो लुक्] "वृषा" धनानां सेक्ता दाता "सः" इन्द्रः "वृषभः" अस्माकं स्तोतॄणां सोमस्य दातॄणां धनादि-सेचको दाता(५) "भुवद्"(६) भवतु॥ ५॥ ५

हे "इन्द्र!" "त्वम्" "सहसः"(१) परेषामभिभावुकाद

(५)—'वर्षणाद् वृषभः'-इति नै०९,३,१।

(६)—लेटोरूपम्।

(१)—'षह मर्षणे, छन्दस्यभिभवार्थः, असुन्'-इति देवराजयज्वा।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र ५ १ २र र १ २ २
II त्वमिन्द्रबलादधीइ९ए। सहसोजा। ताओ१जसः।

३ २ १ ३ २ ३ ५ १ २ ३ २ १
इयाइहोइ। इयायो२३४वा। त्वाꣳसन्वृषन्। इयाइहो

३ २ २ ५ २ १ २ १ २ ५र र
इ। इयायो२३४वा। वृषायेइत्। आ२सा२३४औहो

२
वा। महे१ ॥ १५ ॥

४ ५ ४५र ४ ५ ४ ५ ४ १ १र
III त्वमिन्द्रबलादधिसहसाः। जाता२ः। ओजसा

४ ५र ४ १ २ ४ ५र ४
२३४ः। इहोइहा। त्वाꣳसन्वृषा३४न्। इहोइहा।

२ १ २ १ ३ ५र र ३ ५
वृषायेइत्। आ२सा२३४औहोवा। ई२३४हा ॥ १६ ॥ ६

"बलात्" "अधि जातः" असि(२) [अधिः पञ्चम्यर्थानुवादकः। वृत्रादि-वध-हेतु-भूताद् बलाद्धेतोस्त्वं प्रख्यातो भवसीत्यर्थः] अपिच "ओजसः" ओजोनाम बल-हेतुः हृदय-गतं धैर्यं, तस्मा-

---

I,II,III आर्ष्याताानि त्रीणि।

(२)—'बलस्य त्वयि दृश्यमानत्वात् कारणानुविधायित्वस्य कार्याणामिष्यमाणत्वात्'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

गोषूक्त्यश्वसूक्तिनौ ऋषी वृचस्य(०)।

३ १र २र ३ २उ ३ १ २
यज्ञ इन्द्रमवर्द्धयद्भूमिं व्यवर्त्तयत्।
३ १ २ ३ २ ३ २
चक्राण ओपशन्दिवि ॥ ७ ॥ ७

५ ५ २ १र १ ०
I यज्ञइन्द्रमवर्द्धा६याट्। यद्भूमिम्। व्या। व्यवा-
२ ५ २ ५ २ ५ १ २ १
र्त्ता२३४यात्। चा२३४क्रा। णा२३४ओ। पाशन्दिवि।
१ ३र २ १ १ २ ५र र २ ५
चक्राणओ२३। पा२शा२३४औहोवा। दी२३४वी ॥१७॥ ७

इपि त्वं जातोऽसि(२)। हे "वृषन्" वर्षितः! "सन्" श्रेष्ठः "त्वम्" "वृषा इत् असि" कामानां वर्षितैव भवसि(४) ॥ ६ ॥ ६

"यज्ञः" यजमानैरनुष्ठीयमानो यागः "इन्द्र" देवम् "अवर्द्ध

---

(०)—अस्याऋचः, उत्तरस्याश्चेत्यर्थः। वृचस्येति स-यकारपाठोयुक्तः।

७ उत्तरार्च्चिकस्य ८,१,९,१। ४

I इन्द्राण्याः साम।

(२)—ओजसइति षष्ठ्यन्तं व्याख्यातं विवरणकृता। तथाच—'ओजसः' परकीयस्य बलस्य-'सहसः' अभिभावुकात् 'बलात्' 'अधिजातः'-इति वि०।

(४)—'इदिति पाद-पूरणः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ अष्टमी।

१ २ ३ २उ २ १र २र ३ २ ३ २ ३ २

यदिन्द्राहं यथा त्वमीशीय वस्व एक इत्।

३ २ ३ १ २

स्तोता मे गोसखा स्यात्॥ ८॥८

यत्" [श्रूयते हि—'इन्द्र इदं हविरजुषतावीवृधत महोज्यायो ऽक्रतः'-इति] स इन्द्रः "यत्"(१) यस्मात् "भूमिम्" पृथिवीं (नि०१,१,१६) "व्यवर्तयत्" वृष्ट्यादि-प्रदानेन विशेषेण वर्त्त-मानामकरोत्। किङ्कुर्वन्? "दिवि" अन्तरिक्षे मेघम् "ओपशं" उपेत्य शयानं(२) "चक्राणः"(३) कुर्वन् [यद्वा आत्मनि समवेतो वीर्यविशेषः ओपशः, तमन्तरिक्षे कुर्वन्॥ ७॥ ७

हे "इन्द्र!" "यथा" "त्वम्" "एकइत्" एकएव केवलः "वस्वः"(१) वसुनः धनस्य ईशिषे, एवम् "अहम्" अपि "यद्" यदि "ईशीय" ऐश्वर्य्य-युक्तः स्याम्!! तदानीं "मे" मम

---

८ उत्तरार्चिकस्य ८,२,८,१। ५

(१)—'नपुंसकलिङ्गमिदं पुंल्लिङ्ग-स्थाने द्रष्टव्यम्। 'यः' 'भूमिम्' 'पृथिवीम्' 'व्यवर्त्तयत्' विवर्त्तयति विवर्त्तितवान् वा अन्यरूपां करोतीत्यर्थः'-इति वि०।

(२)—'गर्जित-लक्षणं शब्दं कुर्वन्'-इति वि०।

(३)—"लिटः कानज्वा (३,२,१०६)"।

(१)—व्यत्ययेन पुंल्लिङ्गः (३,४,८८), "जसादिषु छन्दसि वा वचनम् (७,३,१०७)"-इति कात्यायन-वचनात् गुणाभावश्च।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ र ४ ५र  ४र  ५  ४  २र
I यदिन्द्राहं यथौ । हौहोवाहाइ । तुवाम् । ई-

१र  २  १  १  २  १  २र १र
ग्रीयवस्वऔ२ । ऊवाइ । ऊवाये । काई२त् । स्तोता

र र २  १  १  २  १  १
येगोसखौ२ । ऊवाइ । ऊवाये । सायार२३त् । हो-

२  ५र र  २ १ र २ २ १ १ १ १
२वा२३४औहोवा । अग्निराऊता२३४५ः ॥ १८ ॥

२ २र ४  ५  ५  र  २ १  १
II आऔहोवाहाइ । यदिन्द्राहाम् । यथा । त्वम् ।

२र र२र २  १  र २  २  २र र २र २
ऐहीयैहो१ । आइग्रीयवस्वआइकइत् । ऐहीयैहो१ ।

१  १  २ १  १  २
आ२इ । स्तोता२माइगो२ । सखा२३ । सा२या२३-

५र र  २ १ र २ २ १ १ १ १
४औहोवा । ग्ग्राक्रआऊता२३४५ः ॥ १९ ॥८

"स्तोता" "गोसखा स्यात्" गोभिः सहितो भवेत् [ईश्वरस्य तव स्तोता कुतो हेतोर्गो-सहितो न भवेत्? अपितु भवेदेवेत्यभिप्रायः ॥ ८ ॥ ८

---

I, गोषूक्तम् ।
II अश्वसूक्तम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी ।

मेधातिथिराङ्गिरसऋषिः ।

१२ ३१२ ३१ २ ३१२
पन्यं पन्यमित्सोतार आ धावत मद्याय ।
१२ ३२३ १२
सोमं वीराय शूराय ॥ ८ ॥ ९

४५ ४ ५र ५ १ २ २
I पन्यम्पन्यमित् । सोताइराः । पन्यम्पन्यमित्सो१ता
२ १ २र ३ २३४५ १ २र १
इराः । आ । धावत । मदियाया । सोमं वी । रा२३ ।
३२४
यशूइरापूयाइ५इ ॥ २० ॥ ९

हे "सोतारः" अभिषोतारोऽध्वर्यवः ! "मद्याय" मादयितव्याय "वीराय" विक्रान्ताय "शूराय" शौर्यवते इन्द्राय "पन्यम् पन्यम्(१) इत्" सर्वत्र स्तुत्यमेव "सोमम्" "आ धावत" अभि गमयत प्रयच्छतेत्यर्थः(२) ॥ ८ ॥ ९

---

९ उत्तरार्चिकस्य ८,२,१,१ । ६
I गौरीवीतम् ।

(१)—'पनति स्तुत्यर्थः (नि० ३,१४,१६)। 'क्रियासमभिहारे च (८,१,१२)'-इति कात्यायनवचनाद् द्विर्वचनम् ।

(२)—'नयतेत्यर्थः'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

काण्वः प्रियमेधऋषिः* ।

२१ २ २२उ ३ २३ १ २ ३१ २
इदं वसो सुतमन्धः पिबा सु पूर्णमुदरम्।

१ २ ३१ २
अनाभयिन् ररिमा ते ॥ १० ॥ १०

५ २१ ० २ १ २र र २
I इदंवसाउ। सुतमा२३धाः। पिबा२सुपू। र्ण-

१ २ ३ २ ३ २ ४ ५ ४
मुदा२३रा३४म्। अना३४भयाइ२न्। ररोवा। मा-

५
पुतोईहाइ ॥ २१ ॥

हे "वसो" वासयितः! (१) इन्द्र! "इदम्" पुरोवर्त्तमानं 'सुतम्" अभिषुतम् "अन्धः" अन्नम्(२) सोमलक्षणम् "पिबा"(३), यथा "उदरम्" त्वदीयं जठरं "सु पूर्णम्" अतिशयेन सम्पूर्णम् भवति तथेत्यर्थः। हे "अनाभयिन्!" [आ समन्ताद् बिभेत्याभयी, बिभेतेरौणादिक इनिः, न आभयी अनाभयी तादृश!] हे इन्द्र!

---

* 'मेधातिथेरार्षम्'-इति वि०।

१० उत्तरार्चिकस्य १,२,८,१।७

(१)—'प्रशस्तधनवन्' इति वि०।

(२)—अन्धइति अन्ननामसु प्रथमम् नि० २,७।

(३)—'द्व्यचोत: (६,३,१३५)'-इति दीर्घः।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४ ० २ १ र ४ ५ २ १ र २ १ २
II इदा३वसोसुतमन्धाः। पिवाह्व२३पू३। र्णमू२दा-

५ १ २ १ ० २
२३४राम्। आ२३ना। भा२याइन्। ररा२३। हाउ-

१ र ३ १ १ १ १
वा३। माते२३४५॥ २२॥

५ र ५ २ र ३ र १ ० २ र
III इदंवसोसुतमन्धाइए। पिवासुपू३र्णामुदरौ। हो-

२ १ र र ० २ र २ २ २ २
३वा। पिवासुपूर्णामुदरौ। हो३वा। आनाभाइयीन्।

१ २ र १ २ ४ ५ ४
ररीमाता। औ३होवा। होपुइ। डा॥ २३॥ १०

॥ इति तृतीय-दशति॥

"ते" तुभ्यं त्वदर्थं "ररिमा"(४) उक्तगुणं सोमं दद्मः [रा दाने, छान्दसो लिट् (५)॥ १०॥ १०

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य प्रथमः खण्डः॥ १॥

---

I,II,III गानानि।

(४)—'तिङः (६,१,१३५)'-इति योगभागाद् दीर्घः।

(५)—'छन्दसि लिट्' ३, २, १०५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीये खण्डे—

सेयं प्रथमा।

द्वयोः सूतकक्षः सुतकक्षो वा ऋषिः।

२उ　२ २ ३ १ २　३१र २र
उद्घेदभि श्रुतामघं वृषभन्नर्यापसम्।
१ २
अस्तारमेषि सूर्य॥ १ ॥ ११

४ र ४ ५　१२ २　५　११ २ १
I उद्घेदभ्योवा। श्रूतामा२३४घाम्। वृषाभन्ना।
१ २ ५　१　२ १ २र १
रियार्२पा२३४साम्। आ२स्ता। रा२३मे। षाइहरिया।
२ ४ ५　४
औ३होवा। होपुइ। डा॥ २४॥

अस्मिन् तृचे सूर्यरूपेणेन्द्रस्य स्तुतिः क्रियते——'असौ वा आदित्य इन्द्रः'-इति हारिद्रविकम्। हे "सूर्य!" [(१)द्वादशसु भानुषु इन्द्रोऽपि सूर्यात्मना पठितः, तस्मात्] सूर्यात्मक,

---

११ उत्तरार्चिकस्य ६,२,४,१।८
I,II सौपर्णे प्रकप्रवेतसे वा।

(१)—ननु 'वायुर्वेन्द्रो वा अन्तरिक्ष-स्थानः सूर्यो द्युस्थः (७,२,१)'-इति नैरुक्त-सिद्धान्ते कथमिन्द्रसूर्ययोरैकात्म्यमिति शङ्कां निराकुर्वन्नाह—द्वादशस्वित्यादि। आदित्याश्च द्वादश, तत्र मानम्—'अष्टौ वसवः, एकादश रुद्राः, द्वादश आदित्याः-इत्यादि ताण्ड्य'-ब्राह्मणादिकम् २,१,२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र र ५ ४ ३ ४ ५ १
II उद्घेदभिश्रुतामाईघाम्। वृषभन्नर्या। ऊम्।
२ ५ १ २ २ र १ २ १ ५
पा२३४साम्। आस्ता३उवा। रामाइ। षिह्व२३४वा।
४ ५
रा५ूयोईहाइ॥ २५॥

४ र ५ ४ ५ ४र ५ ४ ५ ४ ५ ४ २ ४ ५र
III उद्घेदभिश्रुतामघम्। इयइयाहाइ। वृषभन्नर्या।
२ २ १ ५ १ २ २ १ २
हा३हा३इ। पा२३४साम्। आस्ता३उवा३। रा२मा
५र र २र २ १ १ १ १
२३४औहोवा। षिह्वरिया२३४५॥ २६॥ ११

सुवीर्य्य, हे इन्द्र! "श्रुतामघम्"(२) सर्व्वदा देयत्वेन विख्यात-धनम्, अतएव "वृषभम्" याचमानानां धन-वर्षितारं "नर्य्यापसम्" [नर-हितं नर्य्यम्] नर-हित-कर्माणम् "अस्तारं"(३) दानशौण्डम् औदार्य्यवन्तं एतादृशम् "उदेषि" अभितउदेषि। "इदम्" अवधारणे, त्वमेव तस्य यज्ञे सूर्य्यात्मना उद्गतोऽसि। "घ"-इति प्रसिद्धौ(४)॥ १ ॥११

III विलम्बसौपर्णं गरुप्रवेतस वा।

(२)—"ऋचोऽतः (६,१,१३५)"-इति योगभागाद् दीर्घः।
(३)—'अस्तारं, क्षेप्तारं. शत्रूणाम्'-इति वि०।
(४)—'घा', 'इत्' द्वावपि पादपूरणौ'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ ३ १र २र ३ १ २ ३ १ २
यदद्य कच्च वृत्रहन्नुदगा अभि सूर्य।

३ १ २ ३ १२
सर्वन्तदिन्द्र ते वशे॥ २॥ १२

४ ४ २ १ र २ १र २
I यदद्यका५च्चवृत्रहान्। उदगाअभिह्वरा२३या।

१ १ २ १ २ १ २ ५
सार्वा२म्। तादिन्द्रतायेर। ऊम्। वा३४५शोइहा

इ॥ २७॥ १२

अत्र शौनकः(१)—

"यदद्यकच्चेत्युदिते रवौ स्तुत्वा पुरन्दरम्।
गृणन्नपाहते विप्रं वश्यं वा कुरुते जगत्"-इति(२)॥

हे "वृत्रहन्" वृत्रस्य अपामावरकस्य मेघस्य हन्तः! (३) हे

---

I शाकलम्।

(१)—आथर्वणशाखाप्रवर्तक शौनकः, स्मृतिकारोऽप्यस्ति, शौनकः; स एव स इत्यत्रास्ति संशयः; इह तु कथ्यमानमिदं स्मृतिवचनम्।

(२)—विहितमेतत् सामविधानब्राह्मणे तथाहि—"उदिते यदद्यकच्च वृत्रहन्नित्या-कालं स्वस्त्ययनम्"-इति सा० ब्रा० १प्र० ४ख०।

(३)—वृत्रइति निघण्टौ प्रथम-दशमे मेघ-नामसु अष्टाविंशतितमम्। 'वृत्रः' वृणोतेराच्छादनार्थात् 'स्नुसि-चसि-भिदि-शंसिभ्यः त्रन्' अस्माद् बाहुलकाद् भवति



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

भरद्वाजऋषिः।

१२ २र ३ २ ३ १ २ ३ २ ३ १२
य आ नयत्परावतः सुनीती तुर्वशं यदुम्।

३ २ ३ २ ३ १ २
इन्द्रः स नो युवा सखा॥ ३॥ १३

"सूर्य्य" सूर्य्यात्मकेन्द्र! (२) "अद्य" अस्मिन् दिने(३) "यत् कच्च" यत् किञ्चित् पदार्थजातम् "अभि" अभिमुखीकृत्य "उदगाः" [इण् गतौ उत्पूर्व्वः, तस्य लुङि गादेशः] उदयं प्राप्तवानसि "तत् सर्व्वं" पदार्थजातं "ते" तव "वशे" वशवर्त्ति स्वायत्त-मस्ति॥ २॥ १२

"यः" इन्द्रः "तुर्वशं यदुं" च एतत्संज्ञौ राजानौ शत्रुभिः

---

आच्छादयति ह्यसौ कृत्स्नं नभः। वर्त्ततेर्वा गति-कर्म्मणः, 'स्फायि-तञ्चि'-इत्यादिना रक् प्रत्ययः; गच्छत्यसौ कृत्स्नं नभः। वर्द्धतेर्वा वृद्ध्यर्थात्, बाहुलकात् इति धकारस्य तकारः वर्द्धते हि वर्षासु मेघः। ब्राह्मणोक्ता एवामी वयोऽप्यर्थाः'-इति देवराज-यज्वा। 'अथास्य कर्म—रसानुप्रदानं, वृत्र-बधः'-इति नै० ७,३,२। 'वृत्र-बधो मेघ-बधः'-इति तद्भाष्यम्।

(२)—विवरण-मते सूर्य-इति 'सुपां सुलुगित्यादिना (७,१,३९) सोर्लुकि रूपम्। हे 'वृत्रहन्' इन्द्रः! 'अद्य' 'यत्' 'कच्च' किञ्चित् 'अभि' अभिलक्ष्य 'सूर्य' सूर्यः उदगाः उद्गच्छति प्रकाशयति 'तत्' 'सर्वम्' 'ते' तव 'वशे' वर्त्तत इति-शेषः—इत्यर्थो वि०-सम्मतः।

(३)—'अद्य-ग्रहणं चात्र प्रदर्शनार्थम्, सर्वकालमित्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ १ १ २
I यआहाउ। आनायाँरत्। आनायार३त्। पारार-

२ ५ १र १र १ २
वार३४ताः। सुनीतीतूर। सुनीतीतूर३। वीश्यंयार३४-

५ १ १ १ २ ५र
दूम्। इन्द्रःसानाँरः। इन्द्रःसानार३ः। यूर्वार३४आ-

र २ ५
होवा। सार३४खा ॥ २८ ॥

४ र ५ ४ ५ र ५ १ र र २ ० २
II यआनयत्। परावाइताः। सुनीतीतुर्वशा१या

२ १ र २ २ २ २ ५ २
३दूम्। इन्द्रःसनोयुवा१साइखा। इन्द्रो२३४म्राइ। इ-

१ २ ५ १ २र १ २
न्द्राओ३होर३४। म्राइ। आइन्द्रोअ। म्रा२। यार३४

५र र २ ५
औहोवा। इ२३४न्द्राः ॥ २९ ॥ १३

"परा-दूरदेशे प्रक्षिप्तौ "सूनीती"(१) सुनीत्या शोभनेन नयनेन "परावत." तस्माद् दूरदेशात्(२) "आनयत्" आनीतवान् "युवा" तरुणः "सः इन्द्रः" "नः" अस्माकं "सखा" भवतु ॥ ३ ॥१३

---

I,II आभरद्वसवे।

(१)—'सुपां सुलुगित्यादिना (७,१,३९) पूर्वसवर्णदीर्घः।

(२)—'परावतः'-इति निघण्टु-तृतीय-सप्तविंशतमे दूर-नामसु पञ्चमम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

श्रुतकक्षऋषिः।

१ २ ३ २ २ ३ १ २ ३ १र २र
मा न इन्द्राभ्या३दिशः स्वरो अक्तुषायमत् *।
३ १ २ ३ २
त्वायुजा वनेम तत्॥ ४॥ १४

५र र र ४ ५ १ र २ १र
I मानइंद्राभियादाइशाः। स्वरोअक्तु। षुवाया-
२ ३२ ३ १ १ २ १
२३मा३४त्। तुवा३४युजा। वनाइमा२३ता३४३त्। ओ
२३४५इ। डा॥ ३०॥

हे "इन्द!" "आदिशः" आदेष्टा समन्तादायुधान्यतिसृजन् "स्वरः" [स्व गतौ (भ्वा० प०] सर्व्वत्र सरणशीलः राक्षसः "अक्तुषु" रात्रिषु(१) "नः" अस्माकम्? "अभ्यायमत्" आ आभिमुख्येन "मा" नियन्ताऽऽगन्ता भवतु। यद्यागन्ता चेत् तदा

* "यमत"-इति मु० ख० पुस्तकयोः पाठः।

(१)—अक्तुः इति निघण्टु-प्रथम-नवमे रात्रि-नामसु चतुर्थम्। 'रात्रि-ग्रहणञ्चात्र प्रदर्शनार्थम् सर्वकालमित्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

अस्याः परस्याश्च मधुच्छन्दा ऋषिः।

१ २ ३ २ ३ २ ३ १ २ ३ १ २
एन्द्र सानसिꣳ रयिꣳ सजित्वानꣳ सदा सहम्।

१ २ ३ १ २
वर्षिष्ठमूतये भर * ॥ ५ ॥१५

५र ४ २ ४र ५र २ २ ५
II मानाइआइइन्द्राभियादिशाः। हरीआ२३४त्तू।

२ २ ५ १र र ऽ २ १
षूआया२३४मात्। त्वायुजावनौ३हो। मतौ२। ऊ

ऽ २ १ १११.१
वाइ। औ३हो२३४५वा६५६। ए३। ययू२३४५ः॥१३॥१४*

"तत्" रक्षः "त्वायुजा" त्वत्सहायेन वयं "वनेम" हन्याम [वन्थ

क्नथ हिंसार्थाः, वन चेत्यत्र (भ्वा०प०) पठितत्वाद्धिंसार्थः॥

'आयमत्'-'आयमन्'-इति च पाठौ॥ ४ ॥१४

---

* "भरा"-इति मु० भा० पुस्तकयोः पाठः।

---

I,II तान्वे इमे।

---

* इति ग्रामे गेय-गाने तृतीयः प्रपाठकः॥

४०क



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र५ ४ २ १ र
I ओम्। एन्द्रसा। नसिंरयिम्। सजित्वानं-
२ १र २ १ २ १ र २ २
सदासा२३हाम्। वा२३र्षा। ष्ठामूतया३१उवाये३।
५
भा२३४रा॥ १॥

४र५ र ४ २ १ र २ १र
II एन्द्रसानसाइम। रया२इम्। सजित्वानंसदा-
२ १ १ २ १ ५ ४
सा२३हाम्। वार्षो२ष्ठामू२३। तयो२३४वा। भा५री
५
६हाइ॥ २॥ १५

हे "इन्द्र!" "ऊतये" अस्मद्रक्षार्थम्(१) "रयिम्" धनम् "आ-भर"(२) आहर, कीदृशं रयिम्? "सानसिम्"(३) सम्भजनीयम् "सजित्वानम्" समान-शत्रु-जय-शीलम्(४) [धनेन हि शूरान् भृत्यान् सम्पाद्य शत्रवो जीयन्ते] "सदासहम्" सर्व्वदा शत्रूणामभिभवन-हेतुम् "वर्षिष्ठम्" अतिशयेन वृद्धम् प्रभूत-मित्यर्थः॥ ५॥ १५

---

I,II इन्द्रो विश्वामित्रो वा ऋषिः; रौहिकुलीयं नाम।

(१)—'ऊतये, तर्पणाय'-इति वि०।

(२)—भरा इति "द्व्यचोतस्तिङः (६,३,१३५)"-इत्यन्तदीर्घः।

(३)—वन-षण सम्भक्तौ (भ्वा०प०) इत्यस्येदं रूपम्।

(४)—'सहभतानां शत्रूणां जेतृ'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी ।

१२ ३१२ २२उ ३१२
इन्द्रं वयं महाधन इन्द्रमर्भे हवामहे ।
१२ ३१२ ३१२
युजं वृत्रेषु वज्रिणम् ॥ ६ ॥ १६

१ ० १ ०र
I इन्द्राम् । इन्द्रं वाया २म् । महा । महाधाना२इ ।
१ ० १ ०र १
इन्द्राम् । इन्द्रमर्भा २इ । हवा । हवामाहा २इ । युजाम् ।
० १ ० १
युजं वृत्रा २इ । षुवा । षुवज्रिणा२३४३म् । ओ२३४५इ ।
डा ॥ २ ॥

१ ०र १ २ २ १र
II महा । महाधाना२३इ । आ औ३हो । इह ।

"वयम्" अनुष्ठातारः "महाधने"(१) प्रभूत-धन-निमित्तम्(२) "इन्द्रम्" "हवामहे"(३) आह्वयामः, "अर्भे" अर्भके स्वल्पे-

---

I,II इन्द्राण्याः सामनी ।

(१)—'महति सङ्ग्रामे'-इति वि० । 'महाधने-इति' निघण्टु-तृतीय-षोडशे सङ्ग्राम-नामसु उनचत्वारिंशत्तमम् पदम् ।

(२)—निमित्त सप्तम्यर्थः, चर्म्मणि द्विपिनं हन्तिवदित्याशयः ।

(३)—ह्वः सम्प्रसारणे (५,१,२४) रूपम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

त्रिशोकऋषिः।

१ २ १ १ २ ३ १ २र ३ १ २
अपिवत् कद्रुवः सुतमिन्द्रः सहस्रबाह्वे।
१ २ ३ १ २
तत्राददिष्ट पौꣳस्यम्॥ ७॥ १७

१ २ २ ५ १ ७ २
इहिवाला। ओ२३४वा। इन्द्रमर्भाइ। हवा। हवामा-
१ २ २ १ २ १ २ २
हा२३इ। आ औ३हो। इह। इहिवाला। ओ२३-
५ १ ० १ २
४वा। युजंवृत्राइ। षुवा। षुवज्रिणा२३म्। आ औ
२ १ २ १ २ २ ५ २ ५
३हो। इह। इहिवाला। ओ२३४वा। ई२३४हा॥४॥ १६

ऽपि धने निमित्त-भूते सति(४) इन्द्रं हवामहे। कीदृशम् इन्द्रम्? "युजं"(५) सहकारिणं [समाहितं वा] "वृत्रेषु" शत्रुषु धन-लाभ-विरोधिषु प्राप्तेषु तन्निवारणाय "वज्रिणं" वज्रोपेतम् [महा-धन-शब्दो यद्यपि सङ्ग्राम-वाची तथापि महद्धनमत्र विवक्षितम्(६)॥ ६॥ १६

---

(४)—'अर्भकः'-इति निघण्टु-तृतीय-द्वितीये दशमम्।

(५)—'युज्यते इति युक् सहायः तम् इत्यर्थः'-इति वि०।

(६)—इह विनिगमकं चिन्त्यम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



I अपिबत्काद्रूइवःसुतम्। इन्द्राहो२इ। सहाहो२। स्रावा१इवे२। तत्राददार३ही। ष्टपौर२। हौ२। इवा २इ। ई३या। सियाम्। औ२३होवा। हो५इ। डा॥५॥१७

"इन्द्रः" "कद्रुवः" कद्रुनामकस्य ऋषेः सम्बन्धिनं(१) "सुतम्" अभिषुतं सोमम् "अपिबत्" पीतवान् "सहस्रबाह्वे" सहस्रबाह्वाख्यं शत्रुम्(२) अहन्निति शेषः। "तत्र" तस्मिन्नवसरे(३) "पौंस्यम्" इन्द्रस्य वीर्यम् "आ ददिष्ट" आ दीप्यत(४)॥

'तत्राददिष्ट'-इति छन्दोगाः, 'अत्राददिष्ट'-इति बह्वृचाः ॥७॥१७

---

I इन्द्रऋषिः, सहस्रबाहवीयम्।

(१)—तन्वादित्वात् रूपम्। 'कद्रुर्नाम कश्यपस्य भार्या, तस्याः सम्भूतम्'-इति वि०।

(२)—सहस्रमिति बहुनाम (नि० ३,१,११) बाहुशब्देनापि अवयवेन समुदायस्य सम्बन्धात् कर्त्ता उच्यते। सहस्रं बहवः कर्त्तारो यत्र तत् सहस्रबाहु सत्रं, तस्मिन् पीतवान् इत्यर्थः'-इति वि०।

(३)—'तत्र सत्रे'-इति वि०।

(४)—'अत्यर्थं दृश्यते वर्ण्यत इत्यर्थः; केन? सामर्थ्यान्मन्त्रैः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ अष्टमी।

वसिष्ठऋषिः ।

२१ २ २२ १२ २२
वयमिन्द्र त्वायवोभि प्र नोनुमो वृषन् ।
३२ ३१२
विद्धी त्वा३स्य नो वसो ॥८॥ १८

२१ ५ १ १ २ ५२ २
I वयमा२३४इन्द्रा । त्वा२३ । या२वा२३४औहोवा ।
२१ ३२ २ २२ १ २ ५२
अभिप्रनो२नुमोवृषन् । विद्वाइतुवा३ । स्या२ना२३४औ
२ २ ५
होवा । वा२३४सो ॥ ६ ॥

५२ १ १ २
II हाउवयमिन्द्रा । त्वा२यावा२ः । अभिप्रनोनुमो२-
१ १ १ १ २
वार्षा२न् । विद्वा२इतूवा२ । स्पनो२३ । वा२सा२३४
५२ २ २ १ २ २ १ २ ३ १ १ १ १
औहोवा । अस्मभ्यङ्गातुवित्तमा२३४५म् ॥ ७ ॥

५ १ २ ३ १ २ २ २
III वयमिन्द्रा । त्वाया३वाः । अभिप्रनोनुमो१वा३-

---

I वृषतो मारुतस्य साम ।

II भारद्वाजऋषिः, अदारसृत् ।

III वृषऋषिः, अदारसृत् ।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३ ५ ३ ५ ४ ५
र्षान् । विद्वोढ२३४वा । उ२३४हाइ । स्यनोवा५सो६
५
हाइ ॥ ८ ॥

५ र ४र ५ ४ ५ १ २ २ १ र
IV वयामौहो । इन्द्रा । त्वाया३वाः । अभिप्रनो-
२ २ २ र २ ५ १ २ २
नुमो१वा३र्षान् । विद्वोत्वो२३४हाइ । स्यानो३हाइ ।
१ २ ४ ५ ४
वसा । औ३होवा । हो५इ । डा ॥ ९ ॥

२ २ २र ४ ५ ४ ५ २ २र ४ ५
V वयामौहोवाहाइ । इन्द्रा । त्वाऔहोवाहाइ ।
४ ५ १ २ १ २ १ र २
यावाः । आ२३भो । प्रा२३नो । ओइनुमोवा२३र्षान् ।
१ २ १ २ १ २ ५र र २
वा२३इद्वो । तू२३वा३ । स्या२ना२३४औहोवा । वा
५
२३४सो ॥ १० ॥ १८

हे "वृषन्" कामानां वर्षितः ! "इन्द्र !" "त्वायवः" (१) त्वत्कामाः "वयं" वासिष्ठाः त्वाम् "अभि प्र नोनुमः"(२) प्रकर्षेण स्तुमः । हे "वसो" वासयितः इन्द्र ! "अस्य"(३) इदम् "नः"

---

IV,V मारुतस्य भरद्वाजस्य इमे अदारसृती ।

(१)—त्वां यष्टुमिच्छन्तइति विग्रहे, क्यचि, "नच्छन्दस्यपुत्रस्य (७,४,३५)-इतीत्वाभावे, "क्याच्छन्दसि (३,२,१७०)"-इति उ-प्रत्यये रूपम् ।

(२)—'अभि प्रनोनुमः, अभि प्रेति द्वावपि पाद-पूरणौ, अत्यर्थं स्तुमः"-इति वि० ।

(३)—'अस्य सुतस्य'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

द्वयोस्त्रिशोककऋषिः।

२ ३ २ ३२ ३ १२ ३१ २ ३ १२ ३२
आ घा ये अग्निमिन्धते स्तृणन्ति* बर्हिरानुषक्।
२ २ ३ २३ १२
येषामिन्द्रो युवा सखा॥ ९॥ १९

अस्मदीयं स्तोत्रं "नु" क्षिप्रं(४) "विद्धी"(५) अवधारय॥ ८॥१८

"ये" ऋषयः "आ घा"(१) आभिमुख्येन खलु "अग्निम्" "इन्धते" दीपयन्ति "येषां" च "युवा" नित्य-तरुणः "इन्द्रः" "सखा" भवति(२) ते "आनुषक्" आनुपूर्व्येण(३) "बर्हिः" "स्तृणन्ति"॥ ९॥ १९

---

* "स्त्रिणन्ति"-इति ख० ग० पुस्तकयोः पाठः।
"स्तृणन्ति"-इति ए० पाठः।

---

१९ उत्तरार्च्चिकस्य ५,२,२१,१। ९

(४)—क्षिप्रमिति निरुक्त-द्वितीय-पञ्चदशे प्रथमम्। 'नु इति पादपूरणः'-इति वि०।

(५)—"द्व्यचोतस्तिङः (६,३,१३५)"-इति दीर्घः।

(१)—'घा'-इति "निपातस्य च (६,३,१३६)"-इति दीर्घः। 'आ इत्येषमर्यादायाम् घ-इति पाद-पूरणः'-इति वि०।

(२)—'स्तुत्य-स्तोतृ-लक्षणेन सम्बन्धेन सखिभूतः, सुत-स्तुत्यइत्यर्थः'-इति वि०।

(३)—'आनुषगिति नामानुपूर्व्यस्य'-इत्यादि नैरुक्तम् ६,३,१६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र　र　　४　५　　२　१　　र
I आघाये अग्निमिन्धाताइ। स्तृणन्तिबर्हिरानुषाक्।
१र१र　र　र　　　　　　　१　　　५　४
ऽषामिंद्रोयवाइहा। ऊवाइ। ऊवोर३४। वा। सा५
५
स्वो६हाइ॥ ११॥

५र र ४　　　२ १　　　२ २ ५
II आघायइहा। ग्निमाइ। धाताओर३४वा।
२　५　२　　१　२ २　　२　५
ई२३४हा। स्तृणन्तिबर्हीरा। नूषाओर३४वा। ई२३४हा।
२र १　　२ २　५　२　५　१
येषाम्। आइन्द्राओर३४वा। ई३३४हा। युवा। युवार-
२　　२ ५
सा२३४५खा६५६। ई२३४हा॥ १२॥

५र र र र　५　२ १　२　२र
III औहोआघाया६ए। ग्निमाइन्धाता। औहो२३४
५　२　　१ २　२र　५　२र १
वा। स्तृणन्तिबर्हीरानूषा। औहोर२४वा। येषामा
२　२र　५　२ २　१　५
इन्द्रा। औहो२३४वा। युवा३। सा२३४स्वा। उऊवा
५
६हाउ। वा॥ १३॥ १९

---

I,II,III ऐध्मवाहानि ऐध्महाराणि वा।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

२ २उ २ २ २ २ २ २ ३ १ २ २ १र २र

भिन्धि विश्वा अप द्विषः परिबाधो जही* मृधः।

१ २ ३ १र २र

वसु स्पार्हन्तदा भर॥ १०॥ २०

५ ४ १ २ २

I भि। ध्योहाइ। वाइश्वाअपा। द्वाइषाओ२३४

५ १ २ ३ ५ १र र २ २ २

वा। पाराओ२३४वा। बाधोजहाइ। मार्द्धाओ२३४वा।

१२र १ र २ २ १ १ १ १

वसुस्पार्हन्तदाभरा२३४५॥ १४॥ २०

॥ इति चतुर्थ-दशति॥

हे "इन्द्र!" "विश्वाः" सर्व्वाः "द्विषः" द्वेष्ट्रीः शत्रु-सेनाः "अप(१) भिन्धि" विदारय "बाधः" हिंसित्रीः "मृधः" सङ्ग्रामान्

* "जहि"-इति क-पाठः।

I अहिः पैङ्ग्वस्य सामाहिभो वा पैङ्ग्वस्य पैल्वस्य वा।

२० उत्तरार्च्चिकस्य ४,१,९,१। १०

(१)—'अपउपसर्गश्रुतेः क्रियापदमध्याह्रियते, अपेत्य अस्मत्तः अपनीयेत्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



['स्पृधः', 'स्पृधः'—इति सङ्ग्राम-नामसु पठितत्वात्(१)]. "परि जह्वी"(२) हिंस्याः। ततः तासां "स्पार्हं" स्पृहणीयं "तत्" प्रसिद्धं "वसु" "आ भर" अस्मभ्यम् आ हर॥ १०॥ २०

इति सायणाचार्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य द्वितीयः खण्डः॥ २॥

---

अथ तृतीय-खण्डे—

सेयं प्रथमा।

कण्वोघौरऋषिः।

२ १ २ ३ २ ३ १ २ ३ १र २र
इहेव शृण्व एषां कशा हस्तेषु यद्वदान्।
१र २र ३ १ २
नियामञ्चित्रमृञ्जते॥ १॥ २१

---

(१)—निघण्टौ द्वितीय-सप्तदशे 'स्पृधः'-इति उनविंशतितमं पदम्, तत्परस्तात्च मृधइति।

(२)—द्व्यचोत इति (६,१,१३५) दीर्घः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

द्वयोस्त्रिशोकऋर्षिः ।

३ १ २ ३ १ २ ३ १ २ ३ १ २
इम उ त्वा वि चक्षते सखाय इन्द्र सोमिनः ।
३ १ २ ३ १ २ ३ २
पुष्टावन्तो यथा पशुम् ॥ २ ॥ २२

२ १र ४ ५र १ र र २ २ २
I इहेवा२३श्टण्वएषाम् । कशाहस्तेषुया१दा३दान् ।
र ४ र ३ ५ ३ १र २ १ ० २
नियामञ्चा३त्रा३म्टञ्जताइ । नियामञ्चाइ । त्रमा२ञ्जा-
५ २र २ २र ४र ५ २र १र २र
२३४ताइ । एहिया३४औहोवा । एहियौहोइ । एहि-
१र ५
यौहो२३इ । ए२३४हो ॥ १५ ॥ २१

"एषां" मरुतां "हस्तेषु" स्थिताः "कशाः" स्व-स्व-वाहन-ताडन-हेतवः "यद् वदान्"(१) यद् वदन्ति ध्वनिं कुर्व्वन्ति, तं ध्वनिम् "इहेव" अत्रैव स्थित्वा "शृण्वे"(२) शृणोमि । स ध्वनिविशेषः "यामम्"(३) सङ्ग्रामे "चित्रं" विविधं शौर्यं

I ऐषम् ।

(१)—'यत् यदा'-इति वि० । वदाम्-इति लेटोरूपम् ।

(२)—शृयूते इति वि० ।

(३)—'यान्ति येन स यामो रथः, तम्'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४२४२ २४५२ २ ४ ५ १ २
I इमउत्वाविचक्षते । ए३ । सखायाः । इन्द्रसोमा

२ १ २ १२ २ १ २
२३इनाः । होइहोवा । पुष्टावा२३न्ताः । होइहोवा-

२ १ ५ ४ ५
३ । यथो२३४वा । पा५श्रो६हाइ ॥ १६ ॥ २२

"न्यृजते"(४) नितरामलङ्करोति ["ऋञ्जतिः प्रसाधन-कर्मा (६,४,२४)"-इति यास्कः(५)॥ १ ॥ २१

हे "इन्द्र!" "त्वा" त्वां "सोमिनः" अभिषुत-सोमाः "सखायः इमे उ" खल्वस्मदीया जनाः "पुष्टावन्तः"(१) सम्भृत-पाशाः "यथा पशुम्" पशुमिव "वि चक्षते" वि पश्यन्ति(२) ॥ २ ॥ २२

---

I पौषम् ।

(४)—'नि ऋञ्जते, नियमेन गमयति'-इति वि० ।

(५)—यदा एषां हस्तेषु कशाः वदन्ति, यदा च एषां चित्रं रथं सारथयो नियमेन गमयन्ति, तदा स शब्दः इहैव स्थिता श्रूयते—इति विवरण-निष्पन्नोऽर्थः ।

(१)—मतौ दीर्घः । 'पोषणं पुष्टम्, तद्वन्तः पुष्टावन्तः, पोषणवन्त इत्यर्थः ।

(२)—'एतदुक्तम् भवति—घासहारिणो घासेन गृहीतेन पशोस्तर्पणाय परमया प्रीत्या युक्तास्तमेव पशुं पश्यन्ति, तद्वदस्मदीया ऋत्विजः सोमवन्तः तेनैव सोमेन गृहीतेन तर्पणार्थं त्वां पश्यन्तीत्यर्थः'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

वत्सः काण्व ऋषिः।

१ २ २ २ ३ २ ३ १ २ ३ १ २
समस्य मन्यवे विशो विश्वा नमन्त कृष्टयः।
३ १ २ ३ १ २
समुद्रायेव सिन्धवः॥ ३ ॥ २३

१ २ १र २ २
I समस्यामा२। न्यावेविशा:। विश्वानामा२। ता-
१ १ १ १
कृष्टया:। समुद्राये२। वसिन्धा२३वा३४३:। ओ२३-
४५६। डा॥ १७॥ २३

"विशः" निर्विशन्त्यः(१) "विश्वाः" सर्व्वाः "कृष्टयः" प्रजाः "अस्य" इन्द्रस्य "मन्यवे" क्रोधाय [यद्वा मन्युर्मनन-साधनं स्तोत्रं तदर्थम्] "सं नमन्त" सम्यक् स्वत एव नमन्ति प्रह्वीभवन्ति। तत्र दृष्टान्तः—"समुद्राय इव" यथा समुद्रम् अब्धिम् प्रति "सिन्धवः" स्यन्दन-शीला नद्यः स्वयमेव नमन्ति तद्वत्॥ ३ ॥२३

---

I मरुतां संवेशीयम्, सिन्धुषाम वा।

(१)—'यद्यपि विशइति मनुष्य-नाम (नि०) तथापि कृष्टय इत्यनेन पौनरुक्त्य-प्रसङ्गात् क्रिया-निमित्तं द्रष्टव्यम्। विष्लृ व्याप्तौ (ह्वा०उ०) इत्यस्येदं रूपम्, स्तुतिभिर्ईविर्भिश्च व्याप्तारः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

कुसीदी काण्वऋषिः ।

२ ३ ३ १२ ३२३१२ ३२ ३ २
देवानामिद्वो मह्त्तदा वृणीमहे वयम् ।
१ २ ३ १ २ ३ १ २
वृष्णामस्मभ्यमूतये * ॥ ४ ॥ २४

५२ २ २ ३ २ ३ ५ १ २ ३ ५
I देवा । नाम् । इदाओ२३४वा । ओवाओ२३४वा ।
२ ५ ३ १२ २ ३ ५ २
मा२३४ह्वात् । तदावृणाइ । माहाओ२३४वा । वा२-
५ ३ १२ २ ५ २
३४याम् । वृष्णामस्मा । भ्यामाओ२३४वा । ता२३-
५
४ये ॥ १८ ॥

हे देवाः ! "देवानां" स्व-तेजसा सर्व्वतो दीप्यमानानाम् "इत्" एवार्थे(१) युष्माकमेव "महत्" व्याप्तं [मंहनीयं वा] "अवः" पालनं यद् विद्यते "तत्" "वृष्णां" कामानां वर्षितॄणां युष्माकं

---

I,II हाविषते द्वे ।

(१)—'इदिति पादपूरणः'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र  र र र  र  २ १र  २  १
II हाउदेवानामिदवोमहद्धाउ । तदावृणाइइ । मा-
२ ३  ५  २  १ २ २
हेवार३४याम् । ऐ२हो१आ२३इही । वृष्णामाइस्मा ।
१  १ २  ५र र  २ १  २ १ १ १ १
भ्यम् २३ । ता२या२३४औहोवा । हविष्मते२३४५ ॥ १९ ॥
५र र र  र र  ४ ५  २ १र
III देवानामिदवोहाउमाहात् । तदावृणाइ । महा
२  १  २  १
इवार३याम् । वृष्णा२९हो१इ । आ२३स्मा । भ्यम्-
१ २  ५र र  २  १ २ १ १ १ १
२३ । ता२या२३४औहोवा । हविष्कृते२३४५ ॥ २० ॥
५र र र  र ४ ५  १ र २ र  १
IV देवानामिदवोमाहात् । तादावृणी । महाइवा२३
२  १ र  २  २ १  ५  ४
याम् । वृष्णामा२३स्मा३ । भ्यम् २३४वा । ता५ुयोई
५
हाइ ॥ २१ ॥ २४

स्वभूतं तद्रक्षणं यजमानाः "वयम्" "आ वृणीमहे" समन्तात् सम्भजामहे(१)। किमर्थम्? "अस्मभ्यम्" "ऊतये" पूर्वमस्मभ्यमस्मदर्थमिति साधारण्येनोक्तं तद् विशिनष्टि-ऊतयइति, अस्माकं पालनायेति ॥ ४ ॥ २४

---

III, IV हाविष्कृते हे ।

(१)—'आभिमुख्येन प्रार्थयामः'-इति वि० ।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी ।

मेधातिथिः ऋषिः ।

३ २ ३　१ २　३ १ २'
सोमानाᳬं स्वरणं कृणुहि ब्रह्मणस्पते ।
३ १ २ ३ १ २ ३ २
कक्षीवन्तं य औशिजः ॥ ५ ॥२५

५र २　४र　५　२ १ २ १　२　१　२
I सोमाइनाᳬंस्वरणाम् । कृणूहि ब्र । ह्मणस्पताये-
२　२र १　१　२　२र
३ । औ३४ । हाहोइ । कक्षाइवा२३न्ताम् । यऔ-
२　२र १　५　४　५
होइ । औहो२३४वा । शापुइजो६हाइ ॥ २२ ॥ २५

हे "ब्रह्मणस्पते !" एतन्नामक देव !(१) त्वं "सोमानाम्" अभिषवस्य कर्त्तारं माम् अनुष्ठातारं "स्वरणं" देवेषु प्रकाशन-

---

२५ उत्तरार्च्चिकस्य ६,३,१०,२। ११

I काक्षीवतम् ।

(१)—ब्रह्मणस्पतिरिति निघण्टौ दैवतकाण्डे परिगणितो नोपलभ्यते, अपि तु तत्र अन्तरीक्ष-स्थान-देवतासु वाय्वादिषु वृहस्पतिरिति । तस्यैव निर्वचनावसरे 'ब्रह्मणस्पतिः' 'क्षेत्रस्यपतिः' 'वास्तोष्पतिः' 'वाचस्पतिः' 'वसोष्पतिः' एषामपि पञ्चानां सोदाहरणं निर्वचनं प्रदर्शितम्——'ब्रह्मणस्पतिर्ब्रह्मणःपाता पालयिता वा'-इत्यादि नै० १०,१,१२ । ब्रह्मणः मन्त्रस्येति तद्भाष्यकारः । 'षष्ठ्याः पति-पुत्र-पार-पद-पयस्पोषेषु (८,३,५३)"–इति सत्वम् ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वन्तम्(२) "कृणुहि"(३) कुरु। तत्र दृष्टान्तः—"कक्षीवन्तम्" एतन्नामकमृषिम् [इव-शब्दोऽत्राध्याहार्य्यः] कक्षीवान् यथा देवेषु प्रसिद्धः तद्वदित्यर्थः "यः" कक्षीवान् "औशिजः" उशिजः पुत्रः तमिवेति पूर्वत्र योजना॥ कक्षीवतोऽनुष्ठातृषु मुनिषु प्रसिद्धिस्तैत्तिरीयैराम्नायते—"एतं वै परं आट्णारः कक्षीवानौशिजो वीतहव्यः श्रायसस्त्रसदस्युः पौरुकुत्स्यः प्रजाकामा अचिन्वत"-इति। ऋगन्तरेऽप्यृषित्व-कथनेन अनुष्ठातृत्व-प्रसिद्धिः सूच्यते—"अहं कक्षीवानृषिरस्मि विप्रः"-इति। तस्मादस्यानुष्ठातारं प्रति दृष्टान्तत्वं युक्तम्॥ मन्त्रोऽप्येवं यास्केनैव व्याख्यातः—"सोमानां सोतारं प्रकाशनवन्तं कुरु ब्रह्मणस्पते! कक्षीवन्तमिव य औशिजः कक्षीवान् कक्षावा*नौशिजः उशिजः पुत्रः, उशिक् वष्टेः कान्तिकर्म्मणोऽपि त्वयं मनुष्यकक्ष्यं† एवाभिप्रेतः स्यात्, तं सोमानं सोतारं मां प्रकाशनवन्तं कुरु ब्रह्मणस्पते! (६,२,१२)"-इति॥ अस्मिन् मन्त्रे सोममिति पदेन ब्रह्मणइति पदेन च सूचितं तात्पर्य्यम् तैत्तिरीया आमनन्ति—"सोम स्वरणमित्याह—सोमपीथमेवावरुन्धे, कृणुहि ब्रह्मणस्पत इत्याह-ब्रह्मवर्चसमेवावरुन्धे"-इति॥ ५॥ २५

---

*,†, निरुक्त-कार-पाठस्तु—"कक्ष्यावान्", "कक्ष्यएव"—इति स-यकारः।

---

(२)—'षु, शब्दोपतापयोः (भ्वा०प०) इत्येतस्यैतद्रूपम्, शब्दयितारं स्तुतीनाम् उच्चारयितारं सोतारं यष्टारञ्चेत्यर्थः'-इति वि०।

(३)—विकरण-व्यत्ययेन धातूनामनेकार्थत्वेन वा रूपम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

अथ षष्ठी।

श्रुतकक्षऋषिः।

१ २ २ १२ २१ २
बोधन्मना इदस्तु नो वृत्रहा भूर्यासुतिः।
२ १२ २२ २ १२
शृणोतु शक्र आशिषम्॥ ६ ॥२६

५र १ १ १२र १ ७
I बोधन्मनाः। इदा२स्तूना२ः। वृत्रहाभू। रिया-
२ ५ २ २ ५ २ २१
२सू३४जीः। शृणा३४औहो। तुशक्रआ। शि।
४ ५
षाम्। औ२३होवा। होपुइ। डा॥ २३ ॥२६

अयं परोक्षकृतः(१)। "वृत्रहा" वृत्रस्य हन्ता "भूर्य्यासुतिः"(२) बहुषु देशेषु इन्द्रार्थं सोमा आसूयन्ते अभिषूयन्त इति तादृशः [यद्वा, बहूनि सोमादि-हवींषि इन्द्रार्थमासूयन्ते हूयन्तइति तादृशः] "बोधन्मनाः" [बुध अवगमने (भ्वा०प०), औणादिको-ऽत् प्रत्ययः] यस्य मनः स्तोतॄणामभिमतं बुध्यते जानातीति

I औषसम्।

(१)—उक्तं पुरस्तात्, (१०६ पृ०) 'त्रिविधा ऋचो भवन्ति परोक्षकृताः १, प्रत्यक्षकृताः२, आध्यात्मिक्यश्च ३,-इत्यादि। तदिह स्मर्त्तव्यम्।

(२)—'भूरीति बहु-नामधेयम्(३,१,५)अस्त्रासुति-शब्दो रस-वचनः—'ता सम्राजा-घृतासुती' इति। तथाच भरि आसुतिर्यस्य स भूयासुतिः बहुरसइत्यर्थः'-इति वि०।

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

श्यावाश्वऋषिः ।

२ १ २ ३ १ २ २ १ २
अद्य नो देव सवितः प्रजावत् सावीः सौभगम् ।

१ २ ३ १ २
परा दुष्वप्नयं सुव ॥ ७ ॥ २७

तथोक्तः "इद्"(३) अवधारणे "नः" अस्माकं बोधन्मना एव "अस्तु" सर्व्वदास्मदभीप्सितानि जानात्विवेत्यर्थः [यद्वा एतादृश इन्द्रः नोऽस्माकं सम्बन्धि यज्ञे भवत्विति]। किं ततः? "शक्रः" सङ्ग्रामे शत्रु-हनन-समर्थ इन्द्रः "आशिषम्" अस्मदीयां स्तुतिम् [आशासनं वा] "शृणोतु"(४) ॥

'बोधन्मना'-'बोधिन्मना-इति पाठौ ॥ ६ ॥ २६

हे "सवितः(१) देव!" "नः" अस्मभ्यम् "अद्य" अस्मिन् यागदिने "प्रजावत्" पुत्राद्युपेतं "सौभगं" धनं(२) "सावीः"

---

(३)—'इदिति पाद-पूरणः'-इति वि० ।

(४)—'एतदुक्तम् भवति—यदहं प्रार्थयामि, तच्छृणोतु शक्रः, श्रुत्वा च बुद्ध्यतु, बुद्धा च सम्पादयतु'-इवि वि० ।

(१)—'सविता आदित्यः तस्य रुद्धे धनम् हे सवितः'-इति वि० । "सविता, सर्वस्य प्रसविता"-इत्यादि नैरुक्तम् १०,३,७, । "आदित्योऽपि सवितोच्यते"-इत्यादि च तत्रैव तदुत्तरखण्डे ।

(२)—भगमिति धननाम, शोभनं भगं सुभगम्, सुभगमेव सौभगम् स्वार्थिक-तद्धितः, शोभनं धनमित्यर्थः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४ ५र र ४र ५र ४ २ १
I अद्यनोदेवसवितः। औहोवा। इहश्रुधाइ।

र २ र १र र २ १
प्रजावार२३त्सा। वोःसौभगाम्। परादू२३ष्वा३। हो-

२ २ १ १ २ १ १ १ १ १
वा३हा। प्रियᳪसू२३४५वा६५६। हा३या२३४५॥२४॥

२ २ र र ५ र ४ ५ २ र १ २र
II अद्या२३४नोदेवसा। वितः। प्रजावत्सा। वोः

१र २ ४ ५ २ १ २ १
सौभगाम्। पारा३दूष्वा। प्रियᳪसुवोवा३। ओर्रे।

१ ५र र २ १ २ र १ २ २ १ १ १ १
वा२३४। औहोवा। अस्मभ्यङ्गातुवित्तमा२३४५म॥२५॥२७

प्रेरय(३)। "दुःष्वप्न्यम्"(४) दुःस्वप्नं दुःस्वप्नवद् दुःखकरं दारिद्र्यं "परासुव"(५) दूरे प्रेरय॥७॥२७

---

I भरद्वाजस्य मौक्षम्, दक्षणिधनं वा।

II भरद्वाजस्य मौक्षम्।

(३)—'सावीः अभ्यनुजानीहि'-इति वि०।

(४)—अनिष्टस्य कस्यचित् सूचकः स्वप्नः, दुःस्वप्नः; तस्मिन् भवं दुःस्वप्न्यम्। "पूर्व-पदात् (८,३,१०६)"-इति षत्वम्।

(५)—'सुवेति षु प्रेरणे (भ्वा०प०) इत्यस्येदं रूपम्'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ अष्टमी।

प्रागाथः काण्वऋषिः।

२ १ २३१र २र ३२३ १२
क्वाऽस्य वृषभो युवा तुविग्रीवो अनानतः।
३ १र २र
ब्रह्मा कस्तꣳ सपर्यति॥ ८॥ २८

१ र ४ २ १ १र
I कूर३४वस्यवा५वृषभोयुवा। तुविग्रीवो२। अना-
र २ २
नताः। ब्रह्माका२३स्ताम्। ऐ२हो१आ२३इहो। स-
१ २ १
पर्य्या२३ता३४३इ। ओ२३४५इ। डा॥ २९॥

४ ५ ४ ५ २ १ ७ ऽ २ ३र २
II कुवाकुवा। स्यवृषा३भोयुवा३। ओ३४। हाहो
र र १ ७ ऽ २ ३र २
इ। तुविग्रीवोआ३नानता३ः। ओ३४। होहोइ।

"स्यः" सः "वृषभः" वर्षिता "युवा" नित्य-तरुणः "तुविग्रीवः"
प्रवृद्ध-ग्रीवः(१) "अनानतः" कदाचिदप्यनवनतः इन्द्रः "क्व ?"

(१)—'तुविग्रीवः, पुरुग्रीवः बहुग्रीवइत्यर्थः। कथमिन्द्रोबहुग्रीवः? उच्यते—परमात्मस्वरूपत्वात्। सर्वतः पाणिपादान्तः सर्वतोऽक्षिशिरोमुखः, सर्वतः श्रुतिमांल्लोके सर्वमावृत्य तिष्ठति'-इति वि०। तुवि-इति बहु-पर्यायः नि० ३,१,२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

वत्सऋषिः ।

२　१ २ ३ १　२ ३ १ २ ३ १ २
उप ह्वरे गिरीण॒ँ सङ्गमे च नदीनाम् ।

१　　१ २　५र र　२　३ १ १ १ १
ब्रह्मा२३ । का॑२स्ता२३४औहोवा । सपर्य्यती२३४५ ॥२७॥

५र र र र　　र ४　५र र
III. एह्यियैही । कस्यवृषभोयुवा । ऐहीयैही । तु-

र र　र ४　५र र र र　र　४
विग्रीवोअनानताः । ऐहीयैही । ब्रह्माकस्त॒ँसमर्य्य-

५र र र र　१　३ २　५र र
ती । एह्यियैही । आ॑२इ । हिया३४औहोवा ।

२　५
आ२३४इही ॥ २८ ॥ २८

कुत्र वर्त्तते ?-इति को जानातीत्यर्थः । "कः" "ब्रह्मा" स्तोता "तम्" इन्द्रं "सपर्य्यति"(२) पूजयति ?(३) ॥ ८ ॥ २८

I,II,III भारद्वाजानि आर्षभाणि वा सैन्धुक्षितानि वा ।

(२)—निघण्टौ परिचरण-कर्मसु तृतीयम् ३,५ ।

(३)—अस्यामृचि स्मृषभइति "व्यत्ययो बहुलम्(३,१,८५)"-इति हल्परकतां निमित्तीकृत्य लोपः । तुविग्रीवो अनानत इति अव्यपरे (६,१,११५)इति प्रकृतिभावः । कः इति "अनुदात्तं प्रश्नान्ताभिपूजितयोः (८,२,१००)" इति प्लुतिरनुदात्तश्च ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



धिया विप्रो अजायत ॥ ८ ॥ २९

I उपह्वराइ। गिरा२इणाम्। सङ्गमेचा। न
दा२इनाम्। धियाविप्रो। अजायता। अयाम्।
अया२१उ। वा२३। ऊ३४पा ॥ २८ ॥

II इदामी२३४दाम्। इदामिदकम्। इदामी२
४दाम्। उपह्वरेगी३राइणाम्। इदामी२३४दाम्।
इदामिदकम्। इदामी२३४दाम्। सङ्गमे चना३दाइ
नाम्। इदामी२३४दाम्। इदामिदकम्। इदामी२३-
४दाम्। धियाविप्रो आ३जायाता। इदामा५इदा६५
६म्। गोष्पदे पृट् ॥ ३० ॥ २९

"गिरीणां" पर्व्वतानाम्(१) "उपह्वरे" उपह्वर्त्तव्ये प्रान्ते

---

I,II भ्रात्य सामनी।

(१)—'गिरीणाम् मेघानाम्'-इति वि०। गिरिरिति मेघ-नामसु दशमम् नि०१,१०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

इरिमिठऋषिः*।

२ ३ १ २ ３ १र २र ३ १ २ ३ २
प्र सम्राजञ्चर्षणीनामिन्द्रं स्तोता नव्यं गीर्भिः।

१ २ ३ २ ३ १ २
नरं नृषाहं मंहिष्ठम् ॥ १० ॥ ३०

"नदीनां" सरितां "सङ्गमे" सङ्गमने च ईदृग्विधे देशे क्रियमाणया "धिया" स्तुत्या(२) "विप्रः" मेधावी(३) इन्द्रः "अजायत"(४) प्रादुर्भवति, स्तुतिं श्रोतुमिति शेषः(५) [गिरीणामित्यत्र 'नामन्यतरस्याम्'(६,१,१७७)-इति नाम उदात्तत्वम्(६)॥

'सङ्गमे'-'सङ्गथे' च इति पाठौ॥ ९॥ २९

"चर्षणीनां" मनुष्याणां मध्ये(१) "सम्राजं" सम्यग् राजमा-

(२)—'धिया प्रज्ञया'-इति वि०। धीरिति प्रज्ञा-नामसु सप्तमम् पदम् नि० ३,९।

(३)—विप्रइति मेधावि-नामसु प्रथमम् नि० ३,१५।

(४—कालसामान्ये प्रत्ययः (३,४,६)। मन्त्रे—विप्रोऽजायत इति प्रकृतिभावोऽव्यपरे इति (६,१,११५)।

(५)—'एतदुक्तम् भवति—यत्र प्रदेशे बहवो मेधाः, यत्र बहूदकं, तत्र तेषां मोदकस्य पानार्थम्' इत्यादि वि०।

(१)—'चर्षणयः'-इति मनुष्य-नामसु नवमम् नि०२,३।

४३क



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



I प्रसम्राजाम्। चार्षा२णाइना२म्। आइन्द्रा२ऽ-स्तोतार३। नव्यार३ङ्गार२३४इर्भीः। नारा२माषा२३। हम्मोवा। हा५इष्ठो६हाइ॥ ३१॥

II प्रसम्राजोहाइ। चार्षणी३नाम्। आइन्द्राऽस्तो इता३। नव्यार३ङ्गार२३४इर्भीः। नारमोइ। नृषाहमो३इ। मऽहा५इष्ठाम्। होपूइ। डा॥ ३२॥

नम्(२) [यद्वा मनुष्याणामधीश्वरम्(३] "इन्द्रम्" हे स्तोतारः! "प्र-स्तोत"(४)प्रकर्षेण स्तुत। कीदृशम्? "गीर्भिः" स्तुतिभिः "नव्यं"(५)

---

I,II वार्षन्धरे।

(२)—'राजते'-इति ज्वलति-कर्मसु नि० १,१५।

(३)—'राजति'-इति ऐश्वर्य्य-कर्मसु चतुर्थम् नि० २,२२।

(४)—गुणभावोबाऊलकात्। ऋचि दीर्घान्तो द्व्यचोत स्तिङ (६,३,१३५,) इति।

(५)—'नव्यं नवतरम्'-इति वि०। इह नये नौतेरूपम्। नौतीति अर्चति-कर्मसु अष्टादशम् नि० ३,१४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ ५ ३र ४ ५  २ २  ५  २ १ २
III प्रसम्राजञ्च । षणाइ२३४इनाम् । इन्द्राᳵस्तोइ-
२  १  २  ५  ४ ५  ४र ५ ४
ताइ । नव्यार्ङ्गा२३४इर्भीः । नरंनृषाहम्मा५ᳵहि ।
५  २ १ १ १ १
आ६हाउवा । ष्ठा२३४५म् ॥ ३३ ॥

४ ५ ४र ५  र ४र  ५  र र ४  ५  ५
IV प्रसम्राजञ्चर्षणीनामिन्द्रᳵस्तोतान । व्यङ्गा६इर्भीः ।
१  र र  २  ५ ४ ५  ४
इन्द्रᳵस्तोतानव्यङ्गा२३इर्भी३४ः । नरन्नृषाहम् । मा५ᳵ-
४  २ र ऽर १  २  ५र र  २
हिष्ठाम् । सहमैहै३होर । या२३४ओहोवा । मᳵ-
१ १ १ १ १
हो३ष्ठा२३४५म् ॥ ३४ ॥ ३०*

॥ इति पञ्चम-दशति ॥ **

---

III,IV कुत्सस्य प्रस्तोकौ ।

---

** छन्दआर्चिके द्वितीयस्यार्द्धः प्रपाठकः ।

* इति ग्रामे गेय-गाने चतुर्थस्यार्द्धः प्रपाठकः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



स्तुत्यं "नरं" नेतारं(६) "नृषाहम्"(७) नृणां शत्रु-मनुष्याणाम् अभिभवितारम् "मंहिष्ठम्"(८) दातृतमम् ॥१०॥३०

इति सायणाचार्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य तृतीयःखण्डः ॥ ३ ॥

---

अथ-चतुर्थखण्डे —

सेयं प्रथमा।

श्रुतकक्षऋषिः।

१ २   ३ १ २   ३ १ २   २ १ २
अपादु शिप्र्यन्धसः सुदक्षस्य प्र होषिणः।

२ ३ २   ३   १ २
इन्दोरिन्द्रो यवाशिरः ॥ १ ॥ ३१

"शिप्री"(१) ["शिप्रे हनू नासिके वा(२)"] शोभन-हनुः

---

(६)—'नरं नराकारम्'-इति वि०।

(७)—"छन्दसि सहः (३,२,६३)"-इति ण्वौ "पूर्वपदात् (८,३,१०६)"-इति षत्वे रूपमिदम्।

(८)—मंहत-इति दान-कर्मसु पठितम्। तस्य तृचि "तुश्छन्दसि (५,३,५६)"-इतीष्ठनि रूपम्।

(१)—प्रशस्ते शिप्रे यस्य—सुशिप्री।

(२)—इत्येतत् षष्ठाध्यायीय-यास्क-वचनम् (६,४,१९। शप्ट गतौ, स्फायि-तञ्चि-वञ्चि



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र    २ १    २   र
I अपादुशी । प्रियन्धसाः । सुदत्तार२३स्या । प्रहो-
१ र २ १र २ र १
षिणः । इन्दोरार३इन्द्राः । यवाशार२३इराः । ऐ । हि-
२ २ ५र र २ १ २ ११११
यार२इ । हियार३४औहोवा । ए३ । ऊपा३१२३४५ ॥ १ ॥

५ र २ ४ ५   २ १  र  १
II अपादूइशिप्रियन्धसाः । सुदत्तस्यप्रहोषिणाः । इन्दौ
१ २ ५ र४ ५
२ । दौ२ । ऊवार२३इ । आ३४इन्द्रो । यवाशादूराः ।
२र १ २ ५र र २ १२
ऐ । हा२ए२३ । हियार३४औहोवा । ए३ । ऊपा३१-
११११
२३४५ ॥ २ ॥२१

[यद्वा शिप्राः शीर्षण्याः(३), सुशिरस्त्राणः] सः "इन्द्रः" एव "प्रहोषिणः"(४) प्रकर्षेण देवान् हविर्भिर्जुह्वतः "सुदक्षस्य" एतन्नामकस्य ऋषेः(५) सम्बन्धि "यवाशिरः" [श्रीञ् पाके (क्र्या० उ०) आङ्-पूर्व-

---

I,II औपगवे, सौश्रवसे वा अथमये वा मथाथे वा सौमित्रे वा शैखण्डिने वा ।

शकि-चषि-खपि-तृपीति-रक्, बाहुलकात् सृ-शब्दस्य शि-भावः; अन्नं गव्यनं प्रति वा सृप्तं भवतः'-इति देवराजयज्वा ।

(३)—इह सानं यत्न-लभ्यम् भवितु मर्हति ।

(४)—'जुहोतेर्दानार्थस्येदं रूपम्'-इति वि० ।

(५)—'सुष्ठु उत्पादितस्येत्यर्थः'-इति वि० ।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

मेधातिथिर्ऋषिः ।

२ १ २ २ १र २र २ १ २
इमा उ त्वा पुरुवसो* भि प्र नोनवुर्गिरः ।
१ २ २ ३उ ३ १ २
गावो वत्सन्न धेनवः ॥ २ ॥ ३२

कस्य "अपस्पृधेथामानृचुः"-इत्यादिना(६) धातोः शिरादेशः)" यवैः-
शामिश्रितं(७) यवैः सह पक्कम् "इन्दोः" सर्वत्र पात्रेषु चर-
न्तम् "अन्धसः"(८) सोमलक्षणमन्नम् "अपात्" अपिवत् "यद्वा-
सोमस्य भागम् इन्द्रार्थम् परिकल्पितं सोमांशम् अपिवत् ।
"उ"-इत्यवधारणे ॥ १ ॥ ३१

हे "पुरुवसो !" बहुधन ! "यद्वा वसवो यज्ञाः(९) बहुयज्ञ !

---

* "पुरूवसो"-इति ख० ग० ए० पुस्तकानां पाठः ।
३२ उत्तरार्च्चिकस्य ७, ३, १८, १ ।

---

(६)—"अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्रात-स्रितमाशिरासीर्त्तः"(६,१,३६ ।

(७)—'यव-शब्देनात्र यव-विकाराः सक्तव उच्यन्ते, तैर्मिश्रणं यस्य स यवाशिरः । प्रथमा च षष्ठ्यर्थे द्रष्टव्या । यवमिश्रितस्येत्यर्थः । मन्थी च नाम ग्रहः स सक्तुभिर्हि श्रयते "मन्थिनं सक्तुभिरिति वचनान्तरमवेचिल्वैतदुच्यते यवाशिरइति'-इति वि० ।

(८)—'सोमस्य'-इति वि० ।

(९)—इह मानं यत्न-लभ्यम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

गोतमऋषिः* ।

२३　३ १ २　३ २ ३ १ २ क २र

अत्रा ह गोरमन्वत नाम त्वष्टुरपीच्यम् ।

२ २　३ १ २　३ २

इत्था चन्द्रमसो गृहे ॥ ३ ॥३३

५ र　१　१　१ र　१

I इमाउत्वा । पुरू२वासा २उ । अभिप्रनोनवू २र्गा-

२र १　२र र १　१　४

इरा२ः । औहोऽ२इ । गावोवात्सा२३म् । ना२३धे३ ।

२　५

ना३४५वोईहाइ ॥ २ ॥ ३२

इन्द्र! "त्वा" त्वाम् "अभि" "इमाः" अस्मदीयाः "गिरः" स्तुतयः "प्रनोनवुः" प्रकर्षेण पुनः पुनः स्तुवन्ति प्राप्नुवन्तीत्यर्थः । नौतिरत्र व्याप्तिकर्मा" । तत्र दृष्टान्तः—"गावो वत्सं न धेनवः" यथा धेनवः गावः गृहे वर्त्तमानं वत्सं शीघ्रमभिगच्छन्ति तद्वत । यद्वा, अस्मदीया वाचः त्वाम् अभिनोनवुः शब्दयन्ति स्तुवन्ति, यथा गावो वत्समभिलक्ष्य हम्भा-रवं कुर्वन्ति तद्वत् ॥ २ ॥ ३२

---

*—'गोतमस्यार्षम्'-इति वि० ।

---

I त्वाष्ट्री साम ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ २र १र १ १ र
I आत्रा। हागोरमन्वताउवा२३। होवा२३होइ। ना-
र १ १ २ १र र
मत्वष्टुरपोचियाउवा२३। होवा२३होइ। इत्थाचन्द्रमसो-
१ १ २ ५र र २
गृहाउवा२३। होवा२३होर। वा२३४औहोवा। ऊर-
५
३४पा॥ ४॥

४ ५ २र १र १
II हावात्रा। हागोरमन्वताउवा२३। होइया२३।
१ र र १
हा २ऊवाइ। नामत्वष्टुरपोचियामियाउवा२३होवा२३-
२ १र र १
हा २ईया। इत्थाचन्द्रमसोगृहाउवा२३। होइया२३।
१ २ ५र र २ ५
हा २ऊवार। या२३४औहोवा। ऊ२३४पा॥५॥३३

"अत्रा(२)ह" अस्मिन्नेव "गोः" गन्तुः(३) "चन्द्रमसः" "गृहे" मण्डले "त्वष्टुः"(४) एतन्नामकस्य आदित्यस्य सम्बन्धि "अपीच्यं"

---

I,II त्वष्टुरातिथ्ये।

(२)—"निपातस्य च (६,३.१३६)"-इति दीर्घः।

(३)—'गो-शब्देनेह सुषुम्ना नाम आदित्य-रश्मिः, चन्द्रमसं प्रति गतः, अल्पत्वा चन्द्रमण्डलस्य, रश्मिं प्रति गतः, ततः परावृत्य पृथिव्यां ज्योत्स्नारूपेण दीव्यते सोऽत्र गो-शब्देनोच्यते'-इति वि०।

(४)—त्वष्टा इति पृथि-स्थान-देवतासु, अन्तरिक्ष-स्थान-देवतासु, द्यु-स्थान-देवतासु च नैघण्टुकाः संस्मरन्ति। नैरुक्तश्च त्रिषूपलक्ष्यते, तद्यथा——"त्वष्टा तूर्णमश्नुत इति



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



रात्रौ अन्तर्हितं स्वकीयं यत् "नाम"(५) तदादित्यरश्मयः "इत्था इत्थम् अनेन प्रकारेण "अमन्वत" अजानन्(७)। उदकमये स्वच्छे चन्द्रबिम्बे सूर्य्यकिरणाः प्रतिफलन्ति, तत्र प्रतिफलिताः किरणाः सूर्य्ये यादृशीं सञ्ज्ञां लभन्ते, तादृशीं चन्द्रेऽपि वर्त्तमानां लभन्त इत्यर्थः॥ एतदुक्तम् भवति—यद्रात्रावन्तर्हितं सौरं तेजः तच्चन्द्रमण्डलं प्रविश्याथ नैशं तमो निवार्य्य सर्व्वं प्रकाशयति; ईदृग्भूततेजसा युक्तः सूर्य्य इन्द्रएव, द्वादशस्वादित्येषु इन्द्रस्यापि परिगणितत्वात्। अतोऽहोरात्रयोः प्रकाशक इन्द्रएवेति इन्द्रस्तुतेः प्रतीयमानत्वात् इन्द्रो देवतेत्युपपन्नं भवति, ईदृग्भूतस्य तेजसः तदाश्रयत्वेन चन्द्रमसः प्राधान्य-विवक्षया चान्द्रमस्यामिष्टौ विनियोगोऽप्युपपद्यते॥ अत्र निरुक्तम्—"अथाप्यस्यैकोरश्मिश्चन्द्रमसं प्रति दीप्यते तदेतेनोपचितव्य आदित्यतोऽस्य दीप्तिर्भवतीति सुषुम्नः सूर्य्यरश्मिश्चन्द्रमा गन्धर्व इत्यपि निगमोभवति सोऽपि गौरुच्यते अत्राह गोरमन्वतेति" (२,२,९); अत्र ह गोः सममंसतादित्यरश्मयः स्व-नामापीच्य-

---

नैरुक्ताः, त्विषेर्वा दीप्ति-कर्मणः, त्वक्षतेर्वा स्यात् करोति-कर्मणः ** अग्निरिति शाकपूणिः"-इत्यादि प्रथमम् (नै० ८,२,११—१२)। "त्वष्टा व्याख्यातस्तस्यैषा भवति" इत्यादि द्वितीयम् (नै०१०,२,९—१०)। "त्वष्टा **त्वष्टा दुहितुर्वहनं करोतीमानि च सर्वाणि भूतान्यभि समागच्छन्ति यमस्य माता पर्य्युह्यमाना महतो जाया विवस्वतो ननाश रात्रिरादित्यस्यादित्योदयेन्तर्द्धीयते"-इति अन्त्यम् (नै० १२,१,११)। इह चान्त्य-व्याख्यात एव त्वष्टा गृह्यते।

(५)—'नाम नमनं प्रह्वीभावम्'-इति वि०।

(६)—"प्रत्नपूर्वविश्वेमात्थाल् छन्दसि (५,३,१११)"-इति इदमो विहितादिवार्थ-विहितोऽपि थाल् व्यत्ययेन प्रज्ञातभूतादिदं-शब्दादपि।

(७)—'अमन्वत, अनुमन्यन्ते'-इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

भरद्वाजऋषिः ।

२उ ३ १ २ ३ १ २ ३ २ ३१र २र
यदिन्द्रो अनयद्रितो महीरपो वृषन्तमः ।
१ २ ३ १ २ ३ १ २
तत्र पूषा भुवत्सचा ॥ ४ ॥ ३४

५ र १ १ २ ४ ५
I यदिन्द्रोया । नायार३त् । उमो३म् । उवा ।
१ र र १ २ ४ ५ १ ०
रितोमहीरापार३ः । उमो३म् । ओवा । वृषावृषा२ ।
३ २ ५र र १ २र१र२ १ ३१११
तमा३४औहोवा । तत्रपूषाभुवत्सचा२३४५ ॥ ६ ॥

५ र ५ १ र १ र
II यदिन्द्रोअनयद्रिता३इए । महीरापा२ः । मही-

मपचितमपगतमपहितमन्तर्हितं वा(८) (४,४,२५)"-इति॥३॥ ३३

"यद्" यदि(१) "इन्द्रः" "वृषन्तमः" अतिशयेन वर्षिता इन्द्रः "रितः" गच्छतीः(२) "महीः" महतीः "अपः" वृष्ट्युदकानि "अन-

---

I,II पौषे ।

(८)—निरुक्तपाठस्तु,—'अमुत्र चन्द्रमसो गृहे'-इत्यंशेनाधिको लभ्यते ।

(१)—'यत्, मेघस्थानम्'-इति वि० ।

(२)—'रितः, गतः प्राप्तः सन्'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी ।

विन्दुः पूतदक्षो* वा ऋषिः ।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
गौर्धयति मरुताᳪ श्रवस्युर्माता मघोनाम् ।

३ २उ ३ १ २
युक्ता वह्नी रथानाम् ॥ ५ ॥ ३५

१ २ ३ ५ १ २ १ २
रापार३ः । वार्षं तार३४माः । तत्रापूषा३ । पूरषार-

५र र २ १ २ १ १ १ १
३४औहोवा । भुवत्सचार३४५ ॥ ७ ॥ ३४

५र ५ २ १ ७ ८ २
I गौर्धयाद्द्द्ए । तिमरुता३म् । श्रवास्युर्मा३ । ता

यत्''(३) इमं लोकं प्रापयति । ''तत्र'' तदानीं(४) ''पूषा'' पोषको देवः(५) ''सचा भुवत्''(६) इन्द्रस्य सहायो भवति ॥ ४ ॥ ३८

---

* 'पूतदक्षणः'-इति वि० पाठः ।

---

(३)—कालसामान्ये लङ् (३,४,६ ।

(४)—'तत्र तत्स्थाने'-इति वि० ।

(५)—असौ द्युस्थानदेवतासु दशमो देवः, ''पोषं पुष्यति तत् पूषा भवति''-इत्यादि च नैरुक्तम् (१२,२,७ ।

(६)—सचेति सहार्थेऽव्ययम्, भुवादति लेटोरूपम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ १ ७ ३ २ १ २
मघो२३४नाम्। युक्तावह्वाइ:। रथा३। ना२मा२३४

५र र २ ५
औहोवा। ऊ२३४पा॥ ८॥

५र ५ २ १र १र र र
II गौर्द्धयतिमरुता३इमे। अवस्युर्मा२तामघोना२म्।

२ १ २ १र २ १ २
उरुवा२३हाइ। युक्तावा२३न्हो:। उरुवा२३हाइ।

३ २र १ ४ ५ ४
रथानाम्। औ२३होवा। होधूइ। डा॥ ९॥ ३५

"मघोनां" धनवतां "मरुतां"(१)"माता" निर्मात्री "गौः"(२) पृश्निरूपा [पृश्निर्वै पयसो मरुतो जाता इति श्रुतेः; गौर्माध्यमिका वाक्(३), तत्रैव मध्यमस्थाने मरुतामपि वर्त्तनात्(४), तेषां

---

I,II श्यावाश्वे।

(१)—मरुतो अन्तरीक्ष-स्थान-गणविशेषाः। तथा च नैरुक्तम्—"अथातोमध्यस्थाना देवगणास्तेषां मरुतः प्रथमागामिनो भवन्ति, मरुतो मितराविणो वा मितरोचिनो वा महद्द्रवन्तीति वा'-इत्यादि ११,२,१—२।

(२)—"गौर्व्याख्याता तस्यैषा भवति ❀❀ वागर्थेषु विधीयते, तस्मान्माध्यमिकां वाचं मन्यते"-इति नैरुक्तम् ११,३,६।

(३)—'चतुर्धा हि वाचो वदन्ति परा पश्यन्ती मध्यमा वैखरीति शाब्दिक-सिद्धान्तः, तत्र गौरिति माध्यमिक-वाचोऽभिधानम्। वाक्पदञ्च अन्तरिक्षभागित्वेन परिगणितं निघण्टौ, नैरुक्तञ्च सोदाहरणं वर्णितम् तद्यथा—"वागर्थेषु विधीयते, तस्मान्माध्यमिकां वाचं मन्यते,—वाग् व्याख्याता तस्या एषा भवति। 'यद्वाग् वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा। चतस्रोतुदिशऊर्जं दुदुहे पयांसि क्वचिदस्याः परमं जगाम (ऋक्१०,७,१०)"यद् वागवदन्त्यविचेतनानि अविज्ञातानि"-इत्यादि ११,३,७। "वागेषा माध्यमिका"-इत्येवमादि च ११,४,८।

(४)—'गौः'-इति निघण्टु-दैवतकाण्डे मध्यमस्थानभागिषु उनषष्ठितमम् पदम्, 'मरुतः'-इति तत्रैव सप्तत्रिंशत्तमम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

द्वयोः श्रुतकक्ष एव सुकक्षो वा ऋषिः।

१ २ ३ १ २ ३ २ ३ १ २
उप नो हरिभिः सुतं याहि मदानांपते।

१ २ ३ १ २ ३ २
उप नो हरिभिः सुतम्॥ ६ ॥३६

२ १ ४ ५ ४ ५ २र १ २ र २ १
I उपनोर३हरिभिःसुतोवा। याहिमदा३नाम्य। ता-

तत् पुत्रत्वमुपचर्य्यते(५), सा] "धयति" सोमं पिबति [पोषयति वा स्व-पुत्रान् मरुतः] किमिच्छन्ती? "श्रवस्युः"(६) अन्नं कामयमाना। कीदृशी? "रथानां" मरुतां(७) "वह्निः" पृषतीभिर्वडवाभिर्वोढ्री संयोजयित्री सा "युक्ता" सर्व्वत्र सम्मता पूज्या-भवति॥ ५॥ ३५

हे "मदानां पते!" "माद्यन्त्यनेनेति मदः सोमः ['मदोऽनुप-

---

३६ उत्तरार्च्चिकस्य९,१,१०,१। १४

(५)—वैदिकाख्यायिकासु वृत्तान्ताख्यानस्य अयथार्थत्वात् कल्पनाबीजत्वाद्वा। तदुक्तम् तर्कपादान्तिमे—'असद्वृत्तान्तान्वाख्यानम्'-इत्यादि शवरस्वामिना भगवता मीमांसाचार्य्यविशेषेण तथान्यान्यैरपि।

(६)—'श्रवःशब्देन कीर्त्तिरुच्यते तामिच्छति श्रवस्यति, श्रवस्यतेः उ-प्रत्ययः; (३,२,-१७०) कीर्त्तिकाम इत्यर्थः'-इति वि०।

(७)—'कीदृशानां पुनर्मरुताम् वोढ्री? उच्यते—'रथानां' रथस्वभावकानामित्यर्थः'-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३ २ २ १ ५ ३ ५
२३इ । उपनो३ । हा३ओ२३४वा । रा२३४इभोः ।

२ १ ४ ५ ४
सुताम् । औ२३होवा । हो५इ । डा ॥ १२ ॥

५ र र ४ ५ ४ ५ १ २ १
II उपनोहाहोहा । राइभोः । ह२३ताम् । याहि-

२ र १र २ २ १ २ ५ १ २
मद्दा । नाम्पा२३ताइ । उपानो२३४हा । रा२इभा

५र र २ १ २ १ १ १ १ १
२३४औहोवा । सुतꣳरयिष्ठा२३४५ः ॥ ११ ॥ ३६

सर्गे?"-इति करणे अण् प्रत्ययः] सोमानां स्वामिन्! इन्द्र! "हरिभिः" [आ शतेन हरिभिरित्यादिषु बहूनामश्वानां श्रुतेः अत्रापि शतसहस्र-सङ्ख्याकैः] अश्वैः(१) सह "नः" अस्माकं यज्ञे "सुतम्" अभिषुतम् सोमम् "उप याहि" तत्पानार्थं शीघ्रमागच्छ। पुनः "उप नः"-इत्याद्युक्तिरादरार्था ॥ ६ ॥ ३६

---

I,II प्रजापतेः सुतं रयिष्ठीये सहोरयीष्ठीये वा ।

इति वि०। 'रथो रंहतेर्गति-कर्मणः'-इति नै०९,२,१। तथाच गन्तृणामित्यर्थो निष्पद्यते।

(१) —इन्द्राश्वाः हरि-सञ्ज्ञकाः, तथाहि निघण्टुः—'हरिः इन्द्रस्य(१,१५,१)'-इति ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

३ १र २र ३ १ २ ३ १ २ ३ २
इष्टा होत्रा असृक्षतेन्द्रं वृधन्तो अध्वरे।
१ २ ३ १र २र
अच्छावभृथमोजसा ॥ ७ ॥ ३७

५ र ४ ५ १ २ ३ ५ २ १ ७
I इष्टाहोत्राः। आसृक्षा२३४ता। इन्द्रंवृधा। तो
३ ५ १ २ ४ ५ २ २ ४
२३ध्वा२३४राइ। आच्छा३वोभृ। थमो३जा५सा६५६।
२ २ १ २
ए३। उदधिर्निधी१ः ॥ १२ ॥ ३७

"अध्वरे" अस्मदीये यज्ञे "वृधन्तः" हविर्भिरिन्द्रं वर्द्धयन्तः "इष्टाः" इष्टवन्तः यागं कृतवन्तः सप्तसङ्ख्याकाः "होत्राः" होत्रकाः "अवभृथम्"(१) सुत्याभिवसम् "अच्छ" अभि प्रति "ओजसा" स्व-तेजसा सहिताः "इन्द्रम्" "असृक्षत" व्यसृजन्(२)। यावदवभृथ-समाप्ति होत्रका यजन्तीति ॥ ७ ॥ ३७

---

I इष्टाहोत्रीयम् अप्सरसं वा अपांनिधि र्वा।

(१)—प्रधानाहुतिषु कृतासु अवभृथ-सञ्ज्ञं कर्म करिष्यते, तमित्यर्थः।

(२)—'ऋषिः आत्मीयान् ऋत्विजआह—'इष्टाः' प्रियाः 'होत्राः' ह्वयन्त इति होत्राः आहूतय इत्यर्थः, ताः 'असृक्षत' विजत कृतइत्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी ।

वत्सः काण्वऋषिः ।

२ २उ ३ १र २र ३ २ ३ १ २ ३ १ २
अहमिद्धि पितुस्परि मेधामृतस्य जग्रह ।
३ १र २र
अहꣳ सूर्य्यइवाजनि ॥ ८ ॥ ३८

४ ४ २र १र
I अहमिद्धा५इपितुष्पराइ । मेधामृतस्यजग्रहा ।
२ १ र ० २र २ — १
अहꣳसूर्य्याः । इवा२३४ । हाहोइ । जनि । होइ ।
२र १र २र १र १ १ १ १
होइ । औहोऔहोवा२३४५हाउ । दा ॥ १३ ॥३८

"पितुः"(१) पालकस्य "ऋतस्य" सत्यस्यापि तस्येन्द्रस्य "मेधाम्" अनुग्रहात्मिकां बुद्धिम् "अहम् इत्"(२) अहमेव "परिजग्रह" परिगृहीतवानस्मि नान्यः "हि"(३) यस्मात् एवं तस्मात् "अहं" "सूर्य्यः इव अजनि" सूर्य्यो यथा प्रकाशमानः सन् प्रादुर्भवति तथा अहमजनिषम् प्रादुरभूवम् ॥ ८ ॥ ३८

---

३८ उत्तरार्च्चिकस्य ७,१,५;१ । १५

I प्रजापतेः निधनकामम् सिन्धुषाम वा ।

(१)—'पितुः', कण्वस्य सकाशात्'-इति वि० ।

(२),(३)—'इत् हि द्वावपि पाद-पूरणौ'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी ।

शुनःशेपऋषिः ।

२ १ २　　३ २ ३ १　　१२ १ २
I रेवतीर्नः सधमादइन्द्रे सन्तु तुविवाजाः ।
३ २ ३ २ ३ १ २
क्षुमन्तोयाभिर्म्मदेम ॥ ९ ॥ ३९

५र र　　१　२　५　१　२
रेवतीर्नाः । सधा२मा२३४दाइ । इन्द्रा१इसा२-
५　२ १　१　२　१　२ १
३४तू । तुविवा२जाः । क्षू२३मा । तो२या । भिर्मा-
५　४　५
२३४वा । दा५इमो६हाइ ॥ १४ ॥ ३९

"क्षुमन्तः"(१) अन्नवन्तः वयं "याभिः" गोभिः "मदेम" हृष्येम "इन्द्रे" "सधमादे" अस्माभिः सह हर्षयुक्ते सति "नः" अस्माकं ता गावः "रेवतीः"(२) चौराज्यादि-धनवत्यः "तुविवाजाः" प्रभूतबलाश्च(३) 'सन्तु" ॥ ९ ॥ ३९

---

३९ उत्तरार्चिकस्य ४,१,१४,१ । १६

I रेवत्यः वाजदावर्यो वा ।

(१)—क्षुरिति अन्न-नामसु द्वादशम् नि० २,७ । विवरणकारस्तु 'क्षु शब्दे (अ० प०) इत्यस्येदं रूपम् ; शब्दवन्तः, कीर्त्तिवन्तः'-इत्याह ।

(२—'रयेर्मतौ बहुलम् ; (६,१,३४)'-इति वचनादिह रे-भावः । "सुपां सु लुग् (७,१,३९)" इति जसः सु ।

(३)—'तुवि-शब्दो बहु-वाची (नि० ३,१,२); वाज-शब्द इह बल-वाची (नि० २,९,२)।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

शुनःशेपो वामदेवो वा ऋषिः।

१ २ ३१ २ ३ १ २ ३ २
सोमः पूषा च चेततुर्विश्वासाꣳ सुक्षितीनाम्।
३ २ क २र ३ २
देवत्रा रथ्योर्हिता॥ १०॥ ४०

५र र २ १ २ ३ २ २ ५ १
I सोमःपूषा। चचाइततूः। अयायो२३४वा। वा-
र २र र १ २२ २ ५ १ ०
इश्वासाꣳसुक्षिती। नाम्। अयायो२३४वा। हाइव-

"देवत्रा"(१) देवेषु "रथ्यः" रथार्हः "अर्हिता"(२) आरोढा "सोमः"(३) तादृशः "पूषा" सूर्य्यश्च(४) "विश्वासां" सर्व्वासां "सुक्षितीनां" [क्षियन्ति निवसन्तीति क्षितयः प्रजाः] शोभन-

---

I सौमापौषम् गौअश्वीयं वा।

(१)—'देव-मनुष्य-पुरुष-पुरु-मर्त्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्'-इति त्रा।

(२)—'रथ्यः, अर्हिता—इति छेदस्तु पदग्रन्थ-विरुद्धो विवरण-विरुद्धश्च। पदकारस्तु 'रथ्योः, हिता'-इत्येवं चिच्छेद। "रथ्योः, रथशब्देनात्र यज्ञ उच्यते', रंहतेर्गतिकर्मणः, रथ्योः रथस्य यज्ञस्य यौ वोढारौ तौ पत्नीयजमानावत्र रथ्यावुच्यते, तयोः, यज्ञस्य देवान् प्रति प्रापयित्रोः पत्नीयजमानयोः 'हिता द्विवचनस्याकारः हितौ"-इति वि०।

(३)—अन्तरिक्ष-स्थो देवः, चन्द्रमाः इत्यप्येतन्नैरुक्तम् (११,१,४)।

(४)—द्यु-स्थान देवः, 'पोषं पुष्यति पूषा भवति'-इत्यादि नै०१२,२,५-७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ४ १२३र १ २ ११
न्नारा२३। थियो३र्वापुइताई५६। गावो२अश्वार३-
११
४५ः ॥ १५ ॥ ४०

॥ इति प्रथम-दशति ॥

चितीनां मनुष्याणां सम्बन्धीनि हवींषि इन्द्रार्थं कृतानि "चेततुः" जानीतः ॥ १० ॥ ४०

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
द्वितीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चमे खण्डे—

सैषं प्रथमा।

श्रुतकक्षऋषिः।

३ २ ३ १ २ ३ १ २ ३ १र २र
पान्तमावोअन्धसइन्द्रमभिप्रगायत।
३ १ २ ३ १ २ ३ १ २ ३ २
विश्वासाहꣳशतक्रतुंमꣳहिष्ठञ्चर्षणीनाम् ॥ १ ॥ ४१

हे ऋत्विजः! "वः" यूयम् "अन्धसः" सोमलक्षणम्। अन्नम्

---

४१ उत्तरार्चिकस्य १,२,१,१ । १७



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र ५ ४र ५र ४ ५ ४ २ १ २ १ २
I पान्तमावो३अन्धसाः। इन्द्रामाभि। प्रगायाता
२ २ १ २ १ २ । १
३। हाइहाइ। विश्वासाहम्। शताक्रातूइम्। हा-
२ १ २ २ २ १ २
इहाइ। मऽहाइष्ठचाइ। हाइहा। षणाइइ। नाइ३
५र र २ ५
४औहोवा। उ३२३४पा॥ १६ ॥

"आ पान्तम्" आभिमुख्येन पिबन्तं [पा पाने (भ्वा०प०) छान्दसः शपोलुक्(१)। 'सर्व्वे विधयच्छन्दसि विकल्पयन्ते"-इति 'न लोकाव्यय" (२,३,६९पा०)-इति षष्ठी-प्रतिषेधाभावः। ततो-ऽन्धसइत्यत्र 'कर्त्तृकर्मणोः" (२,३,६५पा०) इति षष्ठी] सोम-माभिमुख्येन पिवन्तम् एतादृशम् "इन्द्रम्" "प्र गायत" प्रक-र्षेणाभिष्टुत। कीदृशम्? "विश्वासाहम्" सर्व्वेषां शत्रूणा-मभिभवितारम् "सर्व्वेषां भूतजातानां वा" अतएव "शतक्रतुम्"-(२) बहुविध-प्रज्ञानं "बहुविध-कर्माणं वा" "चर्षणीनाम्"(३)

---

I अध्यर्द्धेड-वैतहव्यम्।

(१)—शब्लुकि शित्परकत्वाभावात् पिबादेशाभावः।

(२)—'शतम्'-इति बहुनामसु दशमम् नि०३,१। 'क्रतुः'-इति प्रज्ञा-नामसु पञ्चमम् (नि०३,९)-कर्म-नामसु च एकादशम् नि०२,१।

(३)—'चर्षणयो मनुष्याः (नि०२,३,९)। षष्ठी-बहुवचनं चतुर्थी-बहुवचनार्थे, यजमान-मनुष्येभ्य इत्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र ५ ४र ५र ४ ५　४　२ १　१र
IIपान्तमावोअन्धसः । इहा । इन्द्रमभाइ । प्रगा-

१　१ २　१ र र　१　२
यता२ । इहा । विश्वासाहꣳशता२क्रतूम् । इहा ।

१　२　१　२ १ १
मꣳहा२इष्ठञ्चा । इहा । षणा२इनाम् । इहा२३-

१ १
४५ ॥ १७ ॥

२　४ २ ४ ५ १
III पाऽपुन्तम् । आ३वो३अन्धसाः । आइन्द्राम-

० २ ५ १ ३ ५ २
भाइ । प्रगा२या२३४ता । विश्वा२सा२३४हाम् । शा-

१ २ २　१ २ १२　१ २　१ २
३ताक्रा३तूम् । मꣳहिष्ठञ्चर्ष । णाये३ । ना२मा२३४-

५र र　२ १ १ १ १ १
औहोवा । ओ३का२३४५ः ॥ १८ ॥ ४१

मनुष्याणाम् "मꣳहिष्ठम्" धनस्य दातृतमं यद्वा यजमानानां यष्टव्यत्वेन पूजनीयमिन्द्रं प्र गायतेति समन्वयः ॥ १ ॥ ४१

---

II इहवद्वामदेव्यम् ।
III ओकोनिधनं वैतहव्यम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

वसिष्ठऋषिः।

२ ३ १ २ ३ १ २ ३ १ २
प्रवइन्द्रायमादनꣳहर्यश्वायगायत।
१ २ ३ १ २
सखायःसोमपाव्ने ॥ २ ॥ ४२

I प्रवइन्द्रा२। यमादा२३४नाम्। प्रवा२इन्द्रा। औ३हो। या२३४मा। दा३नाम्। हरा२अश्वा। औ३हो। या२३४गा। या३ता। सखा२याःसो। औ३हो३। मापो२३४वा। आ५व्नो६हाइ ॥ १८ ॥

II प्रवा२इन्द्रा। औ३हो। या२३४मा। दा३नाम्। हरा२अश्वा। औ३हो। या२३४गा। या३ता। सखा-

४२ उत्तरार्च्चिकस्य १,२,२,१ । १८
I,II गार्त्से सामनी।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २ १ ५ ४
२याःसो । औ३हो३ । मापो२३४वा । आपूवो६-
५
हाइ ॥ २० ॥

२ ऽ २ ऽ २ १ र ऽ २ ऽ २ २
III प्रवई३या । ई३या । इन्द्रोई३या । इ३या । या-
५ २ २ ऽ २ ऽ २ १ र
२३४मा । दा३नाम् । हरई३या । ई३या । आश्वो-
ऽ २ ऽ २ २ ५ २ २ ऽ २
ई३या । ई३या । या२३४गा । या३ता । सखई३या ।
ऽ २ १ र ऽ २ ऽ २ ४ ५ ४
ई३या । याःसोई३या । ई३या३ । मापो२३४वा । आ-
५
पूवो६हाइ ॥ २१ ॥

१ र १ १ र २ २ ५ २
IV प्रवौहोवा२ । इन्द्रौहोवा । या२३४मा । दा३-
२ र १ १ र २ ३ ५
नाम् । हरौहोवा२ । आश्वौहोवा । या२३४गा ।
२ २ र १ १ र २ १ ५
या३ता । सखौहोवा२ । याःसौहोवा३ । मापो२३४वा ।
४ ५
आपूवोईहाइ ॥ २२ ॥

२ र १ २ २ १ र २ २
V प्रव्रोदा३दा । औ३हो । इन्द्रोददा । औ३हो ।

---

III,IV गौरीविते । V श्रात्यंसाम ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



याऽ२३४मा । दाऽ३नाम् । हरिदाऽ३दा । औऽ३हो । आस्वोदऽदा । औऽ३हो । याऽ२३४गा । याऽ३ता । सखि दाऽ३दा । औऽ३हो । याःसोदऽदा । औऽ२होऽ३ । मापो-ऽ२३४वा । आऽ५वोऽ६हाइ ॥ २३ ॥

VI प्रवः । प्रवा: । इन्द्रायेन्द्रा । यमादाऽ१नाऽ२म् । हराइहर्यश्वा । यगायाऽ१ताऽ२ । सखायाऽ२३ःसोऽ३ । मा-पोऽ२३४वा । आऽ५वोऽ६हाइ ॥ २४ ॥ ४२

हे "सखायः !" "वः" यूयं "हर्य्यश्वाय"(१) हरि-नामकाश्वाय "सोमपाव्ने"(२) सोमानां पात्रे "इन्द्राय" "मादनं" मदकरं स्तोत्रं "प्र गायत" प्र पठत ॥ २ ॥ ४२

---

VI गौरीवीतम् । सर्वाणि शाक्त्यसामानि, सर्वाणि वा गौरीवीतानि ।

(१)—'हरी हरितवर्णौ अश्वौ यस्य सः, हर्य्यश्वः,-इति वि० । "हरी इन्द्रस्य"-इति नै० १,१५,१ ।

(२)—'आतो मनिन्क्वनिब्वनिपश्च' (३,२,७४) ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

मेधातिथिः ऋषिः प्रियमेधश्च।

३ १ २ ३ १ २ ३ १ २ ३ २ ३ १ २
वयमुत्वातदिद्‌र्थाइन्द्रत्वायन्तःसखायः।
१ २ ३ १ २
कण्वाउक्थेभिर्जरन्ते॥ ३॥ ४३

५ ४ ५ २ ५ २ २ ५
I वयंवायाम्। ऊ२३४त्वा। ताद्दीदा२३४र्थाः।
३ ४ ५र ४ ५ २ ५ २ २ र
इन्द्रत्वायन्तः। सखा२३४याः। कण्वा३१२३४ः। उक्थे-
५ र र ५ ४
भिर्जरन्ते। एहियाईहा। होपूइ। डा॥ २५॥

५ २ ४र ५ १र १ र
II वयमूइत्वातदिदर्थाः। ऐहिहा२इ। वयमुत्वातदि-
र र २ १ १ २ ५ १
दर्थाइन्द्रत्वायन्तः सखा२३याः। का२३४ण्वाः। उ।
२ १ ५ २ १ १ १ १ १
क्थाइ। भिर्जा२३४वा। रन्ता३या२३४५॥ २६॥ ४३

हे "इन्द्र!" "त्वायन्तः" त्वामात्मनइच्छन्तः "सखायः" समानख्यानाः(१) "वयम्" "तदिदर्थाः" यत् त्वद्विषयं स्तोत्रं

४३ उत्तरार्चिकस्य १,२,३,१। १८

I,II काण्वे इमे।

(१) –'याग-परा इत्यर्थः'-इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

श्रुतकक्षऋषिः॥

१ २ ३१२ ३१र २र ३१२
इन्द्रायमद्वनेसुतम्परिष्टोभन्तुनोगिरः।
३ १२ ३१२
अर्कमर्चन्तुकारवः॥ ४॥ ४४

४५र ४५४ २१ र र२१
1 इन्द्रायमद्वनाइ। सुताम्। इन्द्रायमद्वनेसुताम्।

तदित् तदेवार्थः प्रयोजनं येषां, तादृशाः सन्तः(२) "त्वा" त्वाम् जरामहे(३) स्तुमहे। "उ"-इति पाद-पूरणः। "कण्वाः" कण्व-गोत्रोत्पन्नाः अस्मदीयाः पुत्राश्च "उक्थेभिः"(४) उक्थैः शस्त्रैः "जरन्ते"(५) त्वां स्तुवन्ति(६) ॥ ३ ॥ ४३

"मद्वने" "माद्यतेः क्वनिप्" मदन-शीलाय "इन्द्राय" तदर्थं सुतम्" अभिषुतं सोमं "नः" अस्मदीयाः "गिरः" स्तुति-लक्षणा-वाचः(१) "परिष्टोभन्तु" "स्तोभतिः स्तुति-कर्मा (नि०३,१४,४)"

---

४४ उत्तरार्चिकस्य १,२,४,१।२०

(२)—उत्तर-वाक्ये जरन्ते इति दर्शनात् इहापि जरामहे इत्यध्याहारः।

(३)—सार्वमिक-बहुल-वचनात् भिस ऐसभावः (७,१,११)।

(४)—'जरति'-इति अर्चति-कर्मसु सप्तमं पदम् नि०३,१४।

(५)—विवरण-मते वयं कण्वाः जरन्ते इत्येकदलमेव व्याख्यानम्। तथाचोक्तम्—'कण्वाः' कण्वस्य पुत्राः, मेधातिथि-प्रभृतयः-इति।

(१)—'गिरः स्तुतयो गिरो गृणातेः'-इति नै०१,२,१५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १   २   १र   २   १र
पराइष्टोर३भा। तुनोगिरो। अर्कमार३र्चा। तुकारा-
२   १
२३वा३४३ः। ओ२३४५इ। डा॥ २७॥

५ र   र   १   २ २   १ २र
II इन्द्रायमद्वनेहाउ। ओइस्र३ताम्। परिष्टो।
१   ०   २   १   १ र   ०
भा। तुनोर२हाइ। गाइरार:। परिष्टोभा। तुनोर-
२   १   १   १ ७   ५र
३हाइ। गाइरा२ः। अर्का२३म्। आ२र्चा२३४औ-
र   २   २   १   १११
होवा। ए३। तुका३रवा२३४५ः॥ २८॥

४५र ४५र ४   ५र ४५   २ १ २
III इन्द्रायमद्वनेसुतम्। इन्द्रायमोवा। हा३नाइस्र
२   १ २र   १   २ २   १ २
३ताम्। परिष्टो। भार३। हा२हा३। तुनोरगार३-
५   १   २   २   २   १र   २
४इराः। आर्कमर्चा३। हा३हा। तुकारा२३वा३४३ः।
१
ओ२३४५इ। डा॥ २९॥ ४४

परितः सोमं स्रवन्तु। ततः "कारवः" स्तुतिकारिणः स्तोता-

---

I,II गौरीवीते द्वे।
III इदं श्रौतकक्षम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

इरिमिठऋषिः।

२ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
अयन्तइन्द्रसोमोनिपूतोअधिबर्हिषि।
१ २ ३ २उ ३ १२
एहीमस्यद्रवापिब॥ ५॥ ४५

५ २ १र २ १ २१र र
I अयन्तआ। द्रसोमो। होवा३होइ। निपूतो-
२ १ २ ३ ५ १ २र १ १
आ३। धीबर्हा२३४इषी। आइहीमस्या२३। द्रा२वा
५र र २ ५
२३४औहोवा। पी२३४बा॥ ३०॥

५ ५ १र र १ र
II अयन्तइन्द्रसो४माः। निपूतोअधिबा२र्हाइषो२। ए-

रश्व(२) "अर्कम्"(३) सर्वैरर्चनीयं सोमम् "अर्चन्तु" पूजयन्तु॥४॥४४

हे "इन्द्र!" "ते" तुभ्यं त्वदर्थम् "अयं सोमः" "बर्हिषि अधि"

---

४५ उत्तरार्चिकस्य १,२,५,१। २१

I,II इमे हेसौमित्रे।

(२)—'कारुः'-इति स्तोतृनामसु तृतीयम् नि०३,१५।

(३)—'अर्कं देवं सोमम्'-इति वि०। "अर्को देवो भवति, यदेनमर्चन्त्यर्को मन्त्रो भवति, यदेतेनार्चन्त्यर्कमन्नम् भवत्यर्चति भूतान्यर्को वृक्षो भवति स-वृतः कटुकिम्ना"-इत्यादि नै० ५,१,५-६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ र १ १ र २
होऽ२इमास्या। इवापाइवा२। आइहीमस्याद्रवा३१उवा

५
२३। पी२३४बा ॥ ३१ ॥

४ २ ४ २ ५ १ र ५ र ४ ५ ४
III अयन्तइन्द्रसो४मः। ना२३४इ। पूतोअधिबर्हि-

५ १ र र २ १ २ र १ २ १र
षी। निपूतोअधिबर्हा२३इषी। ऐहोइमा२३स्या। द्रवा

२ ५
पा२३४५इबा६५६। ई२३४हा ॥ ३२ ॥ ४५

वेद्यामास्तीर्णे दर्भे(१) "निपूतः" नितरां दशापवित्रेण शोधितः अभिषवादि-संस्कारैः संस्कृतः इत्यर्थः "इम्" इदानीम्(२) "अस्य"(३) इमं सोमं प्रति "एहि" आगच्छ, आगत्य च यत्र रसात्मकः सोमो हूयते तं देशं प्रति "द्रव"(४) शीघ्रं गच्छ, तदनन्तरं तं सोमं "पिब" ॥ ५ ॥ ४५

---

III इहवद्दैवोदासम्।

(१)—'अधिबर्हिषि बर्हिषः उपरि'-इति वि०।

(२)—'ईम्'-इति पद-पूरणः-इति वि०। निरुक्तकारोऽप्याह—'पद-पूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति' १,३,१४।

(३)—'अस्य सोमस्य षष्ठी-निर्देशात् सङ्गम्'-इति वि०।

(४)—'एहि, द्रव—इति द्वावपि गत्यर्थौ, अभ्यासे च भूयांसोर्थाः प्रतीयन्ते'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

मधुच्छन्दा ऋषिः।

२ २३१२३१२ ३१२
सुरूपकृत्नुमूतयेसुदुघामिवगोदुहे।
२ २३१ २
जुहूमसिद्यविद्यवि ॥ ६ ॥ ४६

४ ५ २१ र२१ २१२र १
II स्तरू। पकृत्नुमूतयाइ। सुदुघाम्। इवगो२।
१२ २ ५ २१र २ १ २
दुहया३१उवा२३। ऊ३४पा। जुहूमा२३सी। द्यविद्यविया३१
२र ५
उवा२३। ऊ३२३४पा ॥ २३ ॥

"सु-रूप-कृत्नुम्" शोभन-रूपोपेतस्य कर्म्मणः कर्त्तारम् इन्द्रम् "ऊतये" अस्मद्रक्षार्थं "द्यविद्यवि" प्रतिदिनं "जुहूमसि"(१) आह्वयामः। आह्वाने दृष्टान्तः—"गोदुहे" गो-धुगर्थं "सुदुघाम् इव" सुष्ठु दोग्ध्रीं गामिव, यथा लोके गोर्यो दोग्धा तदर्थं तस्याभिमुख्येन दोहनीयां गामाह्वयन्ति तद्वत्(२)॥ वस्तोरित्यादिषु

---

४६ उत्तरार्च्चिकस्य ४,१,१५,१ । २२

I शाक्करवर्णम्।

(१)—मंसइगागमे (७,१,४६सू०) रूपम्।

(२)—'एतदुक्तं भवति,—यथा गो-दोह-कर्मार्थं तस्या एव गोर्दोहनार्थम् आह्वयति, तद्वत्'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २ २　　२ १　　१　　१ २२
II सुरूहाहाउ। पक्रत्नुमू२ताया२इ। सुदुघाम्।

१　　१ २२　　२ २ १२ २२ २　　२　　१
इवगो२। दुहे। ऐहोयैहो१। जुहो२। इवा२इ।

१　　१　　२२ २ २२ २
मासो२। द्यविद्यवि। ऐहोयैहो१ ॥ ३४ ॥

२ २　　१　　५　　१　.२　　२
III सुरूपक्रत्नू३मूता२३४याइ। ओइसुरूपक्रत्नूमू१जा-

१　　२　　२　　१२
या२इ। ओइसुदुघामिवागो१दुहा२इ। जुहूमसा२इ।

२ २ २　　५　　४ ५　　१　　१　　१
द्यविद्या२३४वी। ऐहो। जूहू२मासो२। द्यविद्या।

४ ५२　　४२ ५२　　५　　२　　२
वोवो२३। आओहोइ। आओहो६वा। ए३। द्यवो३-

१ १ १ १ १
ई२३४५॥ ३५॥

४ ५२ ४　　१　　१　　२ १ २ २　　१ २
IV सुरूपक्र। त्नूमूरतयाइ। सुदुघामो३। वागो-

नामसु द्यविद्यवीति द्वादशाहर्नामानीति पठितम्(१) ॥ ६ ॥४६

---

II, वीङ्कम्। III,IV ऐणवे वैणवे वा औदले।

(१)—अहर्नामानि द्वादश—इति यन्नैघण्टुक-परिगणनं, 'वस्तो:'-इत्यादिषु द्वादशसु नामसु तदनुगतं 'द्यविद्यवि'-इति निघण्टौ पठितम् इत्यर्थः। तथा च नैरुक्तम्,—"अहर्नामान्युत्तराणि द्वादश, अहः कस्मात्? उपाहरन्त्यस्मिन् कर्माणि"-इत्यादि १,२,९८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

त्रिशोकऋषिः* ।

२ १ २ ३ २ ३ १ २ ३ १ २
अभित्वावृषभासुतेसुतꣳसृजामिपीतये ।
३ १ २ ३ १ २
तृम्पाव्यश्नुहीमदम् ॥ ७ ॥ ४७

२ ५ ४ ५ र ४ १ १ २ १र
दू२३४हाइ । सुदुघामा । वागो२हुहाइ । जुह्मार२३-
२ १ ४ २ ५
सो३ । द्या२३वी३ । द्या३४५वौ६हाइ ॥ २६ ॥* ४६

हे "वृषभ !"(१) कामानां वर्षितरिन्द्र ! "त्वा" त्वाम्(२)

---

* 'तृशोक'-इति वि०-पाठः ।

---

४७ उत्तरार्च्चिकस्य १,२,७,१ । २२

"वस्तोः१ घुः२ भानुः३ वासरम्४ स्वसराणि५ ६ घर्मः७ घृणिः८ दिनम् दिवि१० दिवे-दिवे११ द्यविद्यवि१२"-इति नि०१,९ ।

(१) - ऋचि वृषभा इति 'सुपां सु लुगिति (७,१,३९) आत्वे रूपम् ।

(२ —'द्वितीयैकवचनमिदं चतुर्थ्येकवचनस्यार्थे द्रष्टव्यम्'—इति वि० । तथाच "चतुर्थ्यर्थे बहुलञ्छन्दसि (२,३,६२)"-इति हि स्मरणम् ।

---

* इति ग्रामे गेय-गाने चतुर्थः प्रपाठकः ॥४॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४ ५र  र ४  १  २ र  १
I ओम्। अभित्वावृषभासुताइ। सूतꣳसृजा। मिपाइ-
२  १ २  २
ता१या२इ। त्पावा१या२। अुहा३१उवाये३। म्मर-
५
३४दाम ॥ १ ॥

५ र र र र  २र १ २
II अभित्वावृषभासुतेअभ्याहाउ। त्वा३षाभा१सू-
१ २ र  १ २  ३ २ १
ता२इ। सृतꣳसृजा। मिपाइता१या२इ। त्पा३हो-
३ २ १ २ १र २  १
इ। विया३हो। अुहोमा२३दा३४३म्। ओ२३४५इ।
डा ॥ २ ॥

५ ४५र  र ४र ५  ४ ५  २ र १
III अभित्वावृषभासुते। सुतꣳसृजोवा। मिपीता-
१ २र  १र २ १ २
या२इ। सुतꣳसृजामि। पीता२३याइ। आ२३पा३।
१ २ ५र र  २ र १ २ १११११
वा२या२३४औहोवा। अुहोमदा२३४५म् ॥ ३ ॥ ४७

"सुते" सोमेऽभिषुते सति तं "सुतम्" अभिषुतं सोमं "पीतये"(२)

I,II,III आर्षभानि त्रीणि सैन्धुक्षितानि वा बाभ्राश्वानि वा।

(२)—"स्थागापापचोभावे (३,३,९५)"-इति क्तिनि रूपम्।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ अष्टमी ।

कुसीदऋषिः* ।

१ २ ३ १र २र३ १ २ ३ २

यइन्द्रचमसेष्वासोमश्चमूषुतेसुतः ।

१र २र३ १ २

पिबेदस्यत्वमोशिषे ॥ ४ ॥ ४८

३ २ १ ४ ५ ४र र ५ १र २ १र २र

I याद्दोन्द्रा२३ । चमसेषुवाईया । सोमश्चमूषुतेसु-

१ २र १ २ १ २ २ १

तः । सोमश्चमू । षुताइद्द२३ताः । पाइबे३द्वाइ । आ-

१ २ १र २ १

स्या३द्दाइ । त्वमोशा२३इषा३४३इ । ओ२३४इ । डा ॥

॥ ४ ॥

५ र ५र १र र २ २ २ र

II यइंद्रचामाईसेषुवा । सोमश्चमूषुता१इद्द३ताः । सो

पानाय "अभिसृजामि"(३) "तृम्प"(४) तृप्यं "मदं" मदकरं सोमं "व्यश्नुहि"(५) विशेषेण प्राप्नुहि ॥ ७ ॥ ४७

* 'कुसीदी'-इति वि० ।

I;II कौत्से, पाञ्चवाजे वा दाशवाजे वा ।

(३)—'आभिमुख्येन ददामीत्यर्थः'-इति वि० ।

(४)—ऋचि तृम्पा इति 'द्व्यचः (६,३,१३५)'-इति दीर्घः ।

(५)—ऋचि व्यश्नुही इति दीर्घश्छान्दसः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी ।

शुनःशेप ऋषिः ।

१ २ ३१ २ ३ १ २
योगेयोगेतवस्तरंवाजेवाजेहवामहे ।
१ २ ३ १ २ ३ १ २
सखायइन्द्रमूतये ॥ ८ ॥ ४९

२ १ २ २ १ र २
मस्वमू२ । षूश्ताइह्रश्ताः । आऽ२इ । पिबेदस्योर३-
५ २ २ ४
४हाइ । त्वमा३इशाइ५इषाइ५इइ ॥ ५ ॥ ४८

हे "इन्द्र !" "ते"[२] त्वदर्थं "सुतः" अभिषुतो यः "सोमः" "चमसेषु"(१) एतन्नामकेषु पात्रेषु तथा "चमूषु" [चमन्ति(२) भक्षयन्त्यत्रेति] चम्वोग्रहाः तेषु च "आ" सर्व्वतः अस्ति । "अस्य"(३) तमेतं सोमं "त्वम्" "पिब इत्" [इदवधारणे] पिबैव । कथं मम सोम-पान-योग्यता ? तत्राह—हे इन्द्र ! त्वम् "ईशिषे" तस्य त्वमीश्वरो भवसि खलु ; यत एवं ततः पिबेति समन्वयः [ईश ऐश्वर्ये (अ०आ०) लटि "ईशः से (७,२,७७)" -इति इडा-गमः ॥ ८ ॥४८

"योगे योगे" प्रवेशे प्रवेशे तत्तत्कर्मोपक्रमे(१) "वाजे वाजे"

---

४९ उत्तरार्चिकस्य १,२,११,१ । २४

(१)—'बहुवचनं, बहुयज्ञापेक्षम् ; बहुषु यज्ञेषु अधिषवण-फलकेषु'-इति वि० ।
(२)--चम,छमु, जमु, अदने भ्वा० प० ।
(३)—'अस्य सोमस्य, षष्ठी-निर्देशात् एकदेशमिति वाक्यशेषः'-इति वि० ।
(१)—'योगः नियोगः व्यापारः कर्म हुतवधादि, तस्मिन् सर्वस्मिन्'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र५रर र ४ ५ ४ १र र२र र र र
योगेयोगेतवस्तराम्। वाजेवाजेहवामहे। स-
१र २ २ १ ५ ४ ५
खाया२३ई३। द्रमू२३४वा। ता५योऽ६हाइ॥६॥

४र५रर र ५ १र ऽर र ऽर १ ऽर
II योगेयोगेतवस्ताऽ६राम्। वाजे२वाजे२हवा२महे३।
१ २ २ १ १ १ २ २ १
होवा३हाइ। साखा२याई२३। होवा३हाइ। द्रमू२३।
१ २ ५र र २ ५
ता२या२३४औहोवा। ऊ२३४पा॥७॥

५रर र र र र र ४ ५ १र र२र र
III योगेयोगेतवाहाउस्ताराम्। वाजेवाजे। हवा-
१ २ ५ १ २र १
२माहाइ। ऊवाइ। औ३हो२३४वा। साखायई।
१ २ ५ ३ र २ १
द्रमू२तायाइ। हुवाइ। औ३हो२३४वा। सखायआ।
ऽ २ १ १११५
हवा२इ। औ३हो२३४५वाऽ६५६। द्रमू३तये२३४५॥८॥४९

कर्म-विघातिनि तस्मिन् तस्मिन् सङ्ग्रामे(१) "तवस्तरम्" अति-

---

I,II,III सौमेधानि, पूर्वतिथानि वा पौर्वातिथानि वा।

(१)—'यज्ञे यज्ञे हविर्लक्षणे उपकल्पिते'-इति वि०। 'वाजे'-इति निघण्टौ सङ्ग्राम-नामसु चत्वारिंशत्तमं पदम् (२,१७)। 'वाज'-इति निघण्टौ अन्न-नामसु द्वितीयं पदम् (२,७)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

मधुच्छन्दा ऋषिः।

२उ ३ १ २ ३ १ २ ३ १र २र
आत्वेतानिषीदतेन्द्रमभिप्रगायत।
१ २ ३ १ २
सखायःस्तोमवाहसः ॥ १० ॥५०

॥ इति द्वितीय-दशति ॥

३र २ २र ५र ५ २ १
I आतू३४। एतानि। षीदाईता। इन्द्रमभाइ।
२र १ २र १र २ २ १ २
प्रगायता। साखायःस्तोम। वा। औ३हो। ववा२हा

शयेन बलिनम्(३) "इन्द्रम्" "ऊतये" रक्षार्थं "सखायः(४) सखिवत् प्रिया वयं "हवामहे" आह्वयामः ॥ ८ ॥ ४९

[तु शब्दः क्षिप्रार्थो निपातः] 'आ तु आ इत'(१) [-इति

---

५० उत्तरार्चिकस्य १,२,१०,१ । २५
I दैवातिथं मैधातिथं वा।

(३)—'तवः'-इति निघण्टौ बल-नामसु पञ्चमं पदम् (२.९)।

(४)—'हे 'सखायः' ऋत्विजः !'-इति वि०।

(१)—इता-इति ऋचि निपात-लक्षणोदीर्घः (६,३,१२३)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २ १ २र १र २ २
२३४साः। हयाइ। साखायःस्तोम। वा। औ३हो।
१ २ ५
ऊम्मा२३। हा३४५सो६हाइ॥ ८॥ ५०

द्वाभ्यामाङ्भ्यां मन्त्रे तु इत-शब्दोऽभ्यसनीयः](२) हे "सखायः" ऋत्विजः! क्षिप्रमस्मिन् कर्मणि आगच्छतागच्छत [आदरार्थोऽभ्यासः] आगत्य च "निषीदत" उपविशत "इन्द्रम्" "अभिप्रगायत" सर्वतः प्रकर्षेण स्तुत। कीदृशाः सखायः? "स्तोमवाहसः" त्रिवृत्-पञ्चदशादि-स्तोमान्(३) अस्मिन् कर्मणि वहन्ति प्रापयन्ति॥ १०॥ ५०

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
द्वितीयाध्यायस्य पञ्चमः खण्डः॥ ५॥

---

(२)—उपसर्गानुरोधात् क्रियाया आवर्त्तनमित्यर्थः। विवरणे तु एक एवार्थः स्वीकृतः।

(३)—त्रिधा वर्त्तते इति त्रिवृत्। एवं पञ्चदशादयश्च स्तोमाः। ते च "तिसृभ्यो हिङ्करोति स-प्रथमया, तिसृभ्यो हिङ्करोति स-मध्यमया; तिसृभ्यो हिङ्करोति स उत्तमयोद्यती त्रिवृती विष्टुतिः"-इत्यादि ताण्ड्याद्यनुशासनादभिगन्तव्याः। ताण्ड्ये द्वितीयाध्यायारभ्य तृतीयाध्यायान्तं समस्तमेतद्वृत्तेष्वेव नियुक्तं श्रुतम्। तत्र च त्रिवृत्१ पञ्चदशः२ सप्तदशः३ एकविंशः४ त्रिणववः५ त्रयस्त्रिंशः६—इति पृष्ठ्यषडहस्य षट् स्तोमाः क्रमेण विहिताः। अनन्तरं छन्दोमानां चतुर्विंशः१ चत्वारिंशः२ अष्टचत्वारिंशः३ —इति त्रयस्तोमाः व्यवस्थिताः। इत्थं सङ्कलनया नवस्तोमाः, तथाचात्र आदिपदात् सप्तदशादेर्ग्रहः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठे खण्डे—

सेयं प्रथमा।

विश्वामित्र ऋषिः।

३ १र　　२र　३ १　२
इदꣳह्यन्वोजसा सुतꣳराधानाम्पते।
३　२　१　२
पिबात्वाऽस्यगिर्वणः॥ १॥ ५१

५　　५　　२　　१२　　　　१ २ १ २
I इदाइम। हियाउनूओ१जासा२। सुतꣳराधा।
१ २　　　१ र　　७　　　३२　३ २
नाम्पा१ता २इ। पिबातुवस्यागिर्वाणा२३४ः। पिबा३४तुवा३।
१　२　५र र　　२　५
स्या२गा२३४औहोवा। वा२३४णाः॥ १०॥

हे "राधानां" धनानां (१) "पते"! "गिर्वणः"(२) गीर्भिः स्तुतिभिर्वननीय! इन्द्र! "ओजसा" बलेनोपहितस्त्वं "इदम्(३)

---

५१ उत्तरार्चिकस्य १,२,८,१। २६

I आङ्गिरसं माधुच्छन्दसं वा।

(१)—'राधः'-इति निघण्टौ धन-नामसु अष्टादशं पदम् (२,१०)।

(२)—गिर्वणस्-इति सान्तः शब्दः। "गिर्वणा देवा भवन्ति गीर्भिरेनं वनयन्ति। 'जुष्टं गिर्वणसे बृहत्'-इत्यपि निगमो भवति"-इति नैरुक्तम्. ६,३,१६।

(३)—'नपुंसकलिङ्गं व्यत्ययेन'-इति वि०। तथाच इदम् इममित्यर्थः। सायण-मते त्वयं 'सुपां सुलुगित्यादिना तृतीयाया लुकि रूपम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ५ ८ २ ३ ५ १ २
II इन्द्रं॑हियाऽऔहो। नूर्ऽओजा२३४सा। सुतं॑-
१ २ ८ २ ५ १र ४
राधा। ना३२म्। पा२३४ताइ। पिबातुवस्या२३। ग।
५ १ ५र ५ ४
वाहाइ। वा२३४णाः। एहियाहा। होपूइ।
डा॥ ११॥

५ ५र २ १ २ १ २र
III इन्द्रं॑ह्यनूऽओजसा। सुतं॑राधा। नाम्पातौ।
र १ १ २ १ २र र २
होवा३हाइ। पिबातुव। स्यगाइर्वाणौ। होवा३हाइ।
१ र २ १र १ २ ५र
पिबातुवौ। होवा३हा। स्यगाये३ः। वा२ना२३४औ-
र २ ६ ३ १ १ १ १
होवा। घृतश्चता२३४५॥ १२॥ ५१

अनु" अनेनानुक्रमिणेत्यर्थः "ओजसा" बलेन ग्रावभिः(४) "सुतम्" अभिषुतं "अस्य"(५) इमं सोमं "तु" क्षिप्रं "पिब(६) हि"(७) ॥ १॥ ५१

---

II आङ्गिरसं क्रौञ्चं वा।

III आङ्गिरसं घृतश्चन्निधनम् प्राजापत्यं माधुच्छन्दसं वा।

(४)—पाषाणविशेषैरित्यर्थः। इह निरुक्तम् "ग्रावाणो हन्तेर्वा गृणातेर्वा गृह्णातेर्वा"-इत्यादि तदत्र गृह्णातेरेवोपयोगः।

(५)—'अस्य षष्ठी-निर्देशात् एकदेशमित्यर्थः'-इति वि०।

(६)—क्वचि पिबा इति इत्र इति दीर्घः।

(७)—'हि' अनु द्वावपि पादपूरणौ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

मधुच्छन्दा ऋषिः ।

३ १र　२र ३ १ २　३ १ २ ३ १ २
महाँ इन्द्रः पुरश्चनो* महित्वमस्तुवज्रिणे ।
१र　२र ३ १र　२र
द्यौर्न्नप्रथिनाशवः ॥ २ ॥ ५२

४　५　२ १　२　१
I महाँइन्द्राः । पुरश्चनो । मा१हो२त्वामा२ ।
१　१　१र　२
स्तुव । ज्रिणाइ । द्यौ२र्नाप्रा२ । थिनाशा२३वा३४३ः ।
१
ओ२३४५इ । डा ॥ १३ ॥

५ र र ४ ५　२ १ २　२　१　३
II माहाहाइन्द्राः । पू३राश्चा३नो । महा२इत्वा२
५　२ र१　४　र१
३४मा । स्तुवौ३हौ३ । हवा५ज्रिणाइ । द्यौर्नप्र ।

अयम् "इन्द्रः" "महान्" शरीरेण प्रौढः "परश्च" गुणैरु-

---

* "पुरश्चनो"-इति पाठः क० ख० ए० क०-प० ख०-प० इति षट्सु, विवरणसम्मतश्च । "परश्च नु"-इति भाष्य-सम्मतः पाठः, नान्यत्र क्वचिदपि ।

४८क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ ७ ५ २ ७ ६ २ ४ ५
थिनाश्रवा२३ः। द्यौर्नार२३४प्रा। थिनौ३द्यौ३। हवोवा।
४ ५
श्रा५वोहाइ॥ १४॥

४ र ४ २ २ २
III मह्रा२इन्द्रा५ पुरश्चनाः। माहित्वा३२३२३मा।
२ २ १५ २ र २ १र २ २
स्तुवज्रा३२३२३इणाइ। द्यौर्ना३२३२३प्रा। थिनाश्रवा-
१
३२३४३ः। औ२३४५इ। डा॥ १५॥ ५२

त्कृष्टः, किञ्च "वज्रिणे" वज्रयुक्ताय "महित्वं" पूर्वोक्तं विविधमाधिक्यम् सर्वदा "अस्तु" [स्वभाव-सिद्धस्यापि भक्त्या प्रार्थनमेतत्,] किञ्च "द्यौर्न" द्युलोकइव "श्रवः" बलम्(१) इन्द्रस्य सेनारूपं "प्रथिना" पृथुत्वेन पुत्यताम्--इति शेषः(२) [यथा द्युलोकः प्रभूतः एवमस्य सेना प्रभूतास्तु]। "नु"-शब्दो यद्यपि

---

I,II,III वाम्राणि, प्रैयमेधानि वा वैयश्वानि वा आश्वानि वा उन्नाव्दमनानि वा।

(१)—'श्रवः'-इति निघण्टौ बलनामसु चतुर्थम् २,७।
(२)—'प्रथित्वमनुषज्यते'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

कुसीदी काण्व ऋषिः ।

१र　२र　　३ १ २ ३ १ ३ १र　　२र
आतूनइन्द्र क्षुमन्तञ्चित्रं ग्राभꣳसङ्गृभाय ।
३　　१र　२र
महाहस्तीदक्षिणेन ॥ ३ ॥ ५३

क्षिप्र-नामसु(३) नु-मक्ष्वित्यादिषु पठितः(४) तथापि तदर्थत्वास-म्भवात् समुच्चयार्थोऽत्र गृहीतः(५) ॥ न शब्दो लोके प्रतिषेधार्थ एव, स्वाध्याये तु प्रतिषेधार्थ उपमार्थश्चेति द्विविधः ; यत्र पदे नान्वीयते, तस्मात् पूर्वं प्रयुज्यमानः प्रतिषेधार्थः, उपरिष्टात्-प्रयुज्यमान उपमार्थः ; तथाच यास्क उदाहरति—"उभयमन्वध्यायं नेन्द्रं देवममंसतेति प्रतिषेधार्थीयः पुरस्तादुपचारस्तस्य यत् प्रतिषेधति, दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुप-चारस्तस्य येनोपमिमीते(१,२,६,)" इति । अत्रोपमा-वाचिनो द्यु-शब्दस्योपरि-प्रयुक्तत्वादुपमार्थः स्वीकृतः ॥ २ ॥ ५२

---

५३ उत्तरार्च्चिकस्य १,२,६,१ । २७

(३)—"क्षिप्र-नामान्युत्तराणि षड्विंशतिः । क्षिप्रं कस्मात् ? सङ्क्षिप्तो विकर्षः"-इति नैरुक्तम् ३,२,१० ।

(४)—निघण्टोर्द्वितीयाध्यायीय-चतुर्दशखण्डादनन्तरम् ।

(५)—आश्चर्य्यमेतत् ? क्वास्ति मन्त्रे 'नु'-इति । विवरणकृता तु यथाश्रुतस्य 'नः' इत्यस्य विवरणं पादपूरणार्थइत्युक्तम् । पद-ग्रन्थे खलु नः, मंहि इत्येवं छेदः श्रूयते, तथाच नः मंहित्वम् अस्तु इत्येतादृशेऽर्थे कोवा वादः इत्यपि न गम्यते !! ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र र २१ २ १ २र १
I आतून आ। इन्द्रुमार३न्ताम्। चाइत्रंग्राभार३०-

२ १ १ २र ३ ५ १
हाइ। संगृरभाया। महाहस्तोर३४हाइ। दक्षार्इ-

१ १ २ ५र र १ २
णाइना। माहार३। हार्स्तोर३४औहोवा। दक्षिणे

इना२३४५॥ १६॥

५र र ४ ५ १ २ ५
II आतूनइंद्रक्षुमान्ताम्। चित्रार्ङ्गा२३४भाम्।

२ २ ५ ऽ २ १ २ ५र र
सङ्गृभार३४या। मार्हार। हार्स्तार३४औहोवा।

१ २ र ३ १ १ १ १
दक्षिणार३४५॥ १७॥

हे "इन्द्र"! "महाहस्ती"(१) महाहस्तवान् त्वम् "तु"(२) तदानीमेव "नः" अस्मभ्यं दातुं "चुमन्तं" शब्दवन्तं स्तुत्यमि-

---

I,II गौरीविते।

(१)—महांश्चासौ हस्तश्च महाहस्तः, तस्मादिदं तृतीयैकवचनम्, तस्य "इयाडिया-जिकाराणामुपसङ्ख्यानम् (३,१,३९)"-इतीकारादेशः महता हस्तेनेत्यर्थः।

(२)—ऋचि तू इति "ऋचि तु-नु-घ-मक्षु-तङ्-कु-त्रोरुष्याणाम् (६,३,१३३)"-अनेन दीर्घः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र २५४ ५ ५ २ १र
III आतूनइ। द्रचुमाइन्ताम्। चित्रंग्राभँसङ्गृभा२
१ २ १र २ २ ३ ५ २र१
या। चित्रंग्राभँसम्। गृ। औ३होइ। भा२३४या। ऐहोइ।
र र १ २र १ ३र ५ ४
महाहस्तीदचा२३होइ। औहो। वाहो२३४वा। णा५इनो
५
इहाइ॥ १८॥

५र र ५ २ १र र
II आतूनइन्द्रचुमाइन्ताम्। चित्रंग्राभँसङ्गृभाया।
२ १र २ ५ ३ ५
चित्रङ्ग्राभँसम्। गृ२३। ई३४हा। भा२३४या।
२र१ र र १ २र १ ३र
एहोइ। महाहस्तीदचा२३होइ। औहो। वाहो२३-
५ ४ ४ ५
४वा। णा५इनोइहाइ॥ १९॥ ५३

त्यर्थः "चित्रं" चायनीयं "ग्राभं"(३) ग्राहकं [ग्रहणार्हं वा] धनं "दक्षिणेन" हस्तेन "आ सङ्गृभाय"(४) आभिमुख्येन सङ्गृहाण॥ ३॥ ५३

---

III,IV आपालवैणवे, वैणवे वा आपाले वा आकूपारेवा पारववे वा।

(३)—हृग्रहोरिति भत्वे रूपम्। अभिषवादिभिः संस्कारैः संस्कृतमित्यर्थः।

(४)—"छन्दसि शायजपि (३,४,९४)"-इति शायच्। हृग्रहोरिति भत्वम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

प्रियमेध ऋषिः।

२ १र २र ३ १ २ ३ १ २ ३ २
अभिप्रगोपतिङ्गिरेन्द्रमर्चयथाविदे।
३ २ ३ २ ३ १ २
सूनुꣳसत्यस्यसत्पतिम् ॥ ४ ॥ ५४

४ ५ ४ ५ २ र ऽ १ र ७ १ २
I अभो अभो। प्रगोइपातिङ्गिरा२। इन्द्रमर्चयाथा
२र र १ २ ५ १ २
१विदा२इ। सूनूइꣳहाइ। सात्या२३४हा। स्या२सा
५र र २ १ १ १ १ १
२३४औहोवा। पतोइमे२३४५ ॥ २० ॥

४ ५ ४ ५ २ १ २ ३ १
II अभो अभो। प्रगो। पतिङ्गिरा। इन्द्राम्।

"गोपतिं" गवां(१) स्वामिनम् "इन्द्रम्" "अभि अर्च(२)"

---

५४ उत्तरार्चिकस्य ७,१,१,१। २८

I,II धुरोः सामनी।

(१)—'गोशब्देनात्र सोमउच्यते'-इति वि०।

(२)—'मध्यम-पुरुषैकवचनमिदमुत्तमपुरुषैकवचनस्य स्थाने द्रष्टव्यम्, लोट् लडर्थे। 'अभ्यर्च' आभिमुख्येन स्तौमीत्यर्थः—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ ३ ५ १ ऽ २ १ ४र ३
अर्चायार२३४था। ऊं३ऊ३म्। आर२३४इविदाइ। सूनुं

४ ३ ४ ५ १ ऽ २ १ ५ ४
सत्यस्यसा। ऊं३ऊ३म्। औ२३४वा। पा५। तोई-

५
हाइ॥ २१॥

५ २ २ ४ ५ १ र
III अभि। प्रगो३। पतिं गिरा। इन्द्रमर्चयथावि-

१ २ ४ १
दा२३ई। सूनुंसत्या३१२३। स्यसापुत्यतायिम्। सूनुं

२ ४ ५ ४ ५
सत्या३१२३। स्य सावा। पा५। तोईहाइ॥ २२॥ ५४

"गिरा" स्तुत्या प्रकर्षेण पूजय "यथा विदे"(३) स यथा स्वात्मानं स्तुत-प्रकारं जानाति [यथा वा यागं प्रति गन्तव्यमिति जानाति] तथाऽर्चेति। कीदृशमिन्द्रम्? "सत्यस्य" यज्ञस्य "सूनुम्" पुत्रं(४) [तत्रानुरक्तत्वात् सूनुरित्युपचर्यते] "सत्पतिं" सतां यजमानानां पालकम्॥ ४॥ ५४

---

III महागौरीवितम् गौरीवितं वा।

(३)—'कथं पुनः स्तौमि? 'यथाविदे' यथा जानामीत्यर्थः' इति वि०।

(४)—कथम्पुनः सत्यस्यपुत्रः? उच्यते—वैविध्य-लक्षणं ब्रह्म सत्यं तेन (ब्रह्म-नामकेन



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

वामदेव ऋषिः ।

१ २ ३ १र २र ३ २ ३ १ २ ३ १ २
कयानश्चित्र आभुवदूतीसदावृधःसखा ।
३ १ २ ३ २
कयाशचिष्ठयावृता ॥ ५ ॥ ५५

५ र २ १ २ २ र १ २ १
I कयानश्चो। चत्राभू३वात्। ऊताइस। दा।
२ ३ ५ १ २ २ १ ४ २
वाइः सा२३४खा। कयाश३चो३। ष्ठा२३या३। वा
५
३४५त्तौ६हाइ ॥ २२ ॥

५र र र १र र २ १ २ २ ५र र
II हावोइ। होवाइकयानश्चित्रआभू३वा३४त्। होवाइ।

"सदावृधः" सर्वदा वर्द्धमानः "चित्रः" चायनीयः(१) "सखा"

---

५५ उत्तरार्चिकस्य १,१,१२,१ । २८
I,II वाचः सामनी ।

ऋत्विजा यानि हवींषि हूयन्ते तैर्जन्यते यस्मात्, तस्मात् सत्यस्य सूनुः। अथवा सत्यमन्नं हविर्लक्षणं तेन सञ्जायते प्याय्यते वा, तस्मात् सत्यस्य सूनुः'-इति वि०।

(१)—'चित्रः विचित्रः पूज्यो वा' इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र र र र २ १ २ २ ५र र ५र र
होवाऊतीसदा। वृधाः साइखाइ४। होवाइ। होवाइ।

र २ १र २ ५र र २
कयाशचाइ। ष्ठया। वा२र्त्ता२३४औहोवा। ऊ२३-

५
४पा॥ २४॥

२ र ४ २ ४र ५ १ र २ १र
III का५या। नश्चा३इत्रा३आभुवात्। ऊ। तीसदावृ-

२ १ २ र २ १ २ २
धः स। खा। औ३ हो हाइ। कया२३शचाइ। ष्ठ

र २ १ १ २
यौ हो३। ऊम्मा२। वा२। र्त्तौ३५हाइ॥ २५॥ ५५

मित्रभूतः इन्द्रः "कया" "ऊती"(२) ऊत्या तर्पणेन "नः" अस्मान् "आ भुवत्"(३) आभिमुख्येन भवेत् "शचिष्ठया" प्रज्ञावत्तमया(४) प्रज्ञासहित मनुष्ठीयमानेन "कया वृता" केन वर्त्तनेन कर्मणा च अभिमुखो भवेत्॥ ५॥ ५५

---

III महावामदेव्यं वामदेव्यं वा।

(२)—'सुपां सुलुगित्यादिना (७,१,३९) पूर्वसवर्णदीर्घः।

(३)—लेटो रूपम्।

(४)—'शची'-इति निघण्टौ प्रज्ञानामसु अष्टमम् पदम् ३.९। 'शचीति कर्म-नाम

४९क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

श्रुतकक्ष ऋषिः।

१ २   २ २ २ १ २   २ १ २
त्यमुवःसत्रासाहंविश्वासुगीर्ष्वायतम्।

१ २   २ १ २
आच्यावयस्यूतये ॥ ६ ॥ ५६

I त्यमुवाः। सत्रासाहा२म्। विश्वासुगीर्षू आ१या-
तार२म्। आच्या२३। वा२या२३४औ। होवा। सि-
यूऽत। ये२३४५ ॥ २६ ॥

यजमानः स्तोतारं सम्बोध्याह(१)—हे स्तोतः! "सत्रासाहं" [सत्रा शब्दो बहु-वाची(२)] बहूनामभिभवितारं [यद्वा शत्रून् स-

---

५६ उत्तरार्चिकस्य ८,१,१०,१—ऋग्वेदस्य ६,६,१६,२—
ऊहगानस्य १३,२,४।

(नि० २,१,२२) अतिशयेन शची, शचिष्ठा, तया शचिष्ठया, अतिशय-कर्मवत्या याग-क्रियये त्यर्थः'-इति वि०।

(१)—'श्रुतकक्षः पुत्र पौत्रमाह'-इति वि०।

(२)—निघण्टौ द्वादश पदानि बहुवाचकानि पठितानि (३,१)। न तत्र सत्रेत्यु-पलभ्यते।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ र ४र ५ ५ १ र
II त्वा३४म् । उवःसत्रासाहम् । ओ६वा । विश्वा-

र र १ १ २ १ ऽ २र
सुगीर्षाया२ताम् । आ२च्या । वा२३या । सियौ३वो ।

३र २ १ ५ ५
वाचा३४३इ । ता२३४यो६हाइ ॥ २७ ॥ ५६

बलेन सङ्गत्य जेतारं(३)] "वः" युष्मदीयेषु "विश्वासु गीर्षु"(४) सर्वेषु स्तोत्रेषु "आयतं"(५) विस्तृतं [सर्वत्रेन्द्र एव स्तूयते तस्मात् तेषु विततम्] "त्वम् उ" ['उ'-इत्यवधारणे] तमेवेन्द्रम् "ऊतये" अस्मद्रक्षणाय "आच्यावयसि" [च्युङ्, प्रुङ्, प्लुङ्-गतौ (भ्वा०आ०)] त्वदीयैः स्तोत्रैः यज्ञं प्रति आभिमुख्येन गमय ॥ ६ ॥५६

---

I,II इन्द्रस्य सत्रासाहीये, अजितस्य आजित्ती वा ।

(३)—'सत्रा शब्दः सत्य-वचनः (नि०३,१०,३)सदा शब्दपर्य्यायो वा । सहि अभिभवे मर्षणे च (भ्वा० आ०), अत्र सहि अभिभवार्थः । सत्येन सर्वदा वा शत्रूणामभि भवितारम्'-इति वि० ।

(४)—'सप्तमी-बहुवचनमिदं तृतीया-बहुवचनस्य स्थाने द्रष्टव्यम् । विश्वाभि र्गीर्भिः सर्वाभिः ऋग्यजुःसाम-लक्षणाभि र्वाग्भिरित्यर्थः'—इति वि० ।

(५)—'आयतं निबद्धं स्तुतमित्यर्थः'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी

मेधातिथि ऋर्षिः।

१ २ ३ २ ३ १ २ ३ १र २र ३ १ २
सदसस्पतिमद्भुतम्प्रियमिन्द्रस्यकाम्यम।
३ २ ३ १ १
सनिंमेधामयासिषम् ॥ ७ ॥ ५७

४ ५ १ ७ २ ३ ५ ५ २ ३
I सादा। सस्पताइमद्भुता। ओ२३४वा। प्रायाओ-
५ १ १ २ २ २ १ र
२३४वा। आइन्द्रा। स्याकामा२३४५याई५६म्। सनिम्मे-
ऽ १र २र २ १ १ १ १
२धामयासिषा२३४५म् ॥ २८ ॥ ५७

"मेधां" लब्धुं "सदसस्पतिं"(१) एतन्नामकं देवम्(२) "अयासिषम्" प्राप्तवानस्मि। कीदृशम्? "अद्भुतम्" आश्चर्यकरम् "इन्द्रस्य प्रियम्" [सोम-पाने सहचारित्वात्] "काम्यम्" कमनीयं "सनिं"(३) धनस्य दातारम्(४) ॥ ७ ॥ ५७

---

५७ ऋग्वेदस्य १,१,३५,१।

I वामदेव्यम्।

(१)—"षष्ठ्याः पति-पुत्रे त्यादिना (८,३,५३) सत्वम्।

(२)—नैघण्टुक-दैवत-काण्डे अ-परिगणितम्।

(३)—"छन्दसि वनेत्यादिना (३,२,२७) इन्।

(४)—'सदसस्पतिं' सदोनाम-यज्ञगृह-स्वामिनम् 'अद्भुतं' महान्तम् 'काम्यं' कमनीयं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

वामदेव ऋषिः ।

२ ३ १ २ ३ २ ३ २उ क २र ३ १ २
येतेपन्थाअधोदिवोयेभिर्व्यश्व*मैरयः ।

३ १ २ ३ १ २
उतश्रोषन्तुनोभुवः ॥ ८ ॥ ५८

२ २ ५ २ ३ ५
I हाइ । आप्स्दा२३४त्वाः । आम्सदा२३४त्वाः ।

२र र १ ७ १ १ १ १ २ ३ ५
येतेपन्था आ३धोदि्वा२३४५ः । हाइ । आमूदा२३४त्वाः ।

२र १ ७ १ १ १ १ २ ३ २ ३ ५
येभिर्व्यश्वा३माइरया२३४५ः । हाइ । उताश्रो२३४षा ।

२ १ १ ३ ५र र ३ ५
तुनो२३ । भूरवा२३४औहोवा । ई२३४तो ॥ २८ ॥ ५८

हे इन्द्र ! "दिवः" द्युलोकस्य "अधः" अधस्तात् "ये"

---

* "विश्वम्"-एष पाठो भाष्य-मात्र-सम्मतः । "व्यश्वम्"-इति पाठस्तु सङ्गृहीत-समस्त-पुस्तकानाम् ।
विवरणकारस्य सम्मतश्च स एव, तथाच—'व्यश्वम् वेगिताश्वं शीघ्र मित्यर्थः'-इति तद्-विवरणम् ।

---

I अश्विनोः साम ।

'प्रियं' यष्टॄणाम्, 'इन्द्र', 'सनिं' गोः, 'मेधां' प्रज्ञाञ्च 'अयासिषम्' याचे—एषोऽर्थो विवरण-सम्मतः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

श्रुतकक्ष ऋषिः*।

२ १ २ ३ २ ३ २३ १ २
भद्रम्भद्रन्न आभरेषमूर्जꣳशतक्रतो।
१ २ ३ १ २
यदिन्द्रमृडयासि नः॥ ९॥ ५९

"पन्थाः"(१) पन्थानः मार्गाः सन्ति, "येभिः"(२) यैर्मार्गैः "विश्वं" सर्वं जगत् "ऐरयः" प्राप्तवानसि, ते मार्गाः यजमानैः स्तूयन्तामिति शेषः। "उत" अपिच "नः" अस्मदीयाः "भुवः"(३) भूमीः निवास-स्थानानि "श्रोषन्तु"(४) यजमानाः त्वदनुग्रहाच्छृण्वन्तु(५)॥ ८॥ ५८

---

* 'सुकक्षस्यार्षम्'-इति वि०।

५९ ऋग्वेदस्य ६,६,२६,२।

---

(१)—'एकवचनमिदं बहुवचनार्थे भवति'-इति वि०।

(२)—भिसऐसादेशश्छन्दसि बाहुल्येन भवति (७,१,१०)।

(३)—"छन्दस्युभयथा (६,४,८६)"-इत्युवङ्।

(४)—लेटि सिपपत्वे (३,४,९४)-रूपम्।

(५)—'ये' 'ते' तव समताः 'पन्थाः' पन्थानः 'दिवः अधः' अन्तरीक्ष-लोके 'येभिः' यैः पथिभिः 'विश्वं' शीघ्रम् 'ऐरयः' आगतवानसि। 'उत' अपिच ते रेत्य 'भुवः' अवयवे वेद्याख्य-प्रदेशे 'नः' अस्माकं स्तुतीः 'श्रोषन्तु' शृणोतु भवान्—इत्ययमर्थो विवरणसम्मतः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४ ५ २ १र २ ४ ५ ४ ५
I भद्रम्भाद्राम् । नआभार२३रा३ । आइषामूर्जाम् ।

२ १ २ ४ ५ ४ ५ १ ३ ५र र
शतक्रा२३ता३उ । यादिन्द्राम्रृ । डा२या२३४औहोवा ।

२ ५
सो२३४नाः ॥ ३० ॥ ५९

हे "शतक्रतो" शत-विध-कर्मन् ! [शत-प्रज्ञ ! वा] "इन्द्र" ! "भद्रं भद्रं" कल्याणतमं(१) [सुखोत्पादकं वा] धनं "नः" अस्मभ्यम् "आभर"(२) सम्पादय देहि, तथा "इषम् ऊर्जम्"(३) अन्न-रसं [यद्वा बलवदन्नं(४) देहि], "नः" अस्मान् "यद्"(५) यदि "मृडयासि" सुखयसि तर्हि धनादिकं देहीति [मृड सुखने (क्र्या० प०)] तस्य लेटि अङ्गस्याडागमः(६) ॥ ९ ॥ ५९

---

I गोतमस्य भद्रम् ।

(१)—अभ्यासेनातिशय्यं लभ्यते ।

(२)—हरतेर्भत्वे रूपम् आहरेत्यर्थः ।

(३)—'इषम्', 'ऊर्जम्' द्वे अप्येते अन्ननामनी (नि०२,७,१७—१८), अतः पौनरुक्त्य-प्रसङ्गात् ऊर्जशब्दोऽत्र रस-वचनो द्रष्टव्यः अन्नञ्च रसञ्चेत्यर्थः—इति वि० ।

(४)—'ऊर्ग्'-इति निघण्टौ बल-नामसु एकविंशतितमम् २,९ ।

(५)—'यत्' तृतीयाया अत्र लुक्, येन अन्नेन रसेन च 'मृडयसि' सर्वदा सुखयसि, जीवयसीत्यर्थः—इति वि० ।

(६)—"लेटोऽडाटौ (३;४,९४)" ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

बिन्दु ऋषिः*।

२ ३ १ २ ३ २ ३१र २र ३ १ २
अस्तिसोमोअयꣳसुतःपिबन्त्यस्यमरुतः।
३ २ ३ १ २ ३ १ २
उतस्वराजोअश्विना॥ १०॥ ६०

॥ इति तृतीय-दशति॥

२ ४ २र ४र २ ४ २ ४ ५ २र ४र
I अस्तिसोमोअयꣳसुतः। अ। स्येआस्ती। सोमो-
२ ४ २ ४ ५ २ ५ ४ ४
अयꣳसुतःपिबन्त्यस्यम। रुतो२३४हाइ। उतस्वरा५जो-
५ ४ ५
वा। श्वा५इनो६हाइ॥ ३१॥ ६०

"अयं" पुरोवर्त्ती "सोमः" "सुतः" मरुदर्थमस्माभि रभिषुतः "अस्ति" विद्यते, तस्मात् "अस्य" अन्वादेशे एनं सुतं सोमं "स्वराजः" स्वयं दीप्यमानाः स्व-तेजसा नान्यदीयेनेत्यर्थः, तादृशाः

---

* 'पूतकक्षस्य सुकक्षस्य वा इदमार्षम्'-इति वि०।

६० उत्तरार्चिकस्य ८,१,८,१—ऋग्वेदस्य ६,६,२८.४।

I अश्विनोःसाम, सोम-साम वा।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

"मरुतः" प्रातः(१) "पिबन्ति"(२); "उत" अपिच "अश्विना"(३) अश्विनौ च सोमं प्रातः सवने पिबतः ॥ १० ॥ ६०

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

अथ सप्तमे खण्डे—

सैषा प्रथमा।

इन्द्रमातरो देवजामय ऋषिकाः।

३ १ २ ३ २ ३ १ २ ३ १ २र
ईङ्खयन्तीरपस्युवइन्द्रञ्जातमुपासते।

३ १ २ ३ १ २
वन्वानासःसुवीर्यम् ॥ १ ॥ ६१

---

६१ ऋग्वेदस्य ८,८,११,१।

(१)—प्रातइति न जाने कुतोलब्धः ?

(२)—'लडयं लोडर्थे द्रष्टव्यः, पिबन्तु।'-इति वि०।

(३)—"अथातो द्युस्थाना देवता तासा मश्विनौ॥ द्यावापृथिव्यावित्यके, अहो-रात्रा वित्येके, सूर्य्याचन्द्रमसावित्येके, राजानौ पुण्यकृतावित्यैतिहासिकाः"—इत्यादि नैरुक्तम्१२,१,१—२।

Digitized by Madhuban Trust, Delhi



५र २ १ १ २र
I ईङ्खयन्तीः। अपा२स्युवा२ः। आइन्द्रञ्जातम्।

१ २ १र २ १ २
ऊपा१साता२इ। वन्वाना२३साः। सुवीरिया३१उवा२३।

२
वृधे१॥ ३२॥ ६१

"ईङ्खयन्तीः"(१) गच्छन्त्यः स्तुत्यादिभिः इन्द्रं प्राप्नुवन्त्यः "अपस्युवः" अपः कर्मात्मन इच्छन्त्यः इन्द्रमातरः अस्य सूक्तस्य द्रष्ट्र्यः(२) "जातं" प्रादुर्भूतं तम् "इन्द्रम्" "उपासते"(३) परिचरन्ति, "सुवीर्यं" शोभन-वीर्योपेतं धनं च "वन्वानासः"(४) तस्मात् इन्द्रात् सम्भक्तवत्यो भवन्ति॥

"वन्वानासः"-"भेजानासः"-इति पाठौ॥ १॥६१

---

I त्वाष्ट्रसाम। "त्वाष्ट्री"-इति च पाठः।

(१)—'ईङ्खते'-इति गतिकर्मसु अश्नोतितमम् नि०२,१४।

(२)—'स्तुतयः'-इति वि०।

(३)—'उपगम्य इन्द्रं तस्यैव समीपे व्यवतिष्ठन्त इत्यर्थः'-इति वि०।

(४)—'वनु, याचने—इत्यस्येदं रूपम्। याचमाना उच्यन्ते। किं याचमानाः? उच्यते—तस्यैवेन्द्रस्य शोभनं वीर्यम्'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

गोधा ऋषिः।

१ २ ३१२ २२
नकिर्देवा*इनीमसिनक्या†योपयामसि।
३ १ २
मन्त्रश्रुत्यं‡चरामसि ॥ २ ॥ ६२

५ र २१ २ १ ऽ २
I नकिर्देवाः। इनाइ। इनोमासा३इ। मासी३या।
५ र २१ २ १ ऽ २ ५
नकियायो। पया। पयामासा३इ। मासी३या। मन्त्र-
७१ २ १ ऽ २
श्रुत्याम्। चरा। चरामासा३इ। मासी३या ॥ ३३ ॥ ६२

हे "देवाः" इन्द्रादयः! युष्मद् विषये "न कि(१) इनीमसि" न किमपि हिंस्मः(२) [मीङ् हिंसायां, क्र्यादिकः "मीनाते

६२ ऋग्वेदस्य ८,७,२२,७।

* "नकिर्देवा"-इति, † "नकिरायो"-इतिच ऋग्वेद-पाठः।
‡ "मन्त्रश्रुत्यम्"-इति आद्यनुदात्त अन्तोदात्तश्च ऋग्वेद-पाठः।

I गोधासाम।

(१)—'नेति प्रतिषेधे, कीति निपातोऽनर्थकः'-इति वि०।

(२)—'हे देवाः न इनीमसि, प्राणि-वधं कर्म पश्वादि-यागं न कुर्म इत्यर्थः' -इति वि०।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

दध्यङ्ङाथर्वण ऋषिः*।

३ १र २र ३ १ २ ३ १
दोषोआगाद्बृहद्गायद्युमद्गामन्नाथर्वण।
३ २ ३ १ २ ३ १ २
स्तुहिदेव॑ꣳसवितारम् ॥ ३ ॥ ६३

४र ५र र ४ २ १ र २ १र
I दोषोआगात्। बृहद्गाया। द्युमद्गार३मान्। आथ-

र्निगमे (७,३,८१पा०)"-इति ह्रस्वः, "इदन्तोमसि (७,१,४६ पा०)" मकार-लोपश्छान्दसः। आकारः समुच्चये।] "न कि' न च "योपयामसि" योपयामः(३) अननुष्ठानेन [अन्यथानुष्ठानेन वा] मोहयामः [युप विमोहने (चु०प०)]। किन्तर्हि? "मन्त्रश्रुत्यं" मन्त्रेण स्मार्यं श्रुतौ विधिवाक्य-प्रतिपाद्यं यद् युष्मद्विषयं कर्म(४) तत् "चरामसि" आचरामः(५) अनुतिष्ठामः॥

"इनीमसि"-"मिनीमसि"-इति च पाठौ॥ २ ॥ ६२

---

* 'वामदेवस्यार्षम्'-इति वि०-पाठः।

I सवितुः साम।

(३)—'इह निखननार्थे द्रष्टव्यः; यूप-निखननमपि न कुर्मः, वृक्षौषध्यादि-हिंसामपि न कुर्मः'-इति वि०।

(४)—'जपाख्यम्'-इति वि०।

(५)—'प्राणि-वधं न कुर्मः, जपमेव कुर्म इत्यर्थः। उक्तञ्च—"जप्येनैव तु संसिद्ध्येद



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २　　२ १　　१ २　　१र २　　४ ५
र्वणा३। स्तुहि। औ३ह्वो३४इ। देवा३म्। सवोवा।
४　५
तापूरो६ह्वाइ ॥ ३४ ॥ ६३

हे "बृहद्गाय"(१) बृहदाख्यस्य साम्नो गातः! "द्युमद्गामन्"(२) दीप्त-गमन! "आथर्वण"(३) अथर्वऋषेरपत्य!(४) [ऋषिः स्वात्मानमेवामन्त्रयते] त्वं "दोषः"(५) ऋत्विग्यजमानापराधेन यः कश्चिद् दोषः "आगात्" आगच्छति तत्परिहारार्थं "सवितारं"(६) प्रेरकम् एतन्नामकं "देवं" "स्तुहि"। [यद्वा "दोषः" दूषयति नाशयति तमांसीति, दुनोति उपतपति रक्षांसीति वा दोषः, सः सविता "आगात्", अतो हे "आथर्वण!" "बृहत्" स्तोत्रं "गाय"। तथा "गामन्" गायतीति गामा हे एवं विध! स्वात्मन्! "द्युमत्" दीप्तिमदन्यत् स्तोत्रम् उप गाय। शिष्टं(७) पुनरादरार्थम् ॥ ३ ॥ ६३

---

ब्राह्मणो नात्र संशयः। कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते (मनुः२।८७)" -इति'-इति वि०।

(१)—'गाय उच्चारय'-इति वि०।

(२)—'द्युमतां स्वर-सौष्ठव-युक्तानां साम्नां गामन् गातः,'-इत्यर्थो वि०-सम्मतः।

(३)—थर्वति गत्यर्थः, थर्वा गन्ता, न थर्वा अथर्वेत्युच्यते, तस्यायं स्तोता स्वभूतः, तेन स आथर्वणः, तस्य सम्बोधनं हे आथर्वण! मम वामदेवस्य स्वभूत! इत्यर्थः' इति वि०।

(४)—"अथर्वाणोऽथनवन्तस्थर्वतिश्चरतिकर्मा तत्प्रतिषेधः"-इत्यादि नै११,१८।

(५)—'दोषा रात्रिः, उ इति पदपूरणः'-इति वि०। पद-कारस्त्वेव मेव चिच्छेद—'दोषा, उ'-इति।

(६)—'सविता सर्वस्य प्रसविता'-इत्यादि नै०१०,३१। 'सवितृ-दैवत्यश्च दृहत्' -इति वि०-ध्वनिः।

(७)—शेषमर्द्धर्चम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

प्रस्कण्व ऋषिः।

३ २ ३ १र २र क २र ३ २ ३ २
एषोउषाअपूर्व्याव्युच्छतिप्रियादिवः।

३ १ २ ३ २
स्तुषेवामश्विनाबृहत् ॥ ४ ॥* ६४

५र र १ र २ र १ २ १ २ २
I एषोउषाः। आपूर्विया। व्युच्छति। होवा३हाइ।

१र २ ३ २ ३र २ २ १ ५
प्रियादा२३इवा३४ः। स्तुषा३४इवामा३। श्विनो२३४वा

४ ५
बृपूहोईहाइ ॥ ३५ ॥

"एषः"(१) एषैव अस्माभिः परिदृश्यमाना "प्रिया" सर्वेषां प्रीतिहेतुः "अपूर्व्या"(२) पूर्वेषु मध्यरात्रादिकालेषु विद्यमाना न

६४ उत्तरार्चिकस्य ८,३,७,१—ऋग्वेदस्य १,३,२३,१।

I उषस साम।

(१)—'एषा, उ, उषाः'-इति पदकारः। विवरणकारेण च तथैव व्याख्यातः 'उकारः पादपूरणः'-इति।

(२)—'यतः पूर्वं नास्ति सा अपूर्वा, अपूर्वा एव अपूर्व्या, स्वार्थिकस्तद्धितः; प्रथमेत्यर्थः'-इति वि०।

*॥ इति ग्रामे गेये पञ्चमस्यार्द्धः प्रपाठकः ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

गोतम ऋषिः।

१ २  ३ २ ३ १ २ ३१र  २र
इन्द्रोदधीचोअस्थभिर्वृत्राण्यप्रतिष्कुतः।
३ १ २  ३१र २र
जघाननवतीर्न्नव॥ ५॥ ९५

भवति किन्विदानीन्तना "उषा"(३) उषो देवता "दिवः" द्यु-लोकस्य सकाशात् आगत्य "व्युच्छति" तमो वर्जयति(४)। हे "अश्विना" अश्विनौ! (५) "वां" युवां "बृहत्" प्रभूतं यथा भवति तथा "स्तुषे" स्तौमि॥ ४॥ ९४

---

९५ उत्तरार्च्चिकस्य ३,१,८,१—ऋग्वेदस्य १,६,७,४।

(३)—'उषाः, कस्मात्? उच्छतीति सत्या रात्रेरपरः कालस्तस्या एषा भवति' इत्यादि नैगम-काण्डीयं नैरुक्तम् (२,१८) पदकृन्मतेऽवलम्बनीयम्।' सायण-मते तु—'उषा, वष्टेः कान्ति--कर्मणः, उच्छतेरितरा माध्यमिका; तस्या एषा भवति'-इत्यादि दैवत-काण्डीयं नैरुक्तम् (३.५—६) प्रेच्यम्।

(४)—'व्युच्छति, उच्छिविवासे, विवासयति—किम्? सामर्थ्यात् तमांसि; शक्नोति विवासयितुम् अतो विवासनेनात्र उदितत्वं लच्यते, उदितेत्यर्थः' इति वि०।

(५)—'अथातोद्युस्थाना देवताः। तासामश्विनौ प्रथमागामिनौ भवतः। अश्विनौ यद् व्यश्नुवाते सर्वं रसेनान्योज्योतिषान्यः। अश्वैरश्विनावित्यौर्णवाभः। तत्काव-श्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्य्याचन्द्रमसावित्येके राजानौ पुण्यकृता-वित्यैतिहासिकाः। तयोः कालः ऊर्द्ध्वमर्द्धरात्रात् प्रकाशीभावस्यानुविष्टम्भमनुतमो भागो हि मध्यमो ज्योतिर्भाग आदित्यः। तयोरेषा भवति'-इत्यादि नैरुक्तम्. १—२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २ २ ३ २ १२
I ओम्। इन्द्रोदधीचोअस्थभिरिया २ई३या। वृत्राण्य-
३ २ १२ २ १
प्रतिष्कुतइया २ई३या। जघाननवतीर्नवइया २। इ२।
२ ५२ २ २ ५
या२३४। औहोवा। ऊ२३४पा॥ १॥

५ २ २ २ ५ २ १२
II इन्द्रोदधाइ। चोअस्था२३४भोः। वृत्राणिया।

अत्र शाट्यायननिन इतिहास माचक्षते—'आथर्वणस्य दधीचो जीवतो दर्शनेन असुराः पराबभूवुः। अथ तस्मिन् स्वर्गते, असुरैः पूर्णा पृथिव्यभवत्। अथेन्द्रस्तैरसुरैः सह योद्धु मशक्नुवंस्त मृषि मन्विच्छन्, स्वर्गं गत इति शुश्राव। अथ पप्रच्छ तत्रत्यान्—इह किमस्य किञ्चित् परिशिष्टमङ्गमस्ति? इति, तस्मा अवोचन्—अस्त्येतदाश्वं शीर्षं, येन शिरसा अश्विभ्यां मधुविद्यां प्राब्रवीत्, तत्तु न विद्मः तद्यत्राभवदिति; पुनरिन्द्रोऽब्रवीत्—तदन्विच्छतेति। तद्वा अन्वेषिषुः। तच्छर्यणावत्यनुविद्या जह्रुः, (शर्यणावद्ध वै नाम कुरुक्षेत्रस्य जघनार्द्धे सरः स्यन्दते)। तस्य शिरसोऽस्थिभिरिन्द्रोऽसुरान् जघानेति'(१)॥

---

I,II त्वष्टुरातिथ्ये द्वे।

(१)—विवरणकारस्त्वेनमितिहासमन्यथाचष्टे। तथाहि--'कालखञ्जा नाम असुराः। रसुरैर्बाध्यमाना देवा ब्रह्माणमुपगम्योक्तवन्तः—भगवन्! कालखञ्जैरसुरैर्बाध्यामहे,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र १ २ १र २ २ र २ १ २ ४ ५
प्रातिष्कुताः। जघानाऽ२३ना। वतीर्नवा। औ३होवा।
४
होपुइ। डा॥ २॥ ६५

"अप्रतिष्कुतः"(२) परैरप्रतिशब्दितः प्रतिकूल-शब्द-रहितः "इन्द्रः" आथर्वणस्य "दधीचः" (३) एतन्नामकस्य ऋषेः "अस्थभिः" पार्श्व-शिरः-सम्बधिभिरस्थिभिः "नवतीर्नव" नव-सङ्ख्याका नवतीः, दशोत्तरा अष्टशत-सङ्ख्याकाः [८१०] [तथाहि—लोक-त्रय-वर्त्तिनो देवान् जेतुम् आदावासुरी माया त्रिधा सम्पद्यते, त्रिविधा सा अतीतानागत-वर्त्तमान-काल-भेदेन तत्काल-वर्त्तिनो जेतुं पुनरपि प्रत्येकं त्रिगुणिता भवति, एवं नव सम्पद्यन्ते, पुनरपि उत्साहादि-शक्ति-त्रय-रूपेण(४) त्रैगुण्ये सति

---

तेषां मारणोपायं विधत्स्वेति। तच्छ्रुत्वा स तानुवाच—दधीचि र्नाम ऋषिस्तमुपगम्य ब्रूत, स मारणोपायं विधास्यति। ते तच्छ्रुत्वा तथेत्यङ्गीकृत्य तं दधीच मुपगम्य उक्तवन्तः—भगवन्! अस्मदीयान्यस्त्राणि शुक्रस्तेषां पुरोधा अपहरति, तानि रक्ष। ततः स ऋषिस्तानुवाच—मम मुखे प्रक्षिपध्वम्। तत इन्द्रादिभि र्देवैः स-मरुद्गणैः तस्य मुखे प्रक्षिप्तानि। पुनः कालेन देवासुर-सङ्ग्रामे पर्युपस्थिते एत्य देवा ऊचुः—भगवन्! तान्यस्त्राणि प्रयच्छास्माकम्। ततस्तेनोक्तम्—तानि मे जीर्णानि, न तानि पुनः प्राप्तुं शक्यानि। ततः प्रजापति-मुखा देवा ऊचुः—भगवन्! प्राण-त्यागं कुरुष्व। इति श्रुत्वा पुनः कृतस्य तेन प्राण-त्यागः। तस्य दधीचः सम्भूतैरस्थिभिरिन्द्रो वृत्राणि जघान' -इति।

(२)—'अप्रतिस्खलितः'-इति वि०।

(३)—"या मथर्वा मनुष्पिता दध्यङ् धियमत्नत"-इति (१,१९,७,१९) ऋग्वेदीय-मन्त्रार्थः परिद्रष्टव्यः।

(४)—प्रभावोत्साहमन्त्रजाः शक्तयस्तिस्रः।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

मधुच्छन्दा ऋषिः।

२उ ३ १२ २२ ३ १ २ २ १ २
इन्द्रेहिमत्स्यन्धसोविश्वेभिःसोमपर्वभिः।

३ १ २ ३ १२ २२
महाँ२ अभिष्टिरोजसा॥ ६॥ ६६

५ र र २ १ २ २ १ २२
I इन्द्रेहिमाहाउ। त्सोइआन्धाइसाः। वाइश्वेभिः

सप्तविंशतिः सम्पद्यते, पुनः सात्विकादि-गुण-त्रय-भेदेन त्रैगुण्ये सति एकोत्तरा अशीतिः सम्पद्यते, एवं चतुर्भिस्त्रिकै र्गुणिताया मायाया दशसु दिक्षु प्रत्येक मवस्थाने सति नव नवतयः सम्पद्यन्ते; एवं विधं मायारूपाणि] "वृत्राणि" (५) आवरकाणि असुर-जातानि "जघान" हतवान्॥ ५॥ ६५

हे "इन्द्र!" "एहि" अस्मिन् कर्मणि आगच्छ, आगत्य च "विश्वेभिः" सर्वैः "सोमपर्वभिः"(१) सोमरसरूपैः "अन्धसः"

---

६६ ऋग्वेदस्य १,१,१७,१—यजुर्वेदस्य ३१,२५।

I पौषम्।

(५)—नपुंसकलिङ्गमिदं व्यत्ययेन (३,१.३९)—वृत्रानिति।

(१)—'पर्वाणि अवयवाः, सोमस्य पर्वाणि, तैः सोमपर्वभिः, तदर्थमभिषुतैः सोमा-वयवैः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

वामदेव ऋषिः।

१र २र ३ २ ३ २ ३ १ २
आतूनइन्द्रवृत्रहन्नस्माकमर्द्धं* मागहि।
३ २ ३ १ २ ३ १ २
महान्महीभिरूतिभिः॥ ७॥ ६७

१ २ १ २ ७ ५ १ १ २
सो२३हा३। मापर्वा२३४भीः। महा५२३। आरभा२३-
५ र र २ १र २ १११
४औहोवा। ष्टिरोजसा२३४५॥ ३॥ ६६

अन्धोभिः अन्नैः(२) "मत्सि" माद्य हृष्टो भव, तत ऊर्द्ध्वम् "ओजसा" बलेन महान् भूत्वा "अभीष्टिः"(३) शत्रूणामभिभविता भवेति शेषः [अष्टाविंशति(४)-सङ्ख्याकेषु बल-नामसु 'ओजः' 'पाजः' -इति (नि०२,९) पठितम्॥ ६॥ ६६

* 'अर्धम्'-इति ऋग्वेद-पाठः।

६७ ऋग्वेदस्य ३,६,२७,१—आरण्यगाने ४,३।

(२)—"अन्ध इत्यन्न-नाम"-इति नै० ५,१।

(३)—'आभिमुख्येन यष्टव्यो वा'-इति वि०।

(४)—'बल-नामान्युत्तराण्यष्टाविंशतिः'-इति नै०२,८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

वत्स ऋषिः।

३ १ २ ३-२उ ३ १ २
ओजस्तदस्यतित्विषउभेयत्समवर्त्तयत्।
३ १ २ ३ १ २
इन्द्रश्चर्मेवरोदसी॥ ८॥ ६८

२र २र२र ५र २र २र २र ५र २ १ २ १ ५
I आतूऔहो। आतूऔहो। नइन्द्रवृत्रा२३४हान्।
२ १र २ १ २ १र २ १ १
अस्माकमर्द्धम्। आगा२३हो। गाहो२। माहो२आ
२ १ ५ ५ ५
हो२३। भिरू२३४वा। ता५इभोईहाइ॥ ४॥ ६७

हे "वृत्रहन्!"(१) वृत्राणां शत्रूणां हिंसक! इन्द्र! त्वं "नः" अस्मान्(२) प्रति "तु"(३) चिप्रम् आगच्छ, हे "इन्द्र!" "महान्" प्रभूतः त्वम् "महीभिः" महतीभिः "ऊतिभिः" रक्षाभिः सह "अस्माकम्" "अर्द्धं" समीपम् "आ गहि" आगच्छ॥ ७॥ ६७

---

६८ उत्तरार्च्चिकस्य ८,१,१३,३।

I इन्द्रस्य माया।

(१)—'अथास्य कर्म—रसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्रकर्मैव तत्' इत्यादि नैरुक्तम् ७,१,१०। 'वृत्रवधो मेघ-वधः'-इति तद्भाष्यम्।

(२)—'अस्माकम्'-इति वि०।

(३)—'ऋचि तु, 'तू'-इति दीर्घः श्रूयते। तत्र सूत्रम्—"ऋचि तु-नु-घ-मक्षु-तङ्-कु-त्रोरुष्याणाम् (६,३,१३३)"-इति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २ १र २ ३ ५
I हा। हाउवा३। ओजस्तदस्यतित्विषे२३४। हा।

२ १र २ ३ ५ २ १
हाउवा। उभेयत्समवर्त्तया२३४त्। हा। हाउवा३। इन्द्र-

५र १र ३ १ १ १ १
श्चर्मे२वरोदसी२३४५॥ ५॥ ६८

४र ४ २ १र २
II ओजस्तदापूस्यतित्विषाइ। उभेयत्समवर्त्तयादा१-

१ ३ ५र र २ १र ३ १ १ १ १
इन्द्रा२३:। चा२र्मा२३४औहोवा। वरोदसी२३४५॥६॥६८

"अस्य" इन्द्रस्य "तत्" "ओजः" बलं "तित्विषे" दिदीपे [त्विष दीप्तौ (दि०प०] "यत्" येन ओजसा अयम् "इन्द्रः" "उभे" "रोदसी" द्यावापृथिव्यौ "चर्मेव"(१) "समवर्त्तयत्" सम्यग् वर्त्तयति। यथा कश्चित् किञ्चित् चर्म कदाचिद् विस्तारयति कदाचित् सङ्कोचयति, एवं तदधीने अभूतामित्यर्थः(२) ॥ ८ ॥ ६८

---

I,II इन्द्रस्य संवर्त्तस्य वा सांवर्त्ते।

(१)—"चर्म चरतेर्वोच्चृत्तं भवतीति वा"-इति नै०२,५।

(२)—'यथा कश्चित् चर्म वेष्टयति, तद्वदित्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

शुनःशेप* ऋषिः।

३ १२३१२ ३१२ ३२
अयमुतेसमतसिकपोतइवगर्भधिम्।
३१२
वचस्तच्चिन्नओहसे॥९॥६९

४ २ ४ २ ४र ५ १ र २
I अयाऽ५मु। ताइइसाइमानसाइ। कापोतइ।
१ २ १ १ २१ ५
वगार्भा१धी२म्। वाचा२स्ताच्चोर२३त्। नओर२३४वा।
४ ५
हा५सो६हाइ॥७॥६९

हे इन्द्र! "अयम् उ" अयमपि(१) हूयमानः सोमः "ते" त्वदर्थं सम्पादितः यं सोमं "समतसि" सम्यक् सातत्येन प्राप्नोषि। तत्र दृष्टान्तः—"कपोत इव" यथा कपोताख्यः पक्षी

---

* 'शुनः शेफ'-इति वि०-पाठः।

---

६९ उत्तरार्च्चिकस्य ७,३,१५,१—ऋग्वेदस्य १,२,२८,४।
I आङ्गिरसस्य शौनःशेपम् च्यावनं वा।

(१)—इद्ध सायण-मते उ अप्यर्थः। विवरण-मते नु पाद-पूरणाय।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

वातायन उल्ल ऋषिः।

२ ३ १ २ ३२ ३ १ २ ३ १ २ ३ २
वातआवातुभेषजꣳशम्भुमयोभुनोहृदे।
२ १ २
प्रनआयूꣳषि* तारिषत्॥ १० ॥ ७०

॥ इति चतुर्थ-दशति ॥

४२ ५ ४२ ५२ ४ ४ १ २ १
I वातआवातु। भा५इषजाम्। शम्भुमयः। भुनो-
७ २२ २ १ २ २ २ १
हृदा२३४इ। हाहोइ। प्रनआयूꣳषी३ता। रिषात्।
४ ५ ४ ५
औ२३होवा। इडा॥ ८॥ ७०

"गर्भधीं"(२) गर्भधारिणीं कपोतीं प्राप्नोति तद्वत्, "तच्चित्"(३) तस्मादेव कारणात् "नः"(४) अस्मदीयं "वचः" "ओहसे" प्राप्नोषि॥ ८॥ ६९

---

* 'प्रणआयषि'-इति ऋग्वेदीय-पाठः।

---

७० उत्तरार्चिकस्य ९,३,११,१—ऋग्वेदस्य ८,८,४४,१।

I प्रतीचीनेड़ं काशीतम्।

(२)—गर्भो धीयते यस्यां सा गर्भधिः, ताम्।

(३)—'तन्मम स्वमूतं वचः'-इति, 'चिदिति पादपूरणः'-इति च वि०।

(४)—'बहुवचनमिदमेकवचनस्य स्थाने द्रष्टव्यम्'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अस्मात् ण्यन्तात्(५) लुङि चङि रूपम् 'यद्वृत्तान् नित्यम् (८,१,६६पा०)'-इति निघात-प्रतिषेधः] तदा "भानुं" दीप्तिं "विश्वथा"(६) विश्वधा बहुविधां(७) "व्यतनत्" विस्तारयति [तनोतेर्व्यत्ययेन शप् (१,१,८५पा०]। प्रातरनुवाके उषस्येन काण्डेन (१,२४,२) उषाः स्तुता सती प्रादुर्बभूव, हे अश्विनौ! शंसिष्यमाणम् आश्विनं क्रतुं श्रोतुं युवामपि प्रादुर्भवत-इत्यध्याहारेण वाक्यं पूरणीयम्(८)॥

"सतः"-"सती"-इति पाठौ॥ ६॥ १०५

---

धारण-शीलत्वात्। तथाहि—"इदं श्रेष्ठं ज्योतिषां ज्योति रागाच्चित्रः प्रकेतो अजनिष्ट विभ्वा। यथा प्रसूता सवितुः सवाय मेवारात्र्युषसे योनि मारैक्"-इति ऋ० १,१६,८, १। "इदं श्रेष्ठं ज्योतिषां ज्योतिरागमच्चित्रं प्रकेतनं प्रज्ञाततम मजनिष्ट विभूततमम् यथा प्रसूता सवितुः प्रसवाय रात्रिरादित्यस्यैवं रात्र्युषसे योनि मरिचत् स्थानम्" -इति यास्क-कृत तद्व्याख्यानम्। "स्त्री-योनिरभियुत एनां गर्भः"-इति च नैरुक्तम् २,१९। 'रुशद्वत्सा रुशती"१,१६,८,२)-इत्यादि चोषसः स्त्रीत्वे लिङ्गम्।

(५)—'नपुंसकलिङ्गमिदं व्यत्ययेन, या उषा'-इति। 'पुरस्ताद् यच्छब्द-श्रुतेर्योग्यार्थसम्बन्धस्तच्छब्दोऽध्याहर्त्तव्यः'-इति च वि०।

(६)—"प्रत्न पूर्व विश्वेमात् थाल्छन्दसि ५,३,१११)"-इति थालि रूपम्।

(७)—मृदु-मन्द-तीव्र-लक्षणामित्यर्थः।

(८)—तथाच श्रूयते—"प्रातर्युजा विबोधयाश्विना वेह गच्छताम्। अस्य सोमस्य पीतये (१,५,३,१)"-इत्यादि "प्रातर्योगिनौ विबोधयाश्विना विहागच्छता मस्य सोमस्य पानाय"-इत्यादि च यास्क-कृतं तद् व्याख्यानम्। "अश्विनौ यद् व्यश्नुवते सर्वं रसेनान्यो ज्योतिषान्यः **तत्कावश्विनौ द्यावापृथिव्या वित्येके ऽहोरात्रा वित्येके सूर्या चन्द्रमसा वित्येके राजानौ पुण्यकृता वित्यैतिहासिकाः"-इत्यादि नै० १२,१।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

विश्वामित्रो जमदग्नि र्वा ऋषिः ।

१ २ ३ १र २र
आ नो मित्रावरुणा घृतैर्गव्यूति मुक्षतम् ।
२ १ २
मध्वा रजाꣳसि सुक्रतू ॥ ७ ॥ १०६

३र ४र ५ र २ २र १ ३र
I आनोमित्रा । वरुणा३ । औहोवा३४ । घृतै
४ ५ २ २र १ १ २र १ ५र
र्गव्यूतिमु । क्षता३म् । औहोवा२ । माध्वारजाराꣳ
२र १ र १ २ १
सिसू३ । औहोवा२ । क्रतू । इडा२३भा३४३ । ओ२३
४५ इ । डा ॥ १२ ॥ १०६

"सुक्रतू" शोभन-कर्म्माणौ हे "मित्रावरुणौ !" "नः" अस्माकं "गव्यूतिं"(१) गवां मार्गं गो-निवास-स्थानं "घृतैः"(२) क्षरण-

१०६ उत्तरार्चिकस्य १,१,५,१—ऋग्वेदस्य ३,४,११,५ ।
I मित्रावरुणयोः संयोजनम् ।

(१)—'गावो यत्र चरन्ति स गव्यूतिरुच्यते'-इति वि० ।

(२)—घृतमिति घृणाते रूपम् । तथाहि फणिभाष्ये—(७,१,९५) "घृणातेस्त्रीणि रूपाणि लोके, घृतं घर्म घृणा"-इति 'उदक्ष्विलक्षणैः',इति वि० । निघण्टौ चोदक-नामसु दशमम् १,१२ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

प्रस्कण्व(१)ऋषिः*।

२ ३ २ १ २ ३ २ ३ १ २ ३ १ २
उदुत्येसूनवोगिरःकाष्ठायज्ञेष्वत्नत*।
२ १ २ ३ १ र २ र
वाश्राअभिज्ञुयातवे॥ ८ ॥ १०७

साधनैः पयोभिः(२) "आ उक्षतम्" आ समन्तात् सिञ्चतम्, अस्मभ्यं दोग्ध्रीः गाः प्रयच्छतामिति भावः। रजांसि"(३) पारलौकिकान्यस्मदावासस्थानानि "मध्वा"(४) मधुरेण दुग्ध-रसेन सिञ्चतम् [गव्यूतिम्-'गोर्यूतौ छन्दसि(६,१,१२३पा०]-इत्यवादेशः, मध्वा-सर्व-विधीनां छन्दसि विकल्पितत्वादनुमभावः॥ ७॥ १०६

---

* 'हिरण्यस्तूपस्यार्षम्'-इति वि०। "हिरण्यस्तूपो हिरण्यमयस्तूपोऽस्येति वा। स्तूपः स्त्यायतेः सङ्घातः"। इति नै० ४,३३।

* "अज्मेष्वत्नत"-इति ऋग्वेदीयः पाठः।

---

१०७ ऋग्वेदस्य १,३,१३,५।

(१)—"प्रस्कण्वः कण्वस्य पुत्रः, कण्व-प्रसवोयथा प्राग्रम्"-इति नै० ३,१७।

(३)—'त्रीनपि लोकान्'-इति वि०।

(४)—'उदकेन'-इति वि०। मधु-इत्युदक-नामसु एकादशम् १,१२।

(५)—"सुप्तिङुपग्रहलिङ्गनराणां कालहलच्स्वरकर्तृयङाञ्च। व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिद्ध्यति बाहुलकेन"-इति (३,१,८५) कात्यायन-वचनात लिङ्गव्यत्यये "जसादिषु छन्दसि वा वचनम् प्राङ्णौ चङ्युपधायाः"-इति (७,३,९०) कात्यायनीयेन घि-संज्ञाभावे रूपमिति भावः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र र　　५र　　　१ २र　　१　　०
I उदुत्येसूनाईवोगिराः। काष्टाय। ज्ञाइ। षुवा-
३　　५　　२र १र　　३　　१　　४　　२
२त्ना२३४ता। वाश्राश्रा२३भोइ। ज्रू२३याइ। ता३४-
५
पुवोईहाइ॥ १३ ॥ १०७

"त्ये" ते प्रसिद्धाः "गिरः सूनवः" वाच उत्पादकाः(१) मरुतः(२) [वायवो हि ताल्वोष्ठादिषु सञ्चरन्तो वाचमुत्पादयन्तो(३) "यज्ञेषु" स्वकीयेषु यागेषु वर्त्तमानेषु सत्सु "काष्ठाः" अपः ["आपोऽपि काष्ठा उच्यन्ते क्रान्त्वा स्थिता भवन्तीति" (२,१५) यास्कः(४)] "उत् उ" उत्कर्षेणैव "अत्नत" अतनिषवन्तः विस्तारितवन्तः। उदकं विस्तार्य्य तत्पानार्थं "वाश्राः"(५)

---

I ऋतुषाम।

(१)—सूनवः-इत्येस्यैवार्थः उत्पादक इति। अत्र च सुनोतेः स्नुतुरित्येव वीजम्।

(२)—इयञ्च मारुती ऋक् इति प्रसिद्धा।

(३)—तथाच्चि शिक्षा-वचनम्—"आत्मा बुद्धा समेत्यार्थान् मनोयुङ्क्ते विवक्षया। मनः कायाग्निमाहन्ति स प्रेरयति मारुतम्। मारुतस्तूरसि चरन् मन्द्रं जनयते स्वरम्"-इत्यादि।

(४)—काष्ठाइत्येतदनेकस्यापि सत्वस्य नाम भवति। काष्ठा दिशो भवन्ति, क्रान्त्वा स्थिता भवन्ति। काष्ठा उपदिशो भवन्ति, इतरेतरं क्रान्त्वा स्थिता भवन्ति। आदित्योऽपि काष्ठोच्यते, क्रान्त्वा स्थितोभवति। आज्यन्तोऽपि काष्ठोच्यते, क्रान्त्वा स्थितो भवति। आपोऽपि काष्ठाउच्यन्ते, क्रान्त्वा स्थिता भवन्तीति स्थावराणाम्"-इति नि० २,१५।

(५)—"स्फायि तञ्चि वञ्चि (उ०,द्वि०)"-इत्यादिना शब्दार्थ वाशेः रकि सिद्धम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी ।

मेधातिथिर्ऋषिः ।

२ ३उ २ १ २ ३ १र २र ३ २
इदंविष्णुर्विचक्रमेत्रेधानिदधेपदम् ।

१ २ ३ २
समूढमस्यपांसुले* ॥ ९ ॥ १०८

॥ इति तृतीय-दशति ॥

५ ५ १ ३ २ ३ ५ १
I इदाइमे । विष्णूरः । विचक्रा२३४माइ । त्राइ-

हस्मारवोपेताः गाः "अभिज्ञु"(६) जान्वभिमुखं यथा भवति तथा "यातवे"(७) गन्तुं प्रेरितवन्त इति शेषः(८) ॥ ८ ॥ १०७

---

* "पांशुरे"-इति ऋग्वेदीयो यजुर्वेदीयश्च पाठः । "स्वाहा"-इत्यन्तेनाधिकश्च यजुर्वेदे ।

---

१०८ उत्तरार्चिकस्य ८,२,५,१ = ऋग्वेदस्य १,२,७,२ = यजुर्वेदस्य ५,१५ = अथर्व-ब्राह्मणस्य १,१७ = ऊहगानस्य १४,७ ।

I विष्णोः साम ।

(६)—जानुनोज्ञः (५,४,१,३०) ।

(७)—"तुमर्थे से सन् (३,४,९)"-इत्यादिना तवेङ् ।

(८)—'त्ये' ते 'सूनवः' रुद्रस्य अपत्यभूता 'मरुतः' 'गिरः' गर्जितलक्षणा वाचः 'काष्ठाय वृष्टि-लक्षणा अपः 'यज्ञेषु' निमित्त-भूतेषु 'उदत्नत' ऊर्द्धं विस्तारयन्ति । कीदृशा मरुत? 'वाश्राः' वासन-स्वभावकाः । कथं क्षिपन्ति? 'अभिज्ञु' अभिनिपात्य-जानुनी मरुतो दात्यर्थः । किमर्थम्? 'यातवे' पृथिवीं प्रति गमनाय । इत्यर्थो विवरण-निष्पन्नः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र २ १ २ २
धानि। इधाइपा१दा२म्। समू२हो१। ढा२३मा३।
१ ३ ५र र २ २
स्या२पा२३४औहोवा। ए३। सुले१॥ १४॥ १०८

'विष्णुः" त्रिविक्रमावतारधारी "इदं" प्रतीयमानं सर्वं जगत् उद्दिश्य "त्रेधा" त्रिभिः प्रकारैः "पदं निदधे" स्वकीयं पादं प्रक्षिप्तवान्। "अस्य" विष्णोः "पांसुले" पांसुरे धूलियुक्ते पादस्थाने "समूढम्" इदं जगत् सम्यगन्तर्भूतम्(१)। सेयमृग् यास्केनैवं व्याख्याता—"* * विष्णु र्विशते र्वाश्नोते र्वा * * * यदिदं किञ्च तद्विक्रमते विष्णुः, त्रिधा निधत्ते पदं त्रेधाभावाय पृथिव्यामन्तरिक्षे दिवीति शाकपूणिः। समारोहणे विष्णुपदे गयशिरसीत्यौर्णवाभः। समूढमस्य पांसुरेप्यायनेन्तरिक्षे पदं न दृश्यते। अपिवोपमार्थेस्या पांसुल इव पदं न दृश्यत इति। पांसवः पादैः सूयन्त इति वा। पन्नाः शेरंत इति वा। पंसनीया भवन्तीति वा"(११,१८—१९)"-इति॥ ९॥ १०८

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोगाख्याने द्वितीयाध्यायस्यैकादशमखण्डः॥ ११॥

---

(१) -"तच्च पादत्रयमपि "समूढमस्य" वच्चेरिदं रूपम सम्यक् स्थापितम्। "पांसुरे" लुप्तोपममेतत् द्रष्टव्यम्, पांसुरइव देशे। १। अथवा पांसुलत्व-योगात् पांशुलशब्देन पृथिव्युच्यते। तेषां त्रयाणां पृथिव्यां यत् पदं तत समूढम। २ अथवा विष्णुरादित्यः। स इदं विचक्रमे। त्रेधा निदधे पदम्—उदयगिरौ, मध्ये नभसः, अस्तङ्गिरौ च। ३। त्रयवा त्रेधा निदधे पदम्—पृथिव्यामग्न्यात्मना, अन्तरिक्षे वैद्युतात्मना, दिवि आदित्यात्मना, तच्च पदत्रयमस्य समूढम् पांसुर इव देशे। ४। अथवा समूढमिति मुहे र्मोहनार्थस्य रूपम्। समूढं संच्छिन्नं यदस्य वैद्युतात्मना पदम तत समूढं सच्छिन्नम॥"-इति वि०।

* * "अथ यद्विषितो भवति तद्विष्णुर्भवति"-इत्यादिभागेनाधिकस्तत्र।

* * * इहैव तत्र मन्त्र स्वरूपः पठितः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वादशखण्डे—

सैषा प्रथमा ।

मेधातिथि ऋषिः ।

१ २ ३ १ २ ३ २ ३ १र २र

अतोहिमन्युषाविणꣳसुषुवाꣳसमुपेरय* ।

३ २ ३ २ ३ १ २

अस्यरातौ†सुतम्पिब ॥ १ ॥ १०९

५ र २ १ १

I अतोहिमा । न्युषा२वाइणा२म् । सुषुवाꣳसा

हे इन्द्र! "मन्युषाविणं" क्रोधेन सोमं सुन्वन्तम्(१) "अतीहि" अतिगच्छ, तथास्मिन् देशे "सुषुवांसं" सोमं सुन्वन्तम्(२)

---

* "सुमुपारणे"-इति, † "इमं रातम्"-इति च ऋग्वेदीय पाठः ।

---

१०९ ऋग्वेदस्य६,३,५,१ ।

I कौत्सम् ।

(१)—दीप्तस्य सोमस्य अभिषोतारम् मेधातिथिं माम् प्रति'-इति वि० । 'मन्यु'-इति क्रोध-नामसु उपान्त्यं पदम् २,१३ नि० । 'मन्यते'-इति कान्ति-कर्मसु त्रयोदशञ्च २,६ नि० ।

(२)–'अङ्गिरःप्रभृतिमन्यमृषिम्'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

वामदेव ऋषिः ।

२ ३ १ २　३ १र २र ३ १ २
कदुप्रचेतसेमहेवचोदेवायशस्यते ।
१र २र ३ १ २
तदिध्यस्यवर्द्धनम् ॥ २ ॥ ११०

१　२　३ २र १　१
ऽम् । होइ । ऊपै१रायार । अस्यराता२३उ । सूर-
३ ५र र　२ ५
ता२३४औहोवा । पो२३४वा ॥ १५ ॥ १०९

३ ४ २ ४र५ र　२ २　१　ऽ　५रर
I कदुप्रचेतसे । महा३इ । वा२३४चो । देवाहाउ ।
४ ५र　२ १　२　३ १　२ २　२ १
वचोदेवा । यशस्या२३ता३४इ । तदा३४इध्डिया३ । स्यवो
५　४　५
३३४वा । धापूनो६हाइ ॥ १६ ॥ ११०

"उपेरय" समीपे प्रेरय । "अस्य" यजमानस्य "राती" यज्ञाख्ये दाने "सुतम्" अभिषुतं सोमं "पिब" ॥ १ ॥ १०९

"महे" महते "प्रचेतसे"(१) प्रकृष्ट-ज्ञानाय "देवाय" द्योत-

---

I काश्यपम् आप्सरसं वा ।

(१)—'चेतः'-इति प्रज्ञा-नामसु तृतीयम् ३,९ नि० । "प्रचेताः प्रवृद्ध-चेताः" इति नै० ८,५ ।

५९क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

मेधातिथि-प्रियमेधावृषी*।

३ २ ३२३१२ २१ २ ३१र २र
उक्थन्न शस्यमानं नागोरयिरा चिकेत।
१ २ ३२३ १ २
नगायत्रङ्गीयमानम्॥ ३॥ १११

५ ४ ५ ४ २ र र र २
1 उक्थन्नोहाइ। शस्यमानम्। नागोरा२३यीः।

नादि-गुण-युक्तायेन्द्राय "कदु"(२) कुत्सितम् अस्मदीयं "वचः" स्तोत्र-रूपं सुतं "शस्यते" यथा प्रशस्तं भवति(३) देव स्तथानुगृह्णातीत्यर्थः। "तदित्" तदेव "अस्य" यजमानस्य 'वर्द्धनं हि"(४) प्रवृत्ति-साधनं खलु॥ २॥ ११०

---

* 'मेधातिथेरार्षम्-इत्येव वि०।

---

१११ उत्तरार्च्चिकस्य ८,१,१५,२ = ऋग्वेदस्य ५,७,१८,४।
I वार्हदुक्थम्।

(२)—'कत्, किम उत्तरस्याः पञ्चम्या अत् आदेशः, कस्मात् कारणात्'। 'उ' इति पाद-पूरणः,-इति वि०।

(३)—'शस्यते उच्चार्यत इत्यर्थः'-इति वि०। 'शंसति'-इति अर्चति-कर्मसु पठ्यते ३,१४ नि०।

(४)—'हि' यस्मात् 'तत्' उच्चारितम् वचनम् 'अस्य' देवस्य 'वर्द्धनम्' वृद्धिकरम् तस्मादुच्चारयेति वि०-सम्मतोऽर्थः। स्तूयमाना हि देवता वीर्येण वर्द्धते इति तत्सिद्धान्तः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र र २१र २ र १ ३
आचिकेता। नगायार२३त्राम्। गो। यमा२ना२३४
५र र ३ ५
औहोवा। ऊ२३४पा॥ १७॥ १११

गायते गौः(१) "अगोः"(२) अस्तोतुः(३) "अयिः" अरिः [व्यत्ययेन यकारः(३,१,८५पा०) ] शत्रुः इन्द्रः "शस्यमानं" होत्रा पठ्यमानम् "उक्थं च" शस्त्रमपि "आ चिकेत" अभिजानाति [कितज्ञाने, छान्दसो लिट् (३,४,७पा०)। नेति सम्प्रत्यर्थे] "न" सम्प्रति प्रस्तोत्रादिभि र्गीयमानं "गायत्रम्" गातव्यं साम(४) [यद्वा गायत्राख्यम्(५)] आचिकेतेत्येव। अतः कारणात् वयमपि तमिन्द्रं स्तुमइत्यर्थः॥

"नागोः"-"अगोः"-इति, "रयिः"-"अरिः"-इति च पाठौ॥ ३ ॥ १११

(१)—तथाहि-"गातेर्वौकारो नाम-करणः"-इति नै० २,५। गौरिति निघण्टावपि स्तोतृ-नामसु दृश्यते ३, १६।

(२)—'अगोः'-इति पाठस्तु ऋग्वेदीयस्ततोऽत्र न युक्तः, इह पुनर्नागोरिति प्रतीकमुद्धर्त्तुं युज्यते।

(३)—'नागोः' कुङ्गुङ् अव्यक्ते शब्दे; गुः अव्यक्तभाषी; न गुः=अगुः=व्यक्तभाषी, न अगुः=न व्यक्त-भाषी=नागुः। तस्य नागोः अव्यक्त-भाषिण इत्यर्थः'-इति वि०।

(४)—"गायत्रं गायतेः स्तुति-कर्मणः"-इति नै० १,८।

(५)—तच्च गानं चतुर्षु गान-ग्रन्थेषु नोपलभ्यते, परमध्ययनारम्भे गुरु-मुखादनुश्रूयते। तदिदम्—"तत्सवितुर्वरेण्योम्। भार्गोदेवस्य धीमाही २। धियोयोनः १। चो २१२१२। ऊम्। आ २। दायो। आ२३४५॥ १॥" अस्या मूलमृक् तु उत्तरार्चिकस्य षष्ठ-तृतीय-दशम-सूक्ते प्रथमेति पठ्यते॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

विश्वामित्र ऋषिः* ।

१ २ ३ २ ३ १ २ ३ १ २ ३ १ २
इन्द्र उक्थेभिर्मन्दिष्ठो वाजानाञ्च वाजपतिः ।
१ २ ३ २ ३ १ २
हरिवान्त्सुतानाᳲसखा ॥ ४ ॥ ११२

५ २ १ २ १ २ ३
I इन्द्र उक्थाइ । भिर्मान्दाइष्ठोइ । वाजानार३४-
५ १र २ १ २ ५ १र ५र १
ञ्चा । वाजपतिः । हराऽइवार३४त्सु । तानाऽᳲस ।
२ ४ ५ ४
खा । औ३होवा । होऽ५इ । डा ॥ १८ ॥ ११२

"वाजानाम्"(१) अन्नानां मध्ये "वाजपतिः" उत्कृष्टान्न-पतिः "हरिवान्" हरि-नामकाश्ववान् "इन्द्रः" "उक्थेभिः" होतृ-प्रयुक्तैः (उक्थ-नामकै र्वा शस्त्रैः) "मन्दिष्ठः" अतिशयेन तृप्तः सन् "सुतानाम्" अभिषुतानां सोमानां "सखा" सखिवत् प्रीति-करः सोमैः प्रीयत इत्यर्थः(२) ॥ ४ ॥ ११२

---

* 'वामदेवस्यार्षम्-इति वि० ।

---

I वार्हदुक्थम् ।

(१)—'ददातेति वाक्यशेषः'-इति वि० ।

(२)—'अस्मामृचि च-शब्दः पाद-पूरणः सर्व-सम्मतः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

मेधातिथि-प्रियमेधावृषी*।

२ १ २ ३१२ २२ ३ १ २
आयाह्युपनः* सुतंवाजेभिर्माहृणीयथा।
२ १ २३१ २
महाँइवयुवजानिः॥ ५॥ ११३

४२ ५२ ४ १ १ १ २ २ १२ २
I आयाही। उपनःसुतम्। होवा३हाइ। वाजे
१ १२ २२ १ २ २ १२ २ १ १ २
२भिर्माहृणीयथा३ःहोवा३हाइ। महाँइवयुवा२३। होवा-
२ १ २ ५२ २ २ ५
३हा३इ। जा२ना२३४औहोवा। ऊ२३४पा॥ १९॥ ११३

हे इन्द्र! "नः" अस्मदीयं "सुतम्" अभिषुतं सोमम् "उप याहि" प्रत्यागच्छ, किञ्च "वाजेभिः" अन्यदीयैर्हविरूपैरन्नैः "मा हृणीयथाः" मा क्रियस्व(१)। तत्र दृष्टान्तः—"युवजानिः" यौवनोपेता जाया यस्यासौ युवजानिः ['जायाया निङ्(५,४,१३४ पा०)'-इति समासान्तः] "महान् इव" प्रभुरिव; यथा रूपवद्-

---

* 'सुतकक्षस्यार्षम्'-इति वि०।
* "आयाह्यद्रिभिः"-इति घ-पाठः।

---

I कौत्सम।

(१)—'एत्य च स्तोकेनापराधेन 'मा हृणीयथाः' मा क्रोधक्रमः, मा रोषीरित्यर्थः'-इति वि०। निघण्टौ क्रुध्यति-कर्मसु 'हृणीयते'-इति चतुर्थन्न पदमीह्यते २,१२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

कौत्सो दुर्मित्र ऋषिः*।

३ १ २ ३ १२ २२ ३ १२ २२ ३ १ २ ३ २
कदावसोस्तोत्रꣳहर्यतआअवश्मशा*रुधद्वाः।

३ २ ३ २ ३ १ २
दीर्घꣳसुतंवाताप्याय ॥ ६ ॥ ११४

२२ २ ५२ १ २ २ २
I औ२होइ। कदावसो। स्तोत्राइम्। हर्य्य-

४ ५ ३ २ २ ५२ २२ २ ५
ताआ। औ२होइ। अवश्मशा। रुधाद्व२३४वाः।

भार्य्यापितः प्रभुः अन्याभि र्नापक्रियते किन्तु तामेव युवतिं प्रत्यागच्छति तद्वत्(२) ॥ ५ ॥ ११३

हे "वसो" वासयितः(१)! इन्द्र! "स्तोत्रम्" अस्मत्कर्त्तृकं

---

* 'दुर्मित्रस्य सुमित्रस्य वार्षम्'-इति वि०।

* "हर्यतआवश्मशा"-इति ऋग्वेदीयः पाठः।

---

११४ ऋग्वेदस्य ८, ५, २६, १।

(२)—विवरणकारस्त्विहैव दृष्टान्तं घटयति—'स यथा तरुणा भार्य्यायाः लोकेऽपराधे ऽपि न क्रुध्यति, तद्वन्मा रोषीरित्यर्थः'-इति।

(१)—'प्रशस्त-धनवन्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३र२  ३ ५   ३र २   २  ४
औ२होऽ१इ । दीर्घ॑ँसुतम् । वाता३४३ । पीऽ३यापूया
२१११११
६५६ । ई२३४५ ॥ २० ॥

२ २  ३र ४र ५  १  २  २२ ४
II कदा३४औहोवा । वसो । स्तोत्रा३म् । हर्यता
५  १ २  ३र ४र ५  १  २२ ३
आ । अवा३४ । औहोवा । श्मशा२ । रुधादू२३४
५  ३र २  ३र ४र ५  १  र २
वाः । दीर्घा३४औहोवा । सुता२३म् । वाता३४३ ।
२ ४
पीऽ३यापूया६५६ ॥ २१ ॥ ११४

"हर्यते" कामयमानाय(२) कामयमानं त्वां ['क्रिया-ग्रहणं कर्त्तव्यम्' कर्मणः सम्प्रदानत्वाच्चतुर्थी] "कदा" कस्मिन् काले "अवारुधत्" अवरोत्स्यति, अवरुध्य च कदा "वाः" वारयिष्यति, तादृशः कालः कदास्माकं सम्भविष्यतीत्याशास्ते । तत्र दृष्टान्तः —अश्नुते क्षेत्रमिति "श्मशा"(३) कुल्या [लुप्तोपममेतत्] यथा कुल्या तत उदकान्यवरुणद्धि अवरुध्य च वारयति तथेत्यर्थः । किमुद्दिश्यावरोध इति तत्राह—"दीर्घं" सवन-त्रय-रूपेणायतं "सुतम्" अभिषुतं सोमं प्रति । किमर्थमिति तदाह—"वाता-

---

I,II इमे द्वे कौत्से ।

(२)—'हर्यति'-इति कान्ति-कर्मसु पाठात् नि० २,६ ।

(३)—"श्मशा शु अश्नुत इति वा श्माश्नुत इति वा"-इत्यादि नै० ५,१२ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

मेधातिथि ऋषिः।

१२ ३ १२३२ ३१ २३१र २र
ब्राह्मणादिन्द्रराधसःपिबासोममृतूꣳरनु।
३२ ३१र २र
तवेदꣳसख्य*मस्तृतम्॥ ७॥ ११५

५र र २र१ २र१ र
I ब्राह्मणादी। द्रराधसाः। पिबासोमा२म्। ऋतू-
१ २र१ १ ४ २
ꣳरनू। तवेदाꣳसा२३। ख्या२३मा३। स्ता३४५र्त्तौ-
५
६हाइ॥ २२॥ ११५

प्याय" [वातेनाप्यते अधस्तान्निपात्यत इति] वाताप्य मुदकं तस्य प्रदानायेत्यर्थः॥ ६॥ ११४

हे "इन्द्र"! "ब्राह्मणात्" शंसिसम्बन्धात् "राधसः" धनभूतात् पात्रात् "सोमं" "पिब"। किं कृत्वा? "ऋतूंरनु"(१)

---

* "तवेद्धिसख्य"-इति ऋग्वेदीयः पाठः।

---

११५ ऋग्वेदस्य १,१,२८,५।

I अर्द्धसप्तनम्।

(१)—"दीर्घादटि समान-पदे (८,३,९)"-नकारस्य रुत्वे साप्तमिक-रुडागमे च (७,१,८) रूपम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

मेधातिथि ऋषिः।

२ १ २　३ १ २　　३ १ २
वयंघातेअपिस्मसि*स्तोतारइन्द्रगिर्वणः।

१ २
त्वन्नोजिन्वसोमपाः॥ ८॥ ११६

५ ४ ५ र र ४ ५　४　२र १र
I वयंघातेअपिस्मसाइ। स्तोतारइन्द्रगिर्वणाः। ववा

१　७　१　१　२ १　१
२३होइ। तूवन्नोजो२। ववा२३हो। न्वसो२३। मा

५र र　२　१ २ १ १ १ १
२पा२३४औहोवा। ए३। उपा२३४५॥ २३॥ ११६

देवाननुसृत्य ऋतवोऽपि(२) पिबन्त्वित्यर्थः। यस्मात् "तव इदं सख्यम् अस्तृतम्" ऋतूना मविच्छिन्नं तस्माहतुभिः पानं युक्तम्(२)॥ ७॥ ११५

हे "गिर्वणः" गीर्भिर्वननीय! "इन्द्र"! "ते" तवापि "वयं घ"

---

*"अपिस्मसि"-इति ऋग्वेदीयः पाठः।

---

११६ ऋग्वेदस्य ६,३,२,२।

I अर्द्धसद्मनम्।

(२)—'यस्मात् 'तवेदं सख्यं' यष्टृ-यष्टव्य-लक्षणम् 'अस्तृतम्' अहिंसितम्। यस्मात् त्वं सर्वदा यष्टव्यः तस्मात् पिबेत्यर्थः'-इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

विश्वामित्रोगाथिनोभीपाद उदलो वा ऋषिः*।

१ २ ३ १ र २र ३ २ ३ १ २
एन्द्र पृत्तु कासु चिन्नृम्णन्तनूषु धेहि नः।
१ २ ३ १ २
सत्राजिदुग्रपौंस्यम्॥ ९॥ ११७

५र र ५ २ र १ २
I एन्द्रपृत्तुकासुचीइदे। नृम्णाम्। तनूषूइधाइहा-
१ र २ १ २
इइना२ः। सात्राजिदु। ग्रपौर३ंसियाउ। वा३।
२ ५
ऊ३४पा॥ २४॥ ११७

वयं खलु "स्तोतारः" "स्मसि" स्मः भवामः। हे "सोमपाः" सोमस्य पातरिन्द्र! "त्वं" "नः" अस्मान् "जिन्व" प्रीणयसि ॥ ८॥ ११६

हे "इन्द्र"! "पृत्सु"(१) सम्पृक्तासु "कासु चित्" कास्वपि "नः" अस्माकं "तनूषु" अङ्गेषु "नृम्णं(२) बलम् "आ धेहि" आ

---

* 'वामदेवस्यार्षम्'-इति वि०।

---

I अभीपादस्य औदलस्य साम।

(१)—'पृची सम्पर्के-इत्यस्येदं रूपम्, सम्पृच्यन्ते यस्यां याग-क्रियायां यजमाना देवैः सह सा पृक्, तासु पृत्सु याग-क्रियास्वित्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

श्रुतकक्ष ऋषिः।

३ १र १र ३ २ ३ १र २र ३ २ ३ २
एवाह्यसिवीरयुरेवाशूरउतस्थिरः।
३ २ ३ २ ३ १ २
एवातेराध्यम्मनः ॥ १० ॥ ११८

॥ इति चतुर्थ-दशति ॥

५र २ २ ४ ५र २र १ २ १
I एवाहो३असिवीरयूः। एवाशू१रा २ः। उतार३-

समन्तात् स्थापय। हे "उग्र" उद्गूर्ण-बल! इन्द्र! "सत्रा-जित्"(३) द्वादशाहादिभिः सत्रैः जीयमानो वशीक्रियमाणः सन् "पौंस्यम्"(४) पुंसे हितं फलम् "आ धेहि" प्रयच्छेत्यर्थः ॥९॥ ११७

११८ उत्तरार्चिकस्य २,१,१८,१ = ऋग्वेदस्य ६,८,२०,२ = ऊहगानस्य २,२।

I आमहीयवम्।

(२)—'नृम्णगम् धनम्'-इति वि०। नृम्णमिति निघण्टौ बल-नामसु (२,९) धन-नामसु (२,१०) उभयत्रैव दृश्यते।

(३)—'सदा शत्रूणां जेतृ इत्यर्थः'-इति वि०।

(४)—'पौंस्यम् बलम्'-इति वि०। 'पौंस्यानि'-इति बल-नामसु चतुर्विंशति-तमम् २,९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २र र १ २र
स्थिराः। आइ्वातेरा। धियार३म्माउ। वा३स्तौषे-
१११
३४५॥ २५॥ ११८

हे इन्द्र! त्वं "वीरयुः"(१) वीरान् युद्ध-कर्मणि समर्थान् शत्रून् हन्तुं कामयमानः "एव असि" भवसि खलु "हि" प्रसिद्धौ अतएव त्वं "शूरः" सामर्थ्यवानेव भवसि "उत" अपिच "स्थिरः" सङ्ग्रामे धैर्यवान् भवसि। [एकत्र स्थित्वैव शत्रून् सम्प्रहरसीत्यर्थः।] एवं सति "ते" तव "मनः" "राध्यं" स्तुतिभिराराधनीयमेव; यतोऽनेन मनसा त्वं शत्रु-वधं सङ्ग्रामे धैर्यादिकं करोषीति तत एव मन एव सर्वैः स्तुत्यमित्यर्थः ॥१०॥ ११८

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थ-महेश्वरः ॥ २ ॥

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य द्वादशः खण्डः ॥ ७ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिक-मार्ग-प्रवर्त्तक-श्री-वीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दो व्याख्याने ऐन्द्रकाण्डे द्वितीयोऽध्यायः ॥

———

(१)—"क्याच्छन्दसि(३,२,१७०)" इति उः। ।"नच्छन्दस्य पुत्रस्य (७,४,३५)"-इति-दीर्घाभावश्च।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ २ ॥

## अथ तृतीयाध्याय आरभ्यते।

अस्मिन्नध्यायेऽपि इन्द्रः स्तूयते ।

---

ऋचोऽष्टौ ति रभित्वेति(१) बृहत्यः(२) सकला अपि ।
नह्विवो(३) मारुतो तव प्रमित्रायेति(४) संस्तुतिः ।

---

(१)—'अभित्वाशूरनोनुम'-इत्यारभ्य—'विवञ्चियेत्यन्ताः अष्टसु दशसु पठिताः ।

(२)—बृहतीच्छन्दस्काः । अष्टचत्वारिंशदक्षरा बृहती, छन्दः-सूत्र-प्रसिद्धाः; अक्षरैकस्य न्यूनताया मियादि-भावेन पादः पर्यते—आधिक्ये तु न दोषो वैदिकानाम् । "बृहती परिवर्हणात् (६,१२)" इति नैरुक्त-निर्वचनम् "गायत्री मेव त्रिपदां सतीं चतुर्थेन पादेनानुष्टोभतीति ब्राह्मणम्, अत एवोक्तं यास्केन—"अनुष्टुबनुष्टोभनात्"-इति ; सैषा अनुष्टुप् चतुर्भिरक्षरैः परिवृंहिता बृहतीत्युच्यते ।

(३)—'नह्विवस्मरमश्वन'-इत्यादि अभित्वेति-प्रथम-खण्ड-गता नवमी ।

(४)—'प्रमित्रायप्रार्यमणे'-इत्यादि मृगध्युष्विति-तृतीय-खण्ड-गता तृतीया । सेयमादित्यानां संस्तुतिः आदित्य-देवताकेत्यर्थः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ प्रथम खण्डे—

सैषाप्रथमा।

वसिष्ठ ऋषिः।

३ १ २ ३ १ २ ३ १ २
अभित्वाशूरनोनुमोदुग्धाइवधेनवः।

आदित्यानामथेन्द्राग्नीअपा(५) दिन्द्राग्नि-संस्तुतिः।
अश्वित्यक्ता शचीभिर्नः(६) कुष्ठस्त्वेमाउवामिति।
यदा कदा(७) वारुणी स्यात्त्वष्टानो(८) बहु-देवता।
उषस्या प्रत्यु(९) इत्येषा ब्रह्म वट्(१०) सूर्य-संस्तवः।
इत्येकादश(११) ताभ्योऽन्या ऐन्द्र एकोनसप्ततिः॥

---

(५)—'इन्द्राग्नीअपादियम्'-इत्यादि योराजेति-पञ्चम-खण्ड-गता नवमी।

(६)—'शचीभिर्नःशचीवसू'-इत्यादि इतऊतीति षष्ठ-खण्ड–गता पञ्चमी। 'कुष्ठः कोवा'-इत्यादि प्रत्युअदर्श्यत्यष्टम-खण्ड गता तृतीया। 'इमाउवान्दिविष्टये'-इत्यादि तत्रैव खण्डे द्वितीया। आसामृक्त्रयाणां अश्विनी देवता उक्ता कथिता वेदविद्भिरित्यर्थः।

(७)—'यदाकदाचमीढुषे'-इत्यादि इतऊतीति षष्ठ-खण्ड–गता षष्ठी।

(८)—'त्वष्टानोदैव्यंवचः'-इत्यादि इमइन्द्रायेति सप्तम-खण्ड-गता सप्तमी।

(९)—'प्रत्युअदर्श्या'-इत्यादि अष्टम-खण्डीयाद्या।

(१०)—'ब्रह्मयुजोहरयइन्द्र'-इत्यादि 'नकिष्टमित्यादि-द्वितीय-खण्डीय–तृतीया; वण्महांअसि'-इत्यादि 'योराजेति-पञ्चम-खण्ड-गता चतुर्थी; ब्रह्मेत्ययं मन्त्रः वडित्ययं च मन्त्रः सूर्य-संस्तवः सूर्यस्य संस्तुतिः सूर्य-देवताक इत्यर्थः।

(११)—'नहिवो'-इत्यादि कथिता एकादश यथा-कथित-देवताकाः, ताभ्यः एकादशभ्यः ऋग्भ्यः अन्याः एकोनसप्ततिः ऐन्द्राः केवलेन्द्र-देवताकाः इति एतदध्याये ऋ मामामग्निनिसङ्ख्याकानामृचां दैवत-सङ्केतः॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ १र २र २ २ ३ १ २ ३ १ २
ईशानमस्यजगतःस्वर्दृशमीशानमिन्द्रतस्थुषः ॥ १ ॥ १

५ र २ १ ७ १ २ २ १
I अभित्वाशू। रनोनुमा२ः। ओइनू३माः। आदु-

२र १ ७ १ २ २ १ र २
ग्धाइ। वधाइनवा२ः। ओइना३वाः। आइशानमस्य-

१ २ १ २ २ १ र २
जगतः। सुवाद्दृशम्। आर्दृ३शाम्। आइशानमि।

१ २ १ १ २ ५र र
न्द्रतास्थुषः। आर३। स्थूर। षार३४। औहोवा।

२ १ ३ ११११
स्थुषःस्थूषार३४५ुः ॥ २६ ॥

५ २ ४र ५ ४र ५ १ २र १
II अभित्वा३शूरनोनुमाः। आदुग्धाइव। धाइना

२ १ र २ १ ७ ३
२३वाः। आइशानमस्याजग। ताः। सुवार२दृ२३४-

---

१ उत्तरार्चिकस्य १,१,११,१ = ऋग्वेदस्य ५,३,२१,१ = आरण्यगानस्य २,२१—२९—४,२,२—१५—५१० = ऊहगानस्य १२,१९—२२,१—१२ = उह्यगानस्य १,१—३,५—५, १५ ॥

I,II भरद्वाजस्यार्कौ द्वौ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २र १र २ १ २ १ २
श्राम् । ईशाना२३मो । इ्रातस्थुषः । इडा२३भा३४३ ।
२३४५इ । डा ॥ २७ ॥ १

हे "शूर !(१) "इन्द्र !" "अस्य" "जगतः" जङ्गमस्य(२) "ईशानम्" ईश्वरं "तस्थुषः" स्थावरस्य चेशानम् [ईशान-पदस्यावृत्तिरादरार्था(३)] "स्वर्दृशं" सर्वद्रष्टारं(४) "त्वा" त्वां "अदुग्धा इव धेनवः" यथा अदुग्धा धेनवः क्षीर-पूर्णाधस्त्वेन वर्त्तन्ते—तद्वत् सोम-पूर्ण-चमसत्वेन वर्त्तमाना वयम्(५) "अभि नोनुमः" भृशमभिष्टुमः ॥ १ ॥ १

---

(१)—'शूर ! विक्रान्त !'-इति वि० ।

(२)—विवरणकारस्तु—'अस्य जगतः'-इत्यंशस्य विशेष-व्याख्यान मकुर्वन् 'तस्थुषः' स्थावरस्य इति व्याख्याय 'स्थावर-ग्रहणं प्रदर्शनार्थं जङ्गमस्य चेत्यर्थः'-इत्याह ।

(३—विवरण-नये एकस्येशान-पदस्य अस्येत्याद्यनेन सम्बन्धः अपरस्य तु पृथग्पूर्वेश्वरमित्यर्थः ।

(४)—'स्वः आदित्यः तमिव यः पश्यति सः स्वर्दृक् । आदित्यमिव सर्वस्य जगतः द्रष्टारमित्यर्थः'-इति वि० । "स्वरादित्यो भवति ; सु अरणः, सुईरणः स्वृतो रसां त्स्वृतो भासं ज्योतिषां स्वृतो भासेति वा"—इति नै०२,१४ । निघण्टौ दिव आदित्यस्य च साधारणनामसु 'स्वः'-इति प्रथमं पदम् ।

(५)—'अचिर-प्रसूता गावः धेनु-शब्देनोच्यन्ते ; ताः यथा आत्मीय वत्सं स्नेहार्द्रेण मनसा ऊङ्कारादिभिरभिनन्दन्ति तद्वत् स्तुमइत्यर्थः'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

भरद्वाज ऋषि *।

१र २र ३ १र २र ३ १ २
त्वामिद्धि हवामहे साती† वाजस्य कारवः।
३ १ २ ३ १ २ ३ २ ३ २उ ३ १ २
त्वां वृत्रेष्विन्द्र सत्पतिन्नरस्त्वां काष्ठास्वर्वतः॥ २॥ २

५र २ १ २र १ २ रर २
I त्वामिद्धी। हवा २महे। आ। औ३होवाहाउ-
२ ५ २र र र १ २ १
वा३। ऊ३४पा। सातौवाज। स्या३का २रवः। आ।
२ र र २ २ ५ १र २
औ३होवाहाउवा३। ऊ३४पा। त्वांवृत्रा३इषुइ। द्रसा
१ २ १ २ र र २ २ ५
२त्पतिम्। आ। औ३होवाहाउवा३। ऊ३४पा।
१ र र २र १ २ १ २ र र २
नरस्त्वांकाष्ठा। सुआ २र्वतः। आ। औ३होवाहाउवा३।
२१ ५
ऊ३२३४पा॥ २८॥

---

* 'संयोरार्षम्'-इति वि०।

† "साता"-इति ऋग्वेदीयः पाठः।

---

२ उत्तरार्चिकस्य २,१,१२,१ = ऋग्वेदस्य ६,७,२७,१ = आर-
६१क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र ५र र र र र ४ ५ १ २
II त्वामिद्धिहवामहे। सातौवाजोवा। स्याकाश्रा-
२र २ १ ७ १र
वा२ः। त्वांवृत्राइषुइन्द्रसत्। पतिन्नाहा२ः। त्वाङ्का-
२ १ २ १
२३ष्ठा। सुअर्वा२३ता३४३ः। ओ२३४५इ। डा॥ २९ ॥ २

"कारवः" स्तोतारो वयं "वाजस्य" अन्नस्य "सातौ" सम्भजने निमित्तभूते सति(१) हे "इन्द्र"! "त्वामिद्धि" त्वामेव "हवामहे" स्तुतिभि र्ह्वयामहे। हे इन्द्र! "सत्पतिं" सतां पालयितारं श्रेष्ठं त्वां "नरो" नेतारोऽन्येऽपि मनुष्याः "वृत्रेषु" आवरकेषु शत्रुषु सत्सु(२) "हवन्ते" आह्वयन्ति भजनार्थम्। अपि च "अर्वतः" अश्वस्य(३) सम्बन्धिनीषु "काष्ठासु" यथाऽश्वः क्रान्त्वा तिष्ठति तासु काष्ठासु संग्रामेषु(४) युद्ध-कामाश्च त्वामेवाह्वयन्ति अतो वयं त्वामेवाह्वयाम इत्यर्थः॥ २॥ २

---

एयके प्र० २७—द्वि० २२ = ऊहे द्वा० १३—१७ = ऊह्ये प्र० ५—
ट० ६-ट०द्वि० १--प० १६--१७।

I,II इन्द्रस्य, भारद्वाजे द्वे।

(१)—'सातिर्लाभः, तस्मादियं निमित्त-सप्तमी'-इत्यादि वि०।

(२)—'यस्य च भावेन भावलक्षणम्'-इति अत्र सप्तमी। तच्छ्रुतेश्च लक्षणभूत योग्यक्रियापद मध्याहर्त्तव्यम्। तथा च शत्रुषु हन्तव्येषु इत्यर्थः।

(३)—'अर्वा'-इति निघण्टौ अश्वनामसु तृतीयम् (१,१४)। 'अर्वतः ऋ गतावित्यस्य गन्तुर्मेवेत्यादि वि०।

(४)—'काष्ठाशब्देन दृष्टिलक्षण आपउच्यन्ते, तस्मादियं निमित्त-सप्तमी; अप्सु च निमित्त-भूतासु। तदर्थं त्वामाहूयन्तीत्यर्थः। अथवा'-इत्यादि वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

वालखिल्या ऋषयः * ।

३ १र २र३१ २ ३ १ २ ३ १ २ ३ २
अभिप्रवः सुराधसमिन्द्रमर्चयथाविदे ।
१ २ ३ १ २ ३ १ २ ३ १ २ २ १ २ ३ १ २
योजरितृभ्योमघवापुरूवसुःसहस्रेणेवशिक्षति ॥ ३ ॥३

५ २ १र २ १ २
I अभिप्रवाः । सुराधा२३साम् । इन्द्रमर्चं याथा-
१र २ ३ २ १र र २
१विदा२३४इ । योजा३४रितॄ । भ्योमघवापूरु१वाह्व२ः ।
१ १ २ ५र र १ १ २ १ १ १ १
सहा२३ । स्रा२इणा२३४औहोवा । वशिक्षतीर२३४५ ॥३०॥
१ ७ २ २ २ ५ १
II अभाइप्रवा२ः । सुराधा२३४साम् । इन्द्रा-

---

* 'वामदेवस्यार्षम्'-इति वि० ।

---

३ उत्तरार्चिकस्य २,१,१३,१ = ऋग्वेदस्य ६,४,१४,१ = ऊह-गानेऽत्र चत्वारि सामानि ; द्वि०३—स०७—द्वा०११—१५ =ऊह्य गाने चतुर्थस्य द्वितीयेऽत्र चत्वारि सामानि ७-१०-११-१२इति ।

I,II सान्तते द्वे ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



० १ २ ५र र २ ५ १र २
मर्च्चा२३। या२था२३४औहोवा। वी२३४दे। योजरि-

१२र १ ५र र१ २ रर १ २ १
तृभ्योमघवा२पुरूवसुः। सहा। स्रेणेवा३शाये३। च्चा२

३ ५र र २ १ ११११
ता२३४औहोवा। सुभूउतये२३४५॥ ३१॥

४ ३ ४ ५ र ३ २ ३र ४र ५ १ २
III अभिप्रवःसुरा। धसा२३४औहोवा। आइन्द्रमर्च्चं।

१ ० ५ ५ १र २ १ २ १
यथाविदा२३४इ। ओ६हा। योजरितृभ्यः। माघा२३

२ १ २ ५ २ १ र २ २ १ २
वा। पुरू२। वा२३४सूः। सहस्रेणाइवा३शा। इम्नाये

१ २ ५र र २ ५
३। च्चा२ता२३४औहोवा। वा२३४सू॥ ३२॥ ३

"पुरूवसुः" पश्वादि-धनोपेतः यज्ञादि-बाहुल्याद्बहु-निवासको वा "मघवान्" "यः" इन्द्रः "जरितृभ्यः" स्तोतृभ्यः(१) अस्मभ्यं "सहस्रेणेव" सहस्र-सङ्ख्याकेन धनेनेव(२) "शिक्षति"(३)

---

I श्यैतम्।

(१)—जरितेति स्तोतृनामसु द्वितीयं पदम् नि०३,१६।

(२)—'सहस्रेणेव प्रकारेणेवेति वाक्यशेषः, बहुभिः प्रकारैरित्यर्थः'-इति वि०।

(३)—शिक्षतीति दान-कर्मसु षष्ठं पदम् नि०३,२०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

नोधा इन्द्रं स्तौति।

१ २ ३१ २ ३ २ ३ १ २ ३ १र २र
तं वोदस्ममृतीषहं वसोर्मन्दानमन्धसः।
३ २ ३ २र ३ २ ३१ २ ३ १ २
अभिवत्सं नस्वसरेषुधेनवइन्द्रं गीर्भिर्नवामहे ॥ ४ ॥ ४

४ ५ ४ ५ २ र १ २ १
I तं वः। एदास्माम्। ऋतीषहम्। हा २इ। आ

पश्वादि-बहु-धनमस्मभ्यं प्रयच्छतीत्यर्थः। स इन्द्रः "यथा विदे" यथा अस्माभिर्विज्ञायते तथा हे ऋत्विजः! "वो" यूयं(४) "सुराधसं" शोभन-धनोपेतम् "इन्द्रं" परमैश्वर्ययुक्तं देवम्(५) "अभि" आभिमुख्येन "प्रार्च" प्रकर्षेणार्चत(६) ॥ ३ ॥ ३

---

४ उत्तरार्चिकस्य १,१,१३,१ = ऋग्वेदस्य ६,६,११,१ = ऊहेन नव सामानि प्र० ६—ष० द्वि० १४—त्र० ५—८—चतुर्द १०—सप्तद० ४—६—१७—अष्टा० १४ = ऊह्यगानस्य चतुर्थ-द्वितीये नवममित्येकमस्याम्।

I प्रजापतेः, नाविकम्।

(४)—वः त्वामिन्द्रमिति वि०-सम्मतोऽर्थः।

(५)—'समस्ततेजाः परमेश्वरत्व-निमित्तेन्द्र-शब्द-वाच्यः'-इति भवरः।

(६)—प्रार्च-प्रार्चामीत्यर्थो वि०-सम्मतः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ १२ १ र २ र १ २ १
औ३हो। इहा। वासोर्मन्दानमन्धसा३ः। हा २इ। आ

२ २ १२ १ २र र१ऽर
औ३हो। इहा। अभिवत्सन्नस्वसरेषुधेनवा २ः। हा २इ।

१ २ २ १२ १२ १ २ २
आऔ३हो। इहा। इन्द्रम्। हा २इ। आऔ३हो।

१ २ २र२ ३ ५र र १र३ १११
इहा। गोर्भिइः। ना२३४औहोवा। वामहे२३४५ ॥३३॥

५४ २ ४ऽ ५र ४ ५ १ र २ र
II तंवो३दा३स्माम्तीषहोवा। वासोर्मन्दा। न-

१ २ १ २ ३ ४५र २१
मान्धा१सा २ः। आभिवत्सा२१२३४म्। नस्वसरे। षुधा-

२ १ २ ३ २ १
इना१वा २ः। इन्द्राङ्गा१इर्भो २ः। नवा३। मा२३४५।

३ ११११
हा२३४५इ ॥ ३४ ॥

३४र ४ ४५र २ १ ३ ५ १ र र
III तंवोदस्मम्तती। षहाओ२३४वा। वासोर्मन्दा-

१ र २ ऽ २
नमन्धासा २ः। आभिवत्सन्नस्वसरेषूधे१नावा २ः। ओ३वा।

---

II अभीवर्त्तस्य इन्द्रस्य वा, अभीवर्त्तम्।

III अभीवर्त्तस्य, भागम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१　　५　२ १र　　२　१ १ १
इन्द्रङ्गा२३४इर्भीः। नवामा२३४५ह्वा६५६इ। भगा३या२३
१ १
४५॥ ३५॥

३ ४र　३ ४ ५र　३२　१　र ५
IV तंवोदस्मम्ऋती। षहा३म्। वा२३४। सोर्म-
५ ५　२　र　१　२
न्दानम। धासाः। अभिवत्सन्नस्वसरेषूरधाइ। ना२२वाः।
१ र　२　२　ऽ　२　ऽ　२
इन्द्रङ्गीर्भाइर्नो३वा। हु३म्। हु३म्। हु३म्हुम्। नवा-
२　५　४　५
नवो२३४वा। मा५होइ६हाइ॥ ३६॥

१　र ४ ५ र　४ ५　२ १र
V ता२३४म्। वोदस्मम्ऋती। षाहाम्। वसोर्म-
२　२　२　२　१　२　१　२　१ २
न्दा। ना३मान्धा३साः। आ२२भी। वात्सन्न। स्वस।
१　२३　५　१　२　१　२ १
राइ। षूर्धेना२३४वाः। आ२३इन्द्राम्। गाइर्भिर्नवो
५　३　५
२३४वा। मा२३४ह्वे॥ *॥ ३७॥ ४

---

IV अभीवर्त्तः।

V नौधसम्।

---

*॥ इति ग्रामे गेय गाने षष्ठस्यार्द्ध-प्रपाठकः॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे ऋत्विग्यजमानाः! "दस्मं" दर्शनीयम्(१) "ऋतीषहम्" ऋतयो बाधकाः शत्रवः तेषा मभिभवितारं(२)। पुनः कीदृशं? "वसोः" वासयितुर्दुःखस्य विवासयितुः (यद्वा, वसोः पात्रं प्रति वसतः(३), तादृशस्य "अन्धसः" सोम-लक्षणस्यान्नस्य(४) पानेन "मन्दानं" मोदमानं "वः" षष्ठ्यन्तत्वेन युष्मत्सम्बन्धिनं तं तादृशमिन्द्रं गीर्भिः स्तुति-लक्षणाभि र्वाग्भिः "अभि नवामहे" (नु स्तवने, नु शब्दे) अभिष्टुमः। कुत्र? "स्वसरेषु"॥ [अत्र यास्कः (५,४)—"स्वसराण्यहानि भवन्ति स्वयं सारीण्यपि वा स्वरादित्यो भवति स एनानि सारयतीति सूर्य्य-नेतृकेषु दिवसेषु(५) वय मभिष्टुमः अभितः शब्दयामः] तत्र दृष्टान्तः—"वत्सं न" यथा धेनवो नव-प्रसूता गावः स्वसरेषु (सुष्ठु अस्यन्ते प्रेर्य्यन्ते गावोऽत्रेति स्वसराणि गोष्ठानि तेषु) वत्स मभिलक्ष्य शब्दयन्ति तद्वत्॥ ४॥ ४

---

(१)—'तसु दसु उपक्षये-इत्यस्येदं रूपम्; उपक्षयितारं शत्रूणाम्'-इति वि०।

(२)—'ऋतयः सेनाः, गन्तृत्वात्'-इति वि०।

(३) वि०-मते क्वचि 'वसो मन्दान'-इति रेफ-शून्यः पाठः। अतएव तन्मते 'वसो'! प्रशस्तधनवन्नित्यर्थः। 'वः' त्वामिति चार्थः तदभिमतः।

(४)—'अन्धः इत्यन्न-नाम, आध्यानीयं भवति' इत्यादि नै०५,१।

(५)—'स्वसरेषु यागगृहेषु'-इति वि०। स्वसराणीति गृह-नामसु दशमम् नि०३,४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

कलिः प्रगाथऋषिः*।

१ २ ३ १२ ३ १ २ ३ १ २३१२
तरोभिर्वोविदद्वसुमिन्द्रꣳसबाधऊतये।

३१२ २२ ३ १ २ ३ २ ३२उ ३ २ ३ १२
बृहद्गायन्तःसुतसोमेअध्वरेहुवेभरन्नकारिणम्॥ ५॥५

४ ५ १ २ २ ५
I ओम्। तरो। भाइर्वोविदा३१उवा२३। वा२३४सुम्।

१ २र १२२ २ १२र १ २
इन्द्रा२ꣳसबाधऊतये२। बृहात्। बृहा३१उ। वा२।

१२ २ १२२ २ १२ २१२ २ १ २ २
गायतःसुतसोमे अध्वरे। हुवेभा२३राम्। नाकारिणम्।

१ २ १
इडा२३भा३४३। ओ२३४५इ। डा॥ १॥

४ ५ १ २ २ ५
II तारो। भाइर्वोविदा३१उवा२३। वा२३४सुम्।

१ २र १२२२ १२र १ २
इन्द्रा२ꣳसबाधऊतये२। बृहाद्गा१या२। ताःसुतसो२।

---

* 'कालेयस्यार्षम्'-इति वि०।

---

५ उत्तरार्चिकस्य १,१,१४,१=ऋग्वेदस्य ६,४,४७(३०)१ =ऊहेऽस्यामृचि द्वे सामनी प्र०७—द०१५।

I,II लौप्ते द्वे।

६२क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र १ २ १र २ १ र २ १
मेअध्वराइ। ऊवेभा२३राम्। नाकारिणम्। इडा२३
२
भा३४३। ओ२३४५इ। डा॥ २॥

५ र र ४ ५ २
III तरोभिर्वोविदद्वासुम्। इन्द्राम्। इन्द्रꣳस-
र १ २ र र
बाधा३ऊता१या२इ। वृहात्। वृहद्गायन्तःसुतसोमा३-
१ २ र र १
आध्वा१रा२इ। ऊवाइ। ऊवेभरन्नकारिणम्। इडा-
२ १
२३भा३४३। ओ२३४५इ। डा॥ ३॥

५ र र ५ २ १
IV तरोभिर्वाविदा४द्वासुम्। इन्द्रꣳसबा३। ध-
३ ५ २ १ २ १र र
उ२ता२३४याइ। वृहात्। वृहा३१उ। वा२। गायन्तः
१ २र र १र २ १र २ १ र २
सुतसोमेअध्वरे। ऊवेहोइभा२२राम्। नाकारिणम्।
१ २ १
इडा२३भा३४३। ओ२३४५इ। डा॥ ४॥

---

III धानाकम्।

IV धानाकं चुम्नककालेयं वा।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



V तरो२भिर्वो। विदा५द्वसूम्। इद्र॑सवा२धाऊ१ताया३इ। ओ३४वा। ओ२३४वा। वृद्धायन्तःसुतसो३माऽध्वारा३इ। आ३४वा। ओ२३४वा। ऊवाइभराम्। नाकारा२३४इणाम्। ओ२३४वा। ओ२३४५रइ। डा॥५॥

VI तरोभिर्वोर। विदद्वा२३४सुम्। इन्द्र॑सवा२धाऊ१ताया२इ। औ३हो३वा। औ३हो३वा। वृद्धायन्तःसुतसो३माऽध्वारा२इ। औ३हो३वा। औ३हो३वा। ऊवाइभा१रा२म्। औ३हो३वा। औ३हो३वा। नाकारिणम्। इडा२३भा३४३। ओ२३४५इ। डा॥६॥

VII तरोभा३इवाविदद्वसुम्। इन्द्रा॑सबा। धऊत-

---

V,VI,VII कालेयानि त्रीणि।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ र २ १ २ ४र ५र २
यार३इ। बृहद्गायाइ। तार३४:। सुतसोमेअ। ध्वा-

२ १ ३ २ २ ४ ४
३राइ। हुवाइभरौ। वा३४३ओ३४वा। नकाधूरिणाम्।

४
ह्वोपूइ। डा॥ ७॥५

हे ऋत्विजः! "वः" यूयं "तरोभिः" वेगवद्भिरश्वैरुपेतं वेगैरेव वा(१) "विदद्वसुं" वेदयद्वसुं धन-वेदकम् "इन्द्रं" "सबाधः" बाधा-सहिताः(२) "ऊतये" रक्षणाय "बृहत्" सामैतल्लक्षणकं "गायन्तः" सन्तः परिचरतेति शेषः। कुत्रेत्युच्यते? "सुतसोमे" अभिषुत-सोमके "अध्वरे" यज्ञे सोम-यागे। अहं च तदर्थं "हुवे" आह्वयामि। कमिव? "भरं न" भर्त्तारं कुटुम्ब-पोषकं "कारिणं" स्व-हित-करण-शीलं यथा, स्व-हित-करणायाह्वयन्ति पुत्रादयः, तद्वत्(३) तथाभूतमिन्द्रं हुवे इति॥ ५॥ ५

---

(१)—'तरोभिः आत्मीयैर्बलैः'-इति वि०। तरइति बल-नामसु पञ्चमम्।

(२)—'सबाधः मदीयाः ऋत्विजः'-इति वि०। सबाध इति ऋत्विङ्-नामसु सप्तमं पदम् नि०३,१८।

(३)—वि०-नये 'भरेकारिणमिति पाठः। किन्तु भरे-इत्यस्य सङ्ग्रामे इति, कारिणमित्यस्य सङ्ग्राम-कारिणं, प्रतियोद्धारमित्यर्थः। हुवे-इति उत्तम-पुरुषैकवचनञ्च प्रथम-पुरुषबहुवचनस्यार्थे। तथाचोक्तः—'यथा सङ्ग्रामे योद्धा प्रतियोद्धारं महता यत्नेन आह्वयति, तद्वदाह्वयन्तीत्यर्थः'-इति। भरे-इति निघण्टौ सङ्ग्राम-नामसु पञ्चमम् पदम्२,१७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी ।

वसिष्ठ ऋषिः ।

३ २ ३ १ २　३ १ २ १ २　३ २
तरणिरित्सिषासतिवाजंपुरन्ध्यायुजा ।
३ १ २　३ १ २　३ २ ३ १ र　२र　३ १ ०
आवइन्द्रम्पुरुहूतंनमेगिरानेमिन्तष्टेवसुद्रुवम्* ॥६॥ ६

५　२ १　४ ५　२र १ २ १　२
I तरणिरीत । सिषा३साती । वाजांपुराम् । धि-
र १　२ ४　५　२ १ २र १　२ र १
यायुजा । आवा३आइन्द्राम् । पुरूहूतम् । नमेगा-
२　४ ५　२र १　१ १ १ १
इरा । नाइमीइन्ताष्टे । वासुद्रुवा२३४५म् ॥ ८ ॥

३ ५　२　१ २　१
II तराहाउ । णिरित्सी३षासति । हयाइ । २ । वा-
२　१ २र　र　२　१र　र र
जम्पुरम् । धियायुजौ । होवा३हाइ । आवइन्द्रंपुरुहू-

* "सुद्रम्"-इति ऋक्पाठः ।

६ उत्तरार्चिकस्य २,२,१३,१=ऋग्वेदस्य ५,३,२०,५= ऊहे द्वितीये ऊनविंशतितममेकमिह गानम् ।

I,II ऐशिरे द्वे ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २र र २ र
तम्। नमाइगाइरी। होवा३हाइ। नेमिन्तष्टेवा३
१ २ र र २ ५ र र २ ३ ५
सा। औ३होवाहा३४औहोवा। उप्। इ२३४वाम्॥९॥

४ २ ४ ३ ४ ५ र २ ४ र ५ ४ ५ र ४
III तरणिरित्सिषा। सा३ती। वाजम्पुरन्ध्यायुजा।
१र र र २ र २ ४ ५ र
वाजम्पुरन्ध्यायुजा। वआ२३इन्द्रा३४म्। पुरुहूतन्नमे।
२ २ र १ २ १ २ १ २
गा३इरा। नेमाइन्ता२२३ष्टे। वसुद्रुवम्। इडा२३भा-
१
३४३। ओ२३४५इ। डा॥१०॥

४ २ ४ ३ ५ १ र ३ २ १ ५ र
IV तरणिरित्सिषा। सती३। वा२३४। जम्पुरन्धिया।
४ ५ १र र र र १
युजा। वाजम्पुरन्ध्यायुजावइन्द्रम्पुरुहूतन्नमा २इगाइरा २।
१ २र१ र २ १ ५ ४
हा २ऊऊवाइ। नेमिन्तष्टेवसोवा३ओ२३४वा। इ५वोई
५
हाइ॥११॥६

"तरणिरित्"(१) युद्धादौ कर्मणि त्वरित एव पुमान् "पुर-

III, IV गौरुष्टङ्गे द्वे।

(१)—तरणिरिति चिप्र-नामसु पञ्चविंशतितमम् नि०२,१५। इत् एवार्थः। वि०-मतेतु इत् पादपूरणे।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

मेधातिथि ऋषिः।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २

पिबासुतस्यरसिनोमत्स्वानइन्द्रगोमतः।

३ १ २ ३ १ २ ३ २ऽ १ २ ३ १ २

आपिर्नो बोधिसधमाद्येवृधे३स्मां२अवन्तुतेधियः ॥७॥७

५ ४ २ ३ ४ ५ १ र र १

I पिबाइसुतस्यरसिनाः। मत्स्वानइन्द्रगोमता२३होइ

न्या" महत्या धिया(१) "युजा" सहाय-भूतया "वाजम्" अन्नं "सिषासति" सम्भजते। "पुरुहुतं" बहुभि राहुतम् "इन्द्र" "गिरा" स्तुत्या हे यजमानाः! "वः" युष्मदर्थम् "आ नमे" तम-भिमुखं कुर्वे। तत्र दृष्टान्तः-"नेमिं" चक्रस्य वलयं "सुद्रुवं" शोभन-दारु "तष्टेव" यथा वर्द्धकिः दारु-नेमि मानमयते तद्वदित्यर्थः ॥ ६ ॥ ६

---

७ उत्तरार्चिकस्य ६,२,१६,१ = ऋग्वेदस्य ५,७,२५,१ = अस्मात्सृचारण्यके प्रथमे त्रीणि सामानि९—१०—१५ = ऊहे च पञ्च अ०८—त्र०१५—१६—षो०द्वि०१२—अष्टा०द्वि०१६।

I पृष्ठम्।

(१)—'पुरन्ध्या पलया'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र १ र र र र १ २ १र
या। आपिर्नोबोधिसधमाद्येवृधा२३द्दोइया। अस्मा९-

१ २ १
आ२३वा। तुताइधा२३या३४३ः। ओ२३४५इ। डा॥१२॥

५ र र १ र २ १र २
II पिबासुतस्यरसिनोहाउ। मत्स्वानइन्द्रगोमा२तः।

२ २ ५ २र १ र र र २ १र २र २ २
हाओ२३४वा। आपिर्नोबोधिसधमाद्यिवेवा२इ। हाओ-

५ २ १र २ १र २ २ २ ५ २ १
२३४वा। अस्मा९अवन्तुतेधा२यः। हाओ२३४वा। इ२

१ १ १
३४५॥ १३॥

५ र र र १
III पिबासुतस्यरसिनोमत्स्वाहाउ। ना२ः। इन्द्रा२-

१र २ र १ २र र १ ०
गोमता२३ः। हाउ। आपिर्नो२बो। धिसाधमा२।

१ र २ १ ० २ २ २
दियेवृधा२३। हाउ। अस्मा९अवा२३। हा। तुते-

१ २ ५र र २ ३ १ १ १ १
३हो२। था२३४औहोवा। धियजू२३४५॥ १४॥ ७

हे "इन्द्र"! "रसिनः" रसवतः "गोमतः" गो-विकारैः पयः-

---

II शौल्कम्। III जमदग्नेः, अभीवर्त्तः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी

भर्ग ऋषिः ।

२उ　२ १ २　३ २उ　३ १ २

त्वꣳह्येहिचेरवेविदाभगंवसुत्तये ।

१ २　२ १ २ १ २ ३ ३ २ ३ १ २

उद्वावृषस्वमघवनाविष्टयउदिन्द्राश्वमिष्टये ॥ ८॥ ८

प्रभृतिभिः अपण-द्रव्यैर्युक्तस्य(१) "नः" अस्मदीयस्य "सुतस्य" अभिषुतस्य (क्रिया-ग्रहणं कर्त्तव्य मिति कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी) ईदृशं सोमं(२) "पिब"(३) पीत्वा च "मत्स्व" मत्तो भव अपि च "सधमाद्ये" सह माद्यन्ति देवा अत्रेति सधमाद्यो यज्ञः तस्मिन् सहमादयितव्ये यज्ञे त्वम् "आपिः" आपयिता(४) "बन्धुः सन् "नः" अस्माकं "वृधे" वर्द्धनाय "बोधि" बोध्यस्व। "ते" त्वदीयाः "धियः" बुद्धयः अनुग्रहात्मिकाः अस्मान् स्तोतृन् "अवन्तु" रक्षन्तु ॥

"सधमाद्ये"-"सधमाद्यः"-इति च पाठौ ॥ ७ ॥ ७

---

८ उत्तरार्चिकस्य७,३,४,१ = ऋग्वेदस्य ६,४,३ (१९),२ = ऊहे ए० १६—हावि० १८=ऊह्य प० १८।

(१)—'गोशब्देनाव * * * उदकान्युच्यन्ते, तद्वतः तैर्मिश्रितस्येत्यर्थः'-इति वि०।

(२)—'सुतस्याभिषुतस्य सोमस्य, षष्ठी-निर्देशात् एकदेशमिति वाक्यशेषः'-इति वि०।

(३)—ऋचि पिबा इति दीर्घान्तःपाठः "द्व्यचोऽतस्तिङः (६,३,१३५)"-इति दीर्घः।

(४)—'आपिः व्याप्तः'-इति वि०। आपानः-इति व्याप्ति-कर्मसु षष्ठम् नि०२,१८।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४ २ ४र ५र २ १र १
I तुवा३ँहो३एहिचेरवाइ। विदाभगंवसू२त्ताया-
५ र ४ ५ २र १ १
२३४इ। उद्वावृषस्वमघावान्। ऐहोइ। गा२विष्टयाइ।
र २ १ ५ ४ ५
उदिन्द्राश्वमीवा३ओ२३४वा। ह्याप्र्योईहाइ॥ १५॥

५ र र ५ २ १र २
II त्वँह्येहिचेराइवाइ। विदाभगेवसूत्ता१या२३४इ।
५र ४ ४ १ २ १ २ १
उद्वावृषस्व। माप्र्घवान्। आइहियाइ। गविष्टाया२-
१ १ २ ३ ५ ४
इ। उदिन्द्रा२अश्वमी। ओ३१म्। ओ२३४वा। ह्याप्र्यो
५
ईहाइ॥ १६॥ ८

हे "इन्द्र"! "त्वं हि" त्वं खलु सामर्थ्याद्दातेति गम्यते। अत "एहि" आगच्छ। आगत्यच "चेरवे" क्रमपराचारवते(१) मह्यं "भगं" भजनीयं धनं विदाः लभस्व दत्स्व। किमर्थम्? "वसुत्तये" अस्माकं वसुदानाय। हे "मघवन्" धनवन्निन्द्र! "गविष्टये"(२) गाइच्छते मह्यम् "उद्वावृषस्व" आसिञ्चस्व(३)

---

I,II कौल्मलबर्हिषे द्वे।

(१)—'चेरुः चेतयिता, तस्मादियं तादर्थ्ये चतुर्थी, चेरवे ज्ञातुर्मम'-इति वि०।

(२)—इषु इच्छायामित्यस्येदं रूपम्।

(३)—वृषु सृषु वृषु सेचने-इत्यस्येदं रूपम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

वसिष्ठः परोक्षेण ब्रूते(१)।

१र २र ३२ ३१र ०र ३ १२
नहि वश्चरमं चन वसिष्ठः परिमंसते।
३ १ र ३ २ १ २ ३ २उ ३ १२ ३ १२
अस्माकमद्य मरुतः सुते सचा विश्वे पिबन्तु कामिनः॥ ९॥९

५ २ ४ ५४ ५ २१ १
I नहिवा३श्चार्मच्चना। हुवेहो२इ। वसिष्ठःपरा-
० १र ३२ ३
इमंसाता२इ। अस्माकमद्यमरुतार:। सुताइसा२३४
५ १ २ १ २ १ २१ १ ३
चा। वाइश्वे३होइ। पिबा३हो। तुवार३। मा२इना
५र र २ १ १११
२३४औहोवा। जनित्रा२३४५म्॥ १७॥

२ ४५ ३२ ४ ५ १
II नहिवश्चरमम्। चना३। वसिष्ठाः। होइ।
० ३र ४ ३४ ५ ३१
होइ। पराइमंसाता२३४इ। अस्माकमद्यमरुतः। सुता

गामितिशेषः। तथा हे इन्द्र! "अश्वमिष्टये" अश्वैषणवतेमह्यम् अश्वान् "उद्गावृषस्व" आसिञ्चस्व(४) देहीत्यर्थः॥ ८॥ ८

---

९ ऋग्वेदस्य ५,४,२९,३।

I,II वसिष्ठस्य, जनित्रे द्वे।

(४)—उदिति उपसर्गाभ्यासात् वाहृषस्वेति क्रियाभ्यासः।

(१)—'वसिष्ठनामाचन्हषिः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

प्रगाथः काण्वऋषिः।

१ २३ १र २र ३ १ २ ३ १ २
माचिदन्यद्विशꣳसतसखायोमारिषण्यत।
२ ३ १ २ ३ १ २ ३ १ २ ३१र २र ३ १ २
इन्द्रमित्स्तोतावृषणꣳसचासुतेमुहुरुक्थाचशꣳसत॥१०॥१०

इति पञ्चम-दशति॥*

४ ५ १ २र ५ २ २ १ २
३इसाचा। बाइश्वेपिबन्तुकौ३। हो३१यै३। मा२इना-
५र र २ १११ ११
२३४औहोवा। जनो३त्रा२३४५म्॥१८॥९

हे "मरुतः"! "वसिष्ठः" एतन्नामा ऋषिः "वः" युष्माकं मध्ये "चरमं चन" जघन्यमपि "न हि परिमंसते"(१) वर्जयित्वा न स्तौति किन्तु सर्वानेव युष्मान् स्तौतीत्यर्थः। "अद्य" अस्मिन् दिने "अस्माकम्" अस्मदीये "सुते" सोमे अभिषुते सति मरुतः "कामिनः" सोमं कामयमानाः(२) "विश्वे" सर्वे "स'चा' सङ्गत्य "पिबन्तु" पानं कुर्वन्तु॥

"पिबन्तु"-"पिबन्त"-इति च पाठौ॥८॥९

---

१० उत्तरार्चिकस्य ६,१,५,१=ऋग्वेदस्य ५,७,१०,१= ऊहे ष०१५।

(१)—'प्रथमपुरुषैकवचनमुत्तमपुरुषस्यैकवचनार्थे'-इति वि०।
(२)—'कामवन्तः श्रद्धावन्तो भूत्वा पिबन्तु इत्यर्थः'-इति वि०।

---

*॥ इति तृतीयस्य प्रथमार्द्धः॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र　४ ५　३ २　४ ५　१ र
I माचिदन्यदोहाइ। विशा२९साता। सखाया२हो
२ २　१ २　१ २　१
१इ। माश्रौ२हो। राइषाउवा। ण्याताउवा। इन्द्र-
र र　२ २　१ २　१ २
मित्स्तोतावृषणा औ२हो। साचाउवा। सूताउवा।
२ २　१　२र १　१र　५
मुहुरुक्था औ२हो। चशा। औहो। वाहो२३४वा।
४　५
सा५तोइहाइ॥ १८ ॥१०

हे "सखायः" समानख्यानाः स्तोतारः(१)! इन्द्र-स्तोत्राद् "अन्यत्" स्तोत्रं "मा चिद्विशंसत" मैवोच्चारयत। "मा रिषण्यत" मा हिंसितारो भवत। अन्यदीय-स्तोत्रोच्चारणेन वृथोपक्षीणा मा भवत। "सुते" अभिषुते सोमे "वृषणं" कामानां वर्षितारम् "इन्द्रमित्" इन्द्रमेव हे प्रस्तोत्रादयः! "सचा" सह सङ्घीभूय "स्तोत" स्तुत। "उक्था च" उक्थानि शस्त्राणि चेन्द्र-विषयाणि यूयं "मुहुः" पुनः पुनः "शंसत" उच्चारयत॥ १० ॥ १०

इति श्रीसायणाचार्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने द्वितीयाध्यायस्य प्रथमः खण्डः॥

---

I मैधातिथं, दैवातिथं वा।

(१)—'प्रगाथ स्वामीवान् ऋत्विज स्वाह ० ० ० हे सखायः ऋत्विजः'! —इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीय खण्डे—

सैषा प्रथमा।

आङ्गिरसः पुरुहन्मा ऋषिः।

१ ३ १२ २२ २ २ ३ १ २ ३ १ २
नकिष्टं कर्मणानशद्यश्चकारसदावृधम्।

३ २३ २ ३ १ २ ३ १ २ ३ १ २ ३ १२ २२
इन्द्रं नयज्ञैर्विश्वगूर्त्तमृभ्वसमधृष्टं धृष्णुमोजसा ॥१॥११

५ २ ४ ५ ४२ ५ १ १ २२ १ २ २२ २
I नकिष्टा३ं कर्मणानशात्। यश्चाकारा। सदावृ-
१ १२२ २ १ २ १ २२ २ २ ०
धा२३म्। सदावृधाम्। इन्द्रान्नया। ज्ञैर्विश्वग। त-
१२ १ २ ३ २ १ २ १ २ ३२
मार्ऋभ्वसा२३म्। तमृभ्वसाम्। अधार्ष्णन्धा। ष्णुमो
२ २ ३२ २ १
जसा२३। ष्णुमोजसा२४३। ओ२३४५इ। डा॥२०॥

३ ४ ३ ४ ५२ १ ५ २ ४
II नक्रिष्टंकर्म्मणानशत्। हो३४इ। यश्चका३रा-

---

११ उत्तरार्चिकस्य ४,२,८,१ = ऋग्वेदस्य ६,५,८,३ = ऊहे च०९।

I वैखानसम्।

I पौरुहन्मनम् प्राकर्षं वा।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४र ५  १  १  १र र ७
सदावृधाम्। आइन्द्रा२न्नाया२। इवैश्वगूर्त्तामृभ्वासा-

१  २  ४र ४ ५  २
२म्। अधा२हो१। ष्णा२३ध३४। हाओवा*। ष्णु-

१र २ १ १ १ १
मोजसा२३४५॥ २१॥ ११

"तं" यजमानं "कर्म्मणा" हननादि-व्यापारेण(१) "नकिर्न-शत्" नैव(२) व्याप्नोति(३)। यः "इन्द्रं" "चकार" इन्द्रमेवानु-कूलं "यज्ञैः" साधनैः कृतवान्। कीदृशमिन्द्रम्? "सदावृधम्" "सर्वदा वर्द्धकं। "विश्वगूर्त्तं" सर्वैः स्तुत्यम्(४)। "ऋभ्वस" महान्तम्(५) "ओजसा" बलेन "अधृष्टं" अन्यै र्धर्षितु मशक्यम्। "धृष्णु" शत्रूणां धर्षकम्॥

"धृष्णुमोजसा"-"धृष्णवोजसम्"-इति च पाठौ॥१॥ ११

---

(१)—'रत्यात्मकेन' इति वि०।

(२)—'न कश्चिद्रक्षः पिशाचादिः'-इति वि०।

(३)—'शुद्धोऽप्ययं नशिर्वि-पूर्वो द्रष्टव्यः अन्तर्णीत-ण्यर्थश्च, विनाशयतीत्यर्थः' इति वि०। 'नशत्'-इति व्याप्ति-कर्मसु अष्टमम् पदञ्च २,१८।

(४)—'सर्वशत्रूणां वधाय आहतम्' इति वि०।

(५)—ऋभ्वाः'-इति महन्नामसु दशमं पदम् नि० ३, ३।

---

४र ४
* "हाओ३वा"-इति सा०पाठः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

मेधातिथि मैध्यातिथि रस्याः(१) परस्याश्च ऋषी।

३ १ २ ३ १ २ ३ २ ३ १ २ ३ ११ २
यश्चते चिदभिश्रिषःपुराजत्रुभ्य आतृदः।

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
सन्धातासन्धिंमघवापुरूवसुर्निष्कर्त्ता*विह्रुतंपुनः ॥२॥ १२

५ २ ४ ५ ४ ५ १ १ र
I यश्चतार३इचिदभिश्रिषाः। पुरा२जात्रू२। भ्यश्चा-

१ २ १ २ २ १ १ १ २१
तृदा३ः। होवा३हाइ। सान्धा२तासा२म्। धाइंमघ-

ऽर र १ २ १ २ २ १ १ १ २
वा२पुरूवसुः। होवा३हाइ। नाइष्का२र्त्तावी२ह्रुतंपुनः।

१ २ ५र र २ ५
हो। वा२। हा२३४। औहोवा। ऊ२३४पा॥ २२॥ १२

"यः" इन्द्रः "अभिश्रिषः" अभिश्लिषः अभिश्लेषणात् सन्धान-

---

* "इष्कर्त्ता"-इति ऋक्पाठः।

---

१२ ऋग्वेदस्य ५,७,१२,२।

I साम्यम्।

(१)—प्रगाथस्यार्षम्। अग्रस्य महावीरस्याभिमर्शन मनया ऋचा क्रियते'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया(१)।

१ २ ३ २ ३ २ ३ २ ३ १र २र ३ १ २
आत्वासहस्रमाशतंयुक्तारथेहिरण्यये ।
३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
ब्रह्मयुजोहरयइन्द्रकेशिनोवहन्तुसोमपीतये ॥ ३ ॥ १३

५र र २ १ २ १ र २र
I आत्वासहा । स्रमाशा१ता२म् । युक्तारथेहि-
र १ २ १ २ १ २
रण्यये । ब्रह्मायु१जा२ः । हारयइ । द्रकाइशा१इना२ः।
१ २ १ २ ५र र २ ५
वहान्तू१सो२३ । मा२पा२३४औहोवा । ता२३४ये ॥ २३॥

इत्यात् "ऋते चित्" विनापि(२) "जत्रुभ्यो ग्रीवाभ्यः सकाशात्
"आतृदः" आतर्दनात् आरुधिरनिस्रवणात् "पुरा" पूर्वमेव
"सन्धि" सन्धातव्यं तं "सन्धाता" संयोजयिता भवति । "मघवा"
धनवान् "पुरूवसुः" बहु-धनः स इन्द्रः "विह्रुतं" विच्छिन्नं तं
"पुनः" "निष्कर्ता" संस्कर्ता भवति(३) ॥ २ ॥१२

---

(१)—अत्रापि 'प्रगाथस्यार्षम्'-इति वि० ।

१३ उत्तरार्चिकस्य ६,२,५,१ = ऋग्वेदस्य ५,७,१४,४ =
आरण्यके प्रथमे द्वाविंशतितम्=ऊहे स०१५—अष्टां द्वि०१२
—तयोवि०ल०३ ।

I भारद्वाजम् ।

(२)—'ऋते यज्ञं, चिदिति पद-पूरणः'-इति वि० ।

(३)—साकाङ्क्षात् तं वयं सुमइति वाक्यशेषः ।

६४क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र र र र ५ २ १ २ २र
II औहोआत्वासहा६ए। स्रमाशा१ता२३४म्। हा-
२ १ र२र र १ २ ३र २
होइ। युक्तारथेहिरण्यये। ब्रह्मायू१जा२३४ः। हाहो
१ २ १ २ ३र२ १
इ। हारयइ। इन्द्राइशा१इना२३४ः। हाहोइ। वहा-
२ ३र २ ३ २ १ ५
न्तू१सो२३४। हाहो। मपो३। ता२३४याइ। उडु-
५
वा६हाउवा ॥ २४ ॥

४र ३र ४ ५ ४र ५ ४ २ १र २ १ २
III आत्वासहस्रमाशतमा। युक्तारथेहिरण्यये। ब्र-
१ र २ १ १ २
ह्मयुजोहरयइन्द्रकेहो२इ। शाइना२३ः। हाउवा।
१ २ ३र २ १ ३ २ १ ५
वहन्तुसोमपीहो३। ऊम्मा२। तया३इ। ओ२३४वा।
२ ११११
उ२३४५ ॥ २५ ॥

२र ४र ३ ४ ५र ३ २ ३र ४र ५ २ २ १
IV आत्वासहस्रमा। शताम्। आत्वासहा। स्रमा-
२ १ ३ ५ १र २र र
शतम्। आ१२इहिया२३४हाइ। यूक्तारथेहिरण्यये।

---

II भारद्वाजम्, कण्वबृहद् वा।

I,II,IV भारद्वाजे द्वे।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २　　１ ２ ५　　१ २
भ्रह्मायू१जा२३ः । आ२इहिया२३४साइ । हारयइ ।

१ २　　१ ३ ५ १ २
इकाइशा१इना२३ः । आ१२इहिया२३४हाइ । वहान्तू१सो-

१ २ ५ २१र २ १
२३ । आ१२इहिया२३४हाइ । मपीता२३या३४३इ । ओ-

२३४५इ । डा ॥ २६ ॥ १३

हे "इन्द्र" ! "त्वा" त्वां "सहस्रं" सहस्र-सङ्ख्याका हरय स्त्वदीया अश्वाः "आ वहन्तु" आ नयन्तु अस्मद्यज्ञम् । तथा "शतं" शत-सङ्ख्याकाश्च भवदीया अश्वा स्त्वा मावहन्तु। (यद्यपि द्वावेव हरी(२) तथापि तद्विभूतयोऽन्येपि बहवोऽश्वाः वहति। ननु युगपदनेकैरश्वैः कथं यातुं शक्यते? इत्यत आह—— "युक्ताः" इति ) "हिरण्यये" हिरण्मये स्वर्ण-विकारे (हिरण्य-शब्दाद्विकारार्थे विहितस्य मयटः "ऋत्व्य वास्त्व्य त्यादौ मलोपो निपात्यते(३) तादृशे) "रथे" "युक्ताः" सम्बद्धाः (बहूना मश्वानां शीघ्रगमनाय रथे नियुक्तत्वात् युगपदेव सर्वै रश्वैर्गन्तुं शक्यत

(२)—'हरी इन्द्रस्य'-इति निघन्तु-शासनात् ( १, १५, १ )।

(३)—"ऋत्व्य वास्त्व्य-वास्त्व्य-हिरण्ययानि छन्दसि (६, ४, १७५) ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

विश्वामित्रो यथार्थ(१) मिन्द्र माह्वयति ।

२ ३ १ २ ३ १ २ ३ ३ ३ १ २
आमन्द्रै रिन्द्रहरिभीर्य्याहिमयूररोमभिः ।

३ २ ३ १ २ ३ ३ ३ २ ३ २ ३ १ २ ३ १ २
मात्वाकेचिन्नियेमुरिन्नपाशिनोतिधन्वेवता ऽइहि॥४॥१४

इति भावः) कीदृशा हरयः ? "ब्रह्मयुजः" ब्रह्मणा परिवृढ़ेनेन्द्रेण युक्ताः (यद्वा। ब्रह्मणास्मदीयेन स्तोत्रेण अस्माभिर्दत्तेन हविषा वा युक्ताः(४) "केशिनः" केशाः ग्रीवाया उपरि वर्त्तमानाः सटाः तैर्युक्ताः। किमर्थमिन्द्रस्यावहनम्? तत्राह-"सोमपीतये"(५) सोम-पानाय। यथास्मदीयं सोमं पिबेत् तथा आवहन्त्वित्यर्थः॥ ३ ॥१३

---

(१)—अस्याऋचो ऽर्थमनतिक्रम्य, ऋगर्थानुरूपमित्यर्थः ।

१४ उत्तरार्च्चिकस्य ८,३,३,१ = ऋग्वेदस्य ३,३,९,१ = जहे अष्टा० द्वि०१९—एकवि०५ ।

(४)—ब्रह्म अन्नं, तेन निमित्त-भूतेन ये युज्यन्ते, ब्रह्मयुजः ; हविर्लक्षणस्यान्नस्य भक्षणाय गन्तुं ये रथे नियुज्यन्ते । अथवा त्रैविध्यलक्षणं ब्रह्म, तेन निमित्त-भूतेन ये युज्यन्ते, ते ब्रह्मयुजः। अथवा ब्रह्मणा प्रजापतिना अनुज्ञातस्येन्द्रस्य ये युज्यन्ते ते ब्रह्मयुजः'-इति वि० ।

(५)—"भ-त्री-रेत्यादिना क्तिनि रूपम् पीतिरिति ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र र २ र र १ २
I आमन्द्रैरा। द्रहरिभाइर्याहिमयूरा३रोमाभा३इः।
४ ५ ४ ५ २ ३ ५ २र १ २
माल्वाकाइचीत्। नियेमू२३४रीत्। नपाशिनाः। अति-
१ २ १ २ ५र र ३
धान्वे२। वता९२३। आ२इहा२३४औहोवा। वा२३-
५
४याः ॥ २७ ॥

४र ५ ४र ५ ४ ४ २र १ ११र
II आमन्द्रैरिन्द्र। हापुरिभाइः। याहिमयूररोम-
र र २ १ र२ १र
भाइः। माल्वाकार३इचोत्। नाइयेमुरित्। नपाशार३-
२ १ २ १ १ ३ ५र
इनाः। अताइधार३न्वे। वता९२३। आ२इहा२३४औ
र २ १ ११११
होवा। बयो३भोर३४पुः ॥ २८ ॥

४र ५ ४र ५ ४ ५ २र १ २१र
III आमन्द्रैरिन्द्र। हापुरिभोः। याहिमयूररोमभा-
१ १र र २१र
उ। वा२। माल्वा२। केचिन्नियेमुरिन्नपाशिनाओ।
१ १ र २ ५
वा२। आती२। धन्वेवता३१ओवा२३। ई२३४ही ॥ २९ ॥

---

I,II,III अग्नेः, सामानि त्रीणि।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

गौतम ऋषिः।

३१२ २२ ३१ २ ३१२

त्वमङ्गप्रशꣳसिषोदेवः शविष्ठमर्त्यम्।

२उ ३ १ २ ३ २ ३ १२ ३१२

नत्वदन्योमघवन्नस्तिमर्डितेन्द्रब्रवीमितेवचः ॥ ५ ॥ १५

हे "इन्द्र"! "मन्द्रैः" मादयितृभिः(२) "मयूररोमभिः" मयूर-रोम-सदृश-रोम-युक्तैः "हरिभिः" अश्वैरुपेतस्त्वम् "आ-याहि" यज्ञं प्रत्यागच्छ। केचिदपि जनाः "त्वं" त्वां "मा नियेमुः" मा नियच्छन्तु(३)। गमन-प्रतिबन्धं मा कुर्वन्तु-इत्यभिप्रायः। तत्र दृष्टान्तः—"पाशिनो न" पाशिनः इव, यथा पाश-हस्ता व्याधाः पक्षिणं न यच्छन्ति तद्वन्मा नियच्छन्तु। किञ्च। "धन्वेव"(४) यथा पान्थाः धन्वं मरुदेशं शीघ्रमतिगच्छन्ति तद्वद्गमन-प्रतिबन्धकारिणस्तानतीत्य(५) शीघ्रम् "एहि" आगच्छ॥ ४ ॥ १४

---

१५ उत्तरार्च्चिकस्य ८,३,५,१=ऋग्वेदस्य २,२,९,१—अहे अष्टा० द्वि०१९—एकवि०५।

(२)—मन्द्रस्वरैः गभीरस्वरैः'-इति वि०।

(३)—यमिरत्र बन्धनार्थः।

(४)—धन्वेव, इव शब्दः उपमार्थस्यासम्भवात् पदपूरणः; धन्वेत्यत्र च तृतीयायाः लुग् द्रष्टव्यः; धन्वना अन्तरीक्षेण, अथवा धन्वना धनुषा अस्त्रैर्विजित्य तान्,-इत्यादि वि०।

(५)—अतीत्ययमुपसर्गः। उपसर्गाश्च पुनरेवमात्मकाः—यत्र क्रियावाची कश्चिच्छब्दः तत्र विशेषमाहुः; यत्र न प्रयुज्यते, तत्र स-साधनां क्रियामाहुः। न चात्र क्रियावाची कश्चिच्छब्दः प्रयुज्यते, अतउपसर्गएव क्रियां ब्रवीति अतोऽतीत्यस्यैवातीत्येत्यर्थो बोध्यः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४　४ ५ ४　५　१　१ २ २
I त्वमा३॰गाप्रश॒ꣳसिषाः। दाइवा२ः। शविष्ठमा३।

४ ५　२ १ र　१　२ २ ४ ५
तायाम्*। नत्वदन्योमघवार३नार। स्तिमा३र्डाइता।

१　२　१　२ २　१　५　४　५
आइन्द्रब्र। वा। औ३द्वो। मितौ२३४वा। वा५चो६ हा-

इ॥ ३०॥ १५

(अङ्गेत्यभिमुखीकरणे[१]) "अङ्ग" "शविष्ठ"! हे बलवत्तम! इन्द्र! "देवः" द्योतमानस्त्वं "मर्त्य" मरण-धर्माणं त्वां स्तुवन्तं पुरुषं "प्रशंसिषः" सम्यगनेन स्तुतमिति प्रशंस[२])। हे "मघवन्" धनवन् "इन्द्र"! "त्वदन्यः" त्वत्तोऽन्यः कश्चित् "मर्डिता" सुखयिता नास्ति। अतः कारणात् तुभ्य मिदं स्तुति-लक्षणं "वचो" "ब्रवीमि" उच्चारयामि॥ ५॥ १५

---

* 'ता३याम्'-इति सा॰पाठः।

---

I गुङ्गोः साम, गौङ्गवं वा।

(१)—सम्बोधने इति यावत्। 'अङ्ग क्षिप्रम्'-इति वि॰।

(२)—'प्रशस्तं करोषि'—इति वि॰।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

नृमेध-पुरुमेधावृषी(१)।

१ २ ३ १ २ ३ १र २र२ १ २

त्वमिन्द्रयशाअस्यृजीषीशवसस्पतिः।

३ १ २ २र७ ३ २ ३ १ २ ३ १ २

त्वंवृत्राणिहꣳस्यप्रतिन्येकइत्पुर्वनुत्तश्चर्षणीधृतिः*॥६॥ १६

४ ५ ४ २ १र २ र १र २

I त्वमिन्द्रा। यशाः। असाइ। औजीषीशवसः।

१ २ र २ ३ २ १र १

पताइः। त्वंवृत्राणी३हꣳसिया। प्रतीनाए२। कइत्पूरू-

१ १ १ २ ५र र ३

२। अनूरहो१। तश्च। षा२णा२३४औहोवा। धार-

५

३४र्त्ताः॥ ३१॥

---

* "एकइदनुत्ताचर्षनीधृता"-इति ऋक्पाठः।

---

१६ उत्तरार्च्चिकस्य ६,२,१२,१ = ऋग्वेदस्य ६,६,१३,५=ऊहे स०द्वि०१८—षो०द्वि०७—अष्टा०द्वि०१४=ऊह्य ट०१८।

I इन्द्रस्य, यशःसाम।

(१)—पुरुमेधस आर्षम् इत्येव विवरणे दृश्यते।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २ ४ ५ ४ ५ २ १ २र १ ३ २
I त्वमा३इन्द्रायशा३असाइ । ऋजा३इषीश्रा२ । वसा-
३ ५ १ र २ १र र२१२ १
३४५ः । पा२३४तीः । त्वंवृत्राणिह९ंस्यप्रतीन्येकइत्पु । हु ।
२ ३ ५ १ २ ३ ५ ४
आना३ओ२३४वा । तास्वा३ओ२३४वा । षणा५इधृतीः ।
४
ह्वो५इ । डा ॥ ३२ ॥

५र २ ३ ५ ५ २
II हाउत्वमिन्द्रा । याश्शा३आ२३४सोई । हाउऋ-
२ ५ २ ३ ५ ५ २१
जाइषी२३४श्रा । वासस्पा२३४तीइः । हाउ । त्वंवृत्रा ।
२र १ ५ २ ३ ५ २१ ५
णीह९ंसिया । हाउ । प्रतीना२३४ए । कइत्पू२३४हुइ ।
५ २१ ६ ५ १ २ ५र र
हाउ । अनुत्ता२३४आइ । हाउ । षा२णा२३४औहो
३ ५
वा । धा२३१त्तीः ॥ ३३ ॥

हे "इन्द्र" ! "शवसस्पतिः"(१) बलस्य पालयिता "ऋजीषी"

I इन्द्रस्य ; यशःसाम ; साभ्रं वा ।

II इन्द्रस्य ; यशःसाम, समीचीनं वा ।

(१)—"षष्ठ्याः पतिपुत्रपारस्पोषेषु (८,३,५३)"-इति षष्ठ्या अलुक् ।




CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र २ १र २ १ २ ५ऽ
III हाउत्वमिन्द्रा। यशा असि। होइ। होये३४। हा

ऽ ऽ २ र १र ५ १ २ १ २
उहाउहाउ। ऋजीषीशवसस्पतिः। होइ। होइ। होये

५ऽ ऽ ऽ १ र २ १र र २ १ २ १
३४। हाउहाउहाउ। त्वंवृत्राणिहꣳस्यप्रतीन्येकइत्पुरु।

२ ५ऽ ऽ ऽ १ २
होइ। होइ होये३४। हाउहाउहाउ। अनुत्तश्चर्ष-

र १ २ १ २ ५ऽ ऽ ऽ
णीधृतिः। होइ। होइ। होये३४। हाउहाउहाउ-

१ २ ३ १ १ १ १
वा। सुवर्म्हार२३४५ः॥ ३४॥

५र २ १र २ १ २ १ १ १ १
IV होत्वमिन्द्रा। यशाअसि। होये३। हो२३४५।

ऋजीषी अपाजितोऽभिषुतः सोमः, तद्वान्(३) "त्वं" "यशः"(४) यशस्वी "असि" भवसि। कथमस्य यशस्वित्वम्? तदाह—"अप्रतीनि" बलिभिरप्यप्रतिगतानि(५) "पुरु" पुरूणि ("शे छन्दसि-

---

III इन्द्रस्य; यशःसाम, प्राचीनं वा।

IV यौक्तस्रचम्।

(३)—'यत् सोमस्य पूयमानस्यातिरिच्यते, तत् ऋजीषम्; तेन तद्वान्। कथं पुनरसौ तेन तद्वान्? उच्यते शवसस्पतिः'-इति वि०।

(४)—अन्तर्णीत मत्वर्थश्चेन्द्रष्टव्यम्।

(५)—प्रतिबन्धं कर्त्तुं न शक्नुवन्तीत्यर्थः।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

एतदादीनां तिसृणां मेध्यातिथि ऋषिः* ।

२ ३ २ ३१२ ३१ २ ३क२र ३ २
इन्द्रमिद्देवतातयइन्द्रं प्रयत्यध्वरे।

२ र १र २ १ २ १ २ ११११ १ र
ऋजीषीशवसस्पतिः। होये३। हो२३४५। त्वंवृत्राणि-
२ १र र २ ११ १ २ ११११ १ २
हऽस्यप्रतीन्यंकइत्पुरुह। होये३। हो२३४५। अनुत्त-
र १ २ १ २ १११५ ५ १
श्चर्षणीधृतिः। होये३। हो२३४वा४हाउवा। सुवम-
११११
या२३४५ः॥ ३५॥१६ *

बहुलम् (६,१,१०)"-इति श्रेर्लोपः) बहूनि "वृत्राणि" रक्षांसि(६) "अनुत्तः" न केनापि प्रेरितः(७) "चर्षणीधृतिः" चर्षणीनां यजमान-मनुष्याणां(८) धारकः "एक इत्" अ-सहाय एव त्वं "हंसि" सम् प्रहरसि अत एवास्य यशस्वित्वम्॥ ६ ॥१६

---

* मेधातिथिरिति वि०-पाठः।

---

(६)—'वृत्राणि शत्रुकुलानि, मेघवृन्दानि वा'-इति वि०। वृत्र इति मेघनामसु अष्टाविंशतितमम् नि०१,१०।

(७)—'अनुत्तः अखण्डितः'-इति वि०।

(८)—चर्षणयः-इति मनुष्यनामसु अष्टमं पदम् नि० २, ३।

---

*॥ इति ग्रामे गेय-गाने षष्ठः प्रपाठकः॥ ६ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
इन्द्रꣳसमीके वनिनोहवामहइन्द्रं धनस्य सातये ॥७॥१७

४ ५ ४ ५ २ ४ १ २ १
ओं। इन्द्रमिद्देवता। तयाइ। इन्द्रंप्रयतियध्वा२-

२ १ २ १२ २ २ १२ २
३राइ। आइन्द्रा२म्। समीकेवनिनोहवामा२३हाइ।

१ १ २ १ ५ ३ ५
आइन्द्रा२म्। धानस्यसो२३४वा। ता२३४ये ॥ १ ॥१७

"देवतातये" देवैः स्तोतृभिः तायते विस्तार्यते इति देवतातिर्यज्ञः(१) तदर्थम् "इन्द्रमित्" "देवेषु" मध्ये इन्द्र मेव "हवामहे" आह्वयामहे। "अध्वरे" यज्ञे "प्रयति" प्रगच्छति उपक्रान्ते सति इन्द्रं हवामहे। तथा "समीके सम्यग्जाते सम्पूर्णे च यागे "वनिनः" सम्भजमानाः(२) वयम् इन्द्रमेवाह्वयामहे [यद्वा। समीकमिति सङ्ग्राम नाम-(नि०२,१७,११)। समीके सङ्ग्रामे॥ ७॥ १७

---

१७ उत्तरार्चिकस्य७,३,८,१ = ऋग्वेदस्य ५,७,२५,५ = ऊहे एका०द्वि०१२—त्रयोवि०तृ०५ = ऊह्ये द्वि०१५।

I यातस्तुचम्।

(१)—देवताता-इति निघण्टौ यज्ञनामसु दशमम् पदम् ३,१०।

(२)—'वनम उदकं सोमलक्षणम्, तेन तद्वन्तः सोमवन्त इत्यर्थः' इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ अथाष्टमी ।

३ १ २ ३ १२ ३१ २८
इमाउत्वापुरूवसोगिरोवर्द्धन्तुयाममम ।

५ ४८ ५ र र र ४५ ४ ४ १ २
I इमाउत्वापुरूवसोगिरः । ए५ । गिराः । वार्द्धं
३ र २ १ २८२२३२ १ २ २ ऽ
तुयाममा२३ । पावकवर्णाः । शुचयोवी३पा । इ३म् ।
२ ३ ५ ११र र२ १
हम् । चा२३४इताः । अभिस्तोमैरनै२ । ऊवाइ ।
ऽ २ १ २ ४ ५ ४
हो३वा । षता । औ३होवा । हो५इ । डा ॥ २ ॥

५ र र र र १र २ १२
II इमाउत्वापुरूवसोहाउ । गिरोवर्द्धं । तूया१म-
२र २र १ २३ ५ २र १ २र १
मा२ । इहाहाहोइ । इहो२३४वा । पावकवर्णाःशु-
२ ३ र २र१ २३ ५ २ १
चयः । इहाहाहोइ । इहो२३४वा । विपश्चि । तो ।
र र २ र २र१ २३ ५ २१
अभिस्तोमैः । इहाहाहोइ । इहो२३४वा । अनू२३ ।
१ २ ५र र ३ ५
षा२ता२३४औहोवा । ऊ२३४पा ॥ ३ ॥

४ ३र ४ ५र र २ २ १ र५
III इमाउत्वापुरू । वसा३उ । गा२३४इ । रोव-

---

I,II,III वात्राणि त्रीणि, वासिष्ठानि वा ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १२३ १ २ ३२३ १र २र
पावकवर्णाः शुचयोविपश्चितोऽभिस्तोमैरनूषत ॥ ८॥१८

४र ५ २र १ २र १ २र १
र्द्धन्तुयाः। ममा। पावकवर्णाः शुचयोविपश्चि। ता।

२ १ १ २ २ १र र२ १
औ३हो। आऔ३हो। अभिस्तोमैरनौ२। ऊवाइ।

ऽ २ १ २ ४५ ४
हो३वा। षता। औ३होवा। हो५इ। डा॥४॥ १८

हे "पुरूवसो" बहुधनेन्द्र! "मम" मदीयाः "इमाः" "गिरः" शस्त्र-रूपा वाचः(१) "त्वा" त्वां "वर्द्धन्तु" बर्द्धयन्तु। तथा "पावकवर्णाः" अग्नि-समान-तेजस्काः अतएव "शुचयः" शुद्धाः "विपश्चितो" विद्वांसः उद्गातारश्च(२) "स्तोमैः" स्तोत्रैर्ब-हिष्पवमानादिभिः(३) "अभ्यनूषत" त्वामभिष्टुवन्ति (नु स्तुतौ कुटादिः॥ ८॥ १८

---

१८ उत्तरार्चिकस्य ७,२,१८,१ = ऋग्वेदस्य ५,७,२५,२ = ऊहे द्वा०१०—अष्टा० द्वि० ५।

(१)—अप्रगीत मन्त्रा इत्यर्थः।

(२)—विपश्चित्-इति निघण्टौ षोड़शं पदम् ३, १५।

(३,—प्रगीतमन्त्रैः "उपास्मै गायता नरः"-इत्येवमादिषु ऋक्षु ताण्ड्योक्त-प्रकारै-र्गीयमानैः ऊहगानारम्भे एव श्रुतेरित्यर्थः। बहिष्पवमानादिभि रित्यादिपदात् 'आज्यस्तोत्रो' 'माध्यन्दिनपवमानः'-इत्यादयो गृह्यन्ते।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

२ ३ १र २र ३ २ ३ १ २
उदुत्यंमधुमत्तमागिरःस्तोमासईरते।
३ १ २ ३ १र २र ३ २ ३ १ २
सत्राजितोधनसाअक्षितोतयोवाजयन्तोरथाइव ॥९॥ १९

५ र २र १ २ ३ ५
I उदुत्येमा। धूमत्तमा२३४। गाइरस्तो२३४मा।
२र १र २ २ ३ ५ २ ३ ५
साईरताये३। सात्राजा२३४इताः। धानासा२३४आ।
२र १र २ ३ ५ ३ २ ४
क्षीतोतया२३ः। वाजाया२३४ताः। रथा३आ५इवा६-
५६ ॥ ५॥

४ र ४ १ र र १
II उदुत्येमा५धुमत्तमाः। गिरस्तोमासआ२इराता
र १ र १र २ र १ १र
२इ। सत्राजितोधना२साअ। क्षितोताया२ः। वा-
र २ ५
जयन्तोरथा३१उवा२३। ई२३४वा ॥ ६॥
३ १ १ १ १ १ ३ ४ ३र ४ ५ ३ ५ १
III हउ२३४५। उदुत्येमधुम। तमा२३४हाइ। गा-

१९ उत्तरार्चिकस्य ६,१,६,१।

I,II,III वासिष्ठानि त्रीणि, आतारणि वा।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २ २ ५ २ २ १
इरा २:स्तोमा२। सत्राआ३४५इ। रा२३४ते। सत्राजि-
५२ १२ २२ ३ १ १ १ १ ३ १ १ १ १ ४२ ३ ४२
तो२धनसाअक्षितोतया२३४५:। हुं२३४५। वाजयन्तोर-
५२ ३ ५ २२ १ २२ १ २२ १ २
था:। इवो२३४हाइ। वाजयन्तोरथाइ। वा। औ-
४ ५ ४
३होवा। होपुइ। डा ॥ ७ ॥ १९

"त्ये" ते प्रसिद्धाः "मधुमत्तमाः" अतिशयेन मधुराः "गिरः" अप्रगीताः शस्त्र-रूपा वाचः। "स्तोमासः" प्रगीतानि वहिष्पवमानादीनि स्तोत्राणि च "उदीरते"। इन्द्र! त्वामुद्दिश्योद्गच्छन्ति ऊर्ध्वं प्रसरन्ति (ईर गतौ आदादिकः) तत्र दृष्टान्तः— "सत्राजितः" सदैव शत्रून् जयन्तः अतएव "धनसा" धनानि-सम्भजन्तः [वनु षण सम्भक्तौ। "जन-सन-खन-क्रम-गमो विट् (३,२,६७)। "विड्वनोरनुनासिकः स्यात् (६,४,४१)"-इत्यात्वम्] "अक्षितोतयः" [क्षियो भावे निष्ठाया मण्यदर्थे (६,४,६०)"-इति पर्युदासाद्दोर्घाभावः अतएव "क्षियो दीर्घात् (८,२,४६)"-इति निष्ठा नत्वाभावश्च। अक्षिताः क्षयरहिताः ऊतयो रक्षा येषां ते तथोक्ताः] "वाजयन्तः" वाजमन्नमिच्छन्तः(१) [क्वचि-'नच्छन्दस्य पुत्रस्येति(७,-४,३) ईत्व-दीर्घयोः प्रतिषेधः] एवं गुण-विशिष्ट-रथाइव, ते यथा विविध मितस्तत उत्तिष्ठन्ति तद्वदुदीरत इत्यर्थः ॥ ८ ॥ १९

(१)—वाजयन्तः पूजयन्तः; अथवा वाजशब्दो वेगवचनः वेगवन्तः-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी ।

देवातिथिः काण्व ऋषिः ।

१ २ ३ २ ३२ ३ २उ ३ १र ४ २र
यथागौरोअपाकृतं तृष्यन्नेत्यवेरिणम् ।
३ १२ ३ २उ ३ १ २ ३ १ २ ३ २उ ३ १ २
आपित्वेनं प्रपित्वेतूयमागहि कण्वेषुसुसचापिब ॥ १० ॥ २०

॥ इति प्रथम-दशति ॥ १ ॥

२ १र ४र ५र १ र २ १र
I यथागौ२३रोअपाकृताम । तृष्यन्नेतियवेरा२३इ
२ र १र र र२ १र २ १
णाम् । आपित्वे नःप्रपित्वे तूयमागा२३हौ । कण्वे२षु-
१ १ २ ५र र २ ५
सू२३ । सा२चा२३४औहोवा । पी२३४बा ॥ ८ ॥
२ ३ ५ ४ ५ २र र १ ७
II ओवाओ२३४वा । याथा । गौरोआ३पाकृतम् ।
२ ३र २ र १ ७ २
ओ३४ । हाहोइ । तृष्यन्नेतिया३वाइरिणम् । ओ३४ ।

---

२० उत्तरार्चिकस्य ८,३,४,१ = ऋग्वेदस्य ५,७,३०,३ = ऊहे अष्टा० द्वि० १८ ।

I,II गौराङ्गिरसस्य सामनी द्वे ; गौतमस्य मनाज्ये वा ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३र २ २ ५ १र २र २ २ २
हाहोइ। आ२३४पी। त्वे नःप्रपित्वे तूयामा१गहि। ओ-

३र २ १ १ १ ३ ५र र
३४। हाहोइ। कण्वे२षुसू२३। सा२चा२३४औहोवा।

२ १ १ १ ११
पिबा३ई२३४५॥ ८॥२०

"गौरः" गौर-मृगः(१) "तृष्यन्" पिपासितः सन् "अपा" अद्भिरुदकैः (व्यत्ययेनैकवचनम्। जठिदमित्यादिना(६,१,१७१) विभक्तेरुदात्तत्वम्) "कृतं" सम्पूर्णत्वं कृतम् "इरिणं" निस्तृणं तटाक-देशं "यथा" येन प्रकारेण "अवैति" अभिगच्छति (अव-शब्दोऽभिशब्दस्यार्थे) अभिमुखः सन् शीघ्रं गच्छति। तथा "आपित्वे" बन्धुत्वे(२) "प्रपित्वे" प्राप्ते सति, हे "इन्द्र"! त्वं "नः" अस्मान् "तूयं" (क्षिप्र-नामैतत्) शीघ्रम् "आ-गहि" आगच्छ। आगत्य च "कण्वेषु" कण्व-पुत्रेष्वस्मासु "सचा" सह एक-प्रयत्नेनैव विद्यमानं सर्वं सोमं "सु" सुष्ठु "पिब"(३)॥ १०॥ २०

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य द्वितीयः खण्डः।

---

(१)—'गौरः गौरमृगः सिंहः व्याघ्रो वा'-इति वि०।

(२)—'आपित्वे आपानकाले'-इति वि०।

(३)—'कण्वेषु सप्तम्या बहुवचनमिदम् तृतीया-बहुवचनस्थाने द्रष्टव्यम्, कणैर्मेधा-दिभि रस्मदीयैः ऋत्विग्भिः सचा सह पिब सोमम्-इति वि०। कणु इति निघण्टौ मेधावि-नामसु सप्तमं पदम् ३. १५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीये खण्डे—

सैषा प्रथमा ।

भर्ग ऋषिः ।

२ २ ऽ१२ १२३ १२ ३ १२
शग्ध्यू३षुशचीपतइन्द्रविश्वाभिरूतिभिः ।

५ र २१ २ ३ ५ २ र
I शग्ध्यूषु । शचाइपताइ । ई२३४न्द्रा । विश्वाभी-

१ २ २ ५ २ र १ २
३रूतिभाइः । भार३४गाम् । नहित्वायशा३सावसूं ।

३ ५ १ १ २ ५रर १ऽर १
वीर३४दाम् । अनू२३ । शू२रा२३४औहोवा । चरा२म-

३
सी२३४५ ॥ १० ॥

४ र र र४ १ र र
II शग्ध्यूप्वौहोपुइशचीपताइ । आइन्द्रविश्वाभिरूति-

२ २ २ २ २ २
भिः । भगान्ना३हो । त्वायशसाम् । वसू३हाइवाइद२म् ।

१ र २ १ ५ ४ ५
अनुशूरचरोवा३ओ२३४वा । मा५सोईहाइ ॥ ११ ॥

४ ३र ४ ५र ३२ ३ ४र ५ २ १ २र
III शग्ध्यूषूशची । पताइ । शग्ध्यूषु । शचाइपते ।

---

I,II,III इन्द्रस्य ; हारयणानि, हारायणानि वा त्रीणि ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ १ र २र ३ १ २ ३ २ ३ १ २ ३ १ २
भगंनहित्वायशसंवसुविदमनुशूरचरामसि ॥ १ ॥ २१

१ ३ ५ १ २ र १ २
आ२इ्हिमा२३४हाः। आइन्द्रविश्वा। भिरूतिभिः। आर

१ ३ ५ १ २ र १ २ १
इ्हिमा२३४हाः। भागन्नहित्वायशसम्। वसूविदम्। आ-

३ २ १ २ १ ३ ५
२इ्हिमा२३४हाः। अनुशू१रा२३। आ२३इ्हिमा२३४हाः।

११र २ १
चरामा२३सा३४३इ। ओ२३४५इ। डा ॥ १२ ॥ २१

हे "शचीपते"(१)! "इन्द्र"! "शग्धि"(२) देह्यभिमतं। "विश्वाभिः" सर्वाभिः सह हे "शूर"! "भगं न"(३) भाग्यमिव "यशसं" यशस्विनं। "वसुविदं" धनस्य लम्भकं "त्वा" त्वाम् "अनुचरामसि" परिचराम इत्यर्थः ॥ १ ॥ २१

---

२१ उत्तरार्चिकस्य ७,२,२,१ = ऋग्वेदस्य ६,४,२५,१८,५ = ऊहे एका०१८ एका० द्वि० ६—अष्टा०द्वि० ११ ॥

(१)—'शचीति कर्मनाम (नि० २,१,२२) * * * सर्वकर्मणां ज्योतिष्टोमादीनामधिपतिभूत!'-इति वि०।

(२)—शग्धीति याच्ञाकर्मसु पञ्चमम् नि० ३, १९।

(३)—'न शब्द उपरिष्टादुपमार्थीयः, अस्तुपमार्थस्य सम्प्रत्यर्थे प्रयोग इति पदपूरणः। पालन-सहितं धनमित्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

रेभः काश्यप ऋषि रिन्द्रं प्रार्थयते।

१　२ ३　२ ३　१　२ क २र ३　　१ २
याइन्द्रभुजआभरःसर्वांॐअसुरेभ्यः।

३र २　　　　२　५　　　　२　　१　२
I याहोइ। ई२३४न्द्रा। भुजा३आभा१रा२ः।

१　　२　　　र　　　१　२　　　　१　२　२
सुवार२३हा। वाँॐअसू३राइभा१या२ः। स्तोता२३हा।

१　　　　　७　　　१　२　२　　　र　१
रमिन्मघवन्नस्यावर्द्धाया२। याइचा३हाइ। त्वेवृक्तब-

२　　　　१
र्हा२३इषा३४३ः। ओ२३४५इ। डा॥ १३॥

५र　　　र　　५　　२ १र　२　　१　३
II याइन्द्रभुजआभाइरा:। सुववांॐआ। सुरेरभा

५　　२　　२र　　५　　३र र २ १
२३४याः। हां। औहो२३४हा। स्तोतारमाइत्। मा-

१　　७　३　　५　　२　　२र　　५
घवन्ना। स्यवार्द्धा२३४या। हां। औहो२३४हा।

२र १　　२　　२　　३र　　५　　२ १
येचत्वा२३इवृ३। हां। औहो२३४हा। क्तबर्हा२३-

२　　　१
इषा३४३ः। ओ२३४५इ। डा॥ १४॥

४र ५　४ ५ ४र ५　　४　५　　१　२र　१
III याइन्द्रभुजआभरः। उद्धवाहाइ। सुववाँॐअ-

---

I,II,III साम्नाणि त्रीणि।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ ५ ३ १ २ ३ २ ३ २ २ १ २
स्तोतारमिन्मघवन्नस्यवर्द्धययेचत्वेवृक्तबर्हिषः ॥ २ ॥ २२

२र १ २ र १र २ १
सुरेभ्यः। उड्डवा२३हाइ। स्तोतारमिन्मघवन्न। स्या-
७ १ २ र१ २ १
वर्द्धाया२। उड्डवा२३हाइ। येचत्वा२३इव। उड्डवा-
२ १ २ १
२३हा। क्तबर्हा३३इषा३४३ः। ओ२३४५इ। डा ॥१५॥२२

हे "इन्द्र"! "स्वर्वान्" सुखवान् स्वर्गवान्वा(१) (अथवा स्वःशब्दः सर्व-पर्यायः(२) सर्वं भूत-जातम् आत्मन एवोत्पन्नत्वात् तद्वान्(३)) एवं गुणस्त्वं "याः" यानि "भुजो" भोक्तव्यानि धनानि "असुरेभ्यो" बलवद्भ्यो राक्षसेभ्यः "आभरः" आहरः तान् हत्वा आहृतवानसि (हृग्रहोरिति भकारादेशः) अतएव हे "मघवन्"! धनवन्निन्द्र! "अस्य" (अन्वादेशे अशादेशः) एतस्य आहृतस्य धनस्य दानेन "स्तोतारमित्" तव स्तोत्रकारिणमेव "वर्द्धय" वृद्धिमन्तं कुरु। "ये च" अन्ये यष्टारः "त्वे" त्वदर्थं(४) "वृक्तबर्हिषः" स्तीर्ण-बर्हिषो भवन्ति तांश्च "धनेन वर्धय॥ २ ॥ १२

---

२२ ऋग्वेदस्य ६,६,२६,१।

(१)—स्वःशब्दो निघण्टौ प्रथम-चतुर्थे दिवश्चादित्यस्य च साधारण-नामसु प्रथमं पठितम्। स्वः सुखमिति तु प्रसिद्धम्।

(२—सर्वं शे,-इत्येव नैरुक्ते तथैव व्याख्यानात्।

(३)—'स्वःशब्दो धन-वचनः, तद् यस्यास्ति स स्वर्वान् प्रथमैक वचनमिदं पञ्चमी बहुवचनस्थाने द्रष्टव्यम्; स्वर्वद्भ्यः धनवद्भ्यः। केभ्यः पुनः स्वर्वद्भ्यः? उच्यते—असुरेभ्यः सकाशादित्यर्थः'-इति वि०।

(४)—त्वे-इति "यस्य च भावेन भावलक्षणम् (२,३,३७)"-इति सप्तमी।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

जमदग्निर्ऋषिः।

२ ३२ ३ २ ३ १ २क२र
प्रमित्रायप्रार्यम्णेसचथ्यमृतावसो।

५ २ र १ १
I प्रमित्रायप्राहाउ। आ२र्यम्णाइ। सचा२हो।
२ १ २र१र १ २
थियौ२। ऊवाइ। आर्त्तावसाउ। वरा२हो। थि-
१ र २र१ र
यौ२। ऊवाइ। वरुणेच्छा। दोयंवचाः। स्तोत्रा२ए-
१ २र १ २र१र २ २ ५
होइ। राजौ२। ऊवा। षुगायता३१उवा२३। ऊ३४पा॥१६॥

५ र र ४ ५ १ २ ३र २
II प्रमित्रायप्रौहोवा। आर्यम्ण। औहो३४इ।
२र ऽ २ १ २ १ २ ३र २
औहो३वा। साचथ्यम्। ऋतावासा। औहो३४इ।
२र ऽ २ १ र१र र १ २ ३र २
औहो३वा। वारूथ्यवरुणेच्छ। दियांवाचा। औहो-
२र ऽ २ १ २ ३र २ २र
३४इ। औहो३वा। स्तोत्रएराजा। औहो३४इ। औ
ऽ २ र १ २ ३र ऽ २र ऽ २
हो३वा। षृगायाता। औहो३४इ। औहो३वा३४३।
१
ओ२३४५। डा॥१७॥

५ र र ४ ५ ४ ५ १ २
III प्रमित्रायप्रार्यम्णेवा। ओवा। साचथ्यम्।

---

I,II,III वरुणसामानि त्रीणि।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ २ १२३२ ३ १२ ३१र २र
वरूथ्ये३वरुणेक्रन्द्यं वचःस्तोत्रᳩराजसुगायत ॥ २ ॥२३

१ २ १ २ १ २ १ २र १
ऋतावा१सा २उ। वा२३रू। था२३याइ। वरुणेक्र।
२ १ ऽ २ र १ र २र
दाया२३ᳩहाइ। वचो२आ। स्तात्रᳩराजसुगायत।
१ २ १ २ऽ २ ५ ४
स्तो२३त्राम्। राजसुगौ३। हो३१२३४। वा। यापूतो-
५
ईहाइ ॥ १८ ॥२३

हे "ऋतावसो"(१) यज्ञ-धन! "मित्राय" "सचथ्यं" सेवार्हं "क्रन्द्य" यज्ञ-गृह-भवम्(२) अभिप्रायानुसारं वा "वचः" स्तोत्रं "प्रगायत" प्रकर्षेण पठत। "अर्य्यम्णे" च प्रगायत। "वरूथ्ये"

---

* "वरूथ्यं१"-इति ऋक्पाठः अत्राप्येव मेव वि०-सम्मतः।

---

२३ ऋग्वेदस्य ६,६,३६,१।

(१)—ऋचि तु ऋतावसो-इति पद्ये। ऋतो यज्ञः, स एव वसुभूतो यस्य स ऋत-वसुः; (ऋतवसुरेव ऋतावसुः छान्दसं दीर्घत्वम्) तस्य सम्बोधनम् ऋतावसो!-इति।

(२)—छर्दिरिति गृह-नामसु ऊनविंशतितमम् पदम् नि० ३, ४। क्रन्द्यं क्रन्दः शब्देन स्तुतिरुच्यते, तस्यां स्तुतौ भवमित्यर्थः। किं पुनस्तत्? वचः वचनम् स्तोत्र-लक्षणम्'-इति वि०। अत्र मानं—क्रन्दतेरर्चति कर्मसु पाठः (३,१४); स्तोतृ-नामसु क्रन्द-इति च (३,१६)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

मेधातिथिऋषिः ।

२ १ २ ३ १ २　३ २ ३ १ २　२ १ २
अभित्वापूर्वपीतयइन्द्रस्तोमेभिरायवः ।
२　१ २ ३ २ ३ १ २　२ १ २　३ २
समीचीनासऋभवःसमस्वरन्रुद्रागृणन्तपूर्व्यम् ॥४॥ २४

४ २ ४र र२४र५र　२ ४र५४र५　२
I अभित्वापूर्वपीतये । अभित्वा३पूर्वपीतयाइ । इन्द्र-
र र　१ ०　१ २　१र ६ २
स्तोमेभी३रायवा२ः । भिराया१वा२३ः । ओमो३वा ।

यज्ञ-गृहावस्थिते(२) वरुणे च प्रगायत (प्रगायतेति बहुवचनं पूजार्थम्) एतदेव दर्शयति "राजसु" राजमानेषु मित्रादिषु स्तोत्रं गायत पठत । मित्रादीन् त्रीन् राज्ञः स्तुतेति समुदायार्थः ॥ ३ ॥ २३

हे "इन्द्र" ! "आयवो"(१) मनुष्याः स्तोतारः "स्तोमेभिः"

---

२४ उत्तरार्चिकस्य ७,३,१,१ = ऋग्वेदस्य ५,७,२६,२ = आरण्यके प्र० १३—१४ = ऊहे एका० १६—द्वावि १६ ।

I प्रजापतेः ; वषट्कारणिधनम् ।

(२)—वरूथ्यमिति गृह-नामसु सप्तदशम् पदम् (नि०३,४) तदेवेहार्थे नियामकम् । विवरण मते तु वरूथ्ये इति सप्तमी द्वितीयार्थे, वरूथ्यं वरणीयम् ।

(१)—आयव इति मनुष्य नामसु सप्तदशम् पदम् नि० २, ३ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र र र १ ७ १ २
समीचीनासऋभवःसा३मास्वरा२न्। समास्वा१रा२३न्।
१र ६ २ र १ ७ १ २
ओमो३वा। रुद्रागृणन्ता३पूर्विया२म्। तपूर्वा१या२३म्।
१र २ ५र र ३ ५
ओम्। ओ२। वा२३४। औहोवा। ऊ२३४पा ॥१९॥ १४

स्तोत्रैः "त्वामभि" ष्टुवन्ति। किमर्थं? "पूर्वपीतये" सर्वेभ्यो देवेभ्यः पूर्वं प्रथमतएव सोमस्य पानाय (सवन-मुखे हि चमस-गणैः इन्द्रस्यैव सोमो ह्वयते। तथा "समीचीनासः" सङ्गताः "ऋभवः"(२) प्रथम-वाचकेन शब्देन त्रयोऽप्युपलक्ष्यन्ते ऋभुर्विभ्वावाजइत्येते च(३) "समस्वरन्" त्वामेव सम्यग् स्तुवन् (स्वृ शब्दो

---

(२)—ऋभवो मेधाविन इति वि०। अत्र मानम्—निघण्टौ मेधावि-नामसु ऋभुरिति पद-पाठः (३,१५,८)।

(३)—ऋभव इति पदेऽस्ति त्रिविधं नैरुक्तम्—प्रकृति-प्रत्यय-लभ्यम्, ऐतिहासिकम्, यौगरूढ़िकञ्च। तथाहि—"ऋभव उरुभान्तीति वा, ऋतेन भान्तीति वा, ऋतेन भवन्तीति वा (२,५,१५)"-इत्येकम्। "ऋभु र्विभ्वा वाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवु स्तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन, तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन बहूनि दशतयीषु सूक्तानि भवन्ति (२,५,१६)"-इत्यपरम्; इह च मानमयं मन्त्रः—

"विष्ट्वी शमी तरणित्वेन वाघतो
मर्त्तासः सन्तो अमृतत्व मानशुः।
सौधन्वना ऋभवः सूरचक्षसः
संवत्सरे समं पृच्यन्त धीतिभिः ॥"

(ऋ०१म० १६अ० ५सू० ४मन्त्रः)

"कृत्वा कर्माणि क्षिप्रत्वेन वोढारो मेधाविनो वा मर्त्तासः सन्तो अमृतत्वम् आन-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

अस्याः परस्याश्च नृमेध-पुरुमेधौ द्वावृषी(१)।

३१ २ ३१र २र३ १ २
प्रवइन्द्रायबृहतेमरुतोब्रह्मार्चत।

पतापयोः)"रुद्राः"(४) रुद्र-पुत्रा मरुतश्च(५) "पूर्व्यं" पुरातनं वृत्रं त्वामेव "गृणन्ते" अभ्यष्टुवन् (वृत्र-वध-समये प्रहर भगवो जहि-वीरयस्वेत्येवं रूपया वाचा त्वां स्तुतवन्त इत्यर्थः ॥ ४ ॥ २४

---

भिरे सौधन्वना ऋभवः सूरख्याना वा सूरप्रज्ञा वा संवत्सरं समश्नुवन्त धीतिभिः'-इति च यास्क-कृतं तद्व्याख्यानम्।

"आदित्य-रश्मयोऽप्यृभव उच्यन्ते (२,५,१६)"-इति तु तृतीयं नैरुक्तम्। अत्रापि मान-मस्त्रयं मन्त्रः———

"अगोह्यस्य यदसस्तना गृहे
तदद्येदमृभवो नानु गच्छत।"

(ऋ०१म०२२सू०५सू०११ मन्त्रार्द्धः)

"अगोह्य आदित्योऽगूहनीयस्तस्य यदस्वपथ गृहे यावत्तत्र भवथ न तावदिह भवथेति"-इति च यास्क-कृत-मेतद्-व्याख्यानम्।

तदत्र सायणेन भगवता ऐतिहासिक नैरुक्तयमेवावलम्ब्योक्त मेतत्—प्रथम-वाचकेनेत्यादि॥

(४)—'रोदन-स्वभावकाः स्तुत्युच्चारण-शीलाइत्यर्थः'—इति वि०।

(५)—'मरुती मितराविणः'-इति नै० २,५,१३।

(१)—"पुरुमेधा आत्मीया ऋत्विज आह"—इत्येकस्यैवर्षे रुल्लेखो विवरणे दृश्यते।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २
वृत्रꣳहनतिवृत्रहाशतक्रतुर्वज्रेणशतपर्वणा ॥ ५ ॥ २५

४ ५ ४ ५ र ४ र ५ ४ २ र १ २
I प्रवइन्द्रायबृहते। प्रवाः। इन्द्रायाबृहा१तेर३।

१र ऽ २ र १ २ १र ऽ २
ओमोर्वा। मरुतोब्रह्माअर्चा१तार३। ओमोर्वा।

१ र २ १ १र ऽ २ १
वृत्रꣳहाना। तिवृ। त्राहार३। ओमोर्वा। शता-

२ ३ ५ ३ २ २ २ ४
क्रतूः। वार३४ज्रे। णशा३। हा३हा। तपापूर्वणा।

४
होपूइ। डा ॥२०॥ २५

हे "मरुतः"! मितराविणः स्तोतारः(२)! "बृहते" महते "वः" स्तुत्य-स्तोतृत्व-लक्षणेन सम्बन्धेन युष्मदीयायेन्द्राय "ब्रह्म"

---

२५ ऋग्वेदस्य ६,६,१२,३=आरण्यके प्रथम-द्वितीये५-६ -तृतीये च २७-२८ हे।

I छषतो मारुतस्य साम।

(२)—मरुतो मितराविणो वा मह‌द्रवन्तीति वा'-इति नै० २,५,१३। 'हे मरुतः! मदीया ऋत्विजः'-इति वि०। इह च मानम् निघण्टु-तृतीयाष्टादशे ऋत्विङ्नामसु मरुतइति पदस्य षष्ठत्वेन पाठः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथषष्ठी।

३ १र २र ३ १ २ ३ १ २
वृहदिन्द्रायगायतमरुतोवृत्रहन्तमम्।

३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २
येनज्योतिरजनयन्नृतावृधोदेवन्देवायजागृवि ॥ ६ ॥२६

१ र २ १ २ १ २
I सांत्वाहिन्व। तिधाइताइभीश:। तारइ। भार-

५र र १ २ १ र २ १
३४। औहोवा। सᳲश्रवमेइ। सांत्वारिण। तिधा-

साम-लक्षणं स्तोत्रं "प्रार्चत" प्रोच्चारयत(३)। ततो "वृत्रहा" वृत्रस्य मेघस्य(४) पापस्य वा हन्ता। "शतक्रतुः" शत-विध-कर्मा बहु-विध-प्रज्ञो वा इन्द्रः "शतपर्वणा" शत-सङ्ख्याक-धारेण वज्रेण एतन्नामकेनायुधेन यः "वृत्रम्" अपामावरकं वृत्राख्य मसुरं(५) "हनति" युष्माभिरभिष्टुतः सन् हन्तु (हन्तेर्लेटयड़ागमः(६) ॥५॥२५

---

२६ ऋग्वेदस्य ६,६,१२,१ = आरण्यके प्र० १६— द्वि० द्वि० २।

I संश्रवसः, विश्रवसः, सत्यश्रवसः, श्रवसी वा।

(३)--'ब्रह्म सोमलक्षणमन्नम्, प्रार्चत प्रकर्षेण स्तुत इत्यर्थः'-इति वि०। ब्रह्मइति-नानार्थः, अन्ननामसु च दृश्यते (नि० २,७,२५)।

(४)—वृत्रइति निघण्टौ मेघनामसु अष्टाविंशतितम् पदम् १,१०।

(५)—असुरइति च निघण्टौ मेघनामसु ऊनविंशतमम पदम १,१०।

(६)—'लेटोऽडाटौ (३,४,९४)"-इति पा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ ५र र १ ३
इताइभोइः। ताऽरइ। भाऽ२३४। औहोवा। विश्रव-
१ र २ १ २ १ २
सेइ। सांत्वातत। चुर्द्धाइताइभोइः। ताऽरइ। भाऽ२-
५र र २ १ २
३४। औहोवा। सत्यश्रवसेइ॥२१॥

१ र २ १ २ १
II सांत्वाशिश। तिधाइता१इभो२ः। ताइभो२ः।
र १ २ १ र १
बृहदिन्द्रायाइगाया१ता२। याता२। मरुतोवत्राइहा-
२ १ र र १ २
न्ता१मा२म्। तामा२म्। येनज्योतिरजनयन्नृइतावा-
१ र रर १ १
१र्द्धो२ः। वार्द्धो२ः। देवंदेवायाइजागृवो२। गृवो२।
१ र २ १ २ १ ३
सांत्वाशिश। तिधाइताइभोइः। ताऽरइ। भाऽ२३४।
५र र १ ३१११९
औहोवा। श्रवसे२३४५॥२२॥ २६

हे "मरुतः"! रु शब्दे, मितं रुवन्तीति मरुतः हे मितभाषि-णः(१) स्तोतारः! "वृत्रहन्तम्" अतिशयेन पापविनाशनं "बृ-

---

I वाप्यानाम्, इन्द्रस्य वा।

(१)—'मरुतो मितराविणो वा, मितरोचिनो वा, महद्द्रवन्तीति वा' इति नै० ११,५,१३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

वसिष्ठऋषिः*।

२ ३१ २ ३१ २ ३२ ३ ३ १२
इन्द्रक्रतुन्नआभरपितापुत्रेभ्योयथा।

१ २ ३ १ २ ३१ २ ३ १र २र
शिक्षाणोअस्मिन्पुरुहूतयामनिजीवाज्योतिरशीमहि ॥७॥२७

हृत्" साम "इन्द्राय" इन्द्रार्थं "गायत" अस्मदीये यज्ञे गानं कुरुत। "ऋतावृधः" ऋतस्य सत्यस्य वा वर्धका विश्वेदेवाः अङ्गिरसो वा ऋषयः "देवाय" द्योतमानायेन्द्राय "देवं" देवनशीलं(१) "जागृवि" सर्वेषां जागरण-शीलं(२) "ज्योतिः" सूर्यं "येन" साम्नाम् "अजनयन्(३)" इन्द्रार्थमुदपादयन् तत्साम गायतेति॥ ६ ॥ २६

* 'शक्तिरिन्द्रमाह'-इति वि०।

२७ उत्तरार्चिकस्य ६,३,६,१ = ऋग्वेदस्य ५,३,२१,६= ऊह्ये २,१७।

(१)—'कीदृशं पुनः स्तुतिरूपम् उच्चारयामः ? उच्यते—'देवं' द्वितीया तृतीयार्थे द्रष्टव्या, देवेन सोमेन संयुक्तम्।

(२)—'अतिप्रीतिकरत्वेन जागरणकरम्, अत्यन्तप्रीति करमित्यर्थः'-इति वि०।

(३)—'जनितवान्, आरोपितवानित्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२१ २ २ १ २ १ २
I इन्द्राऔ३हो। क्रतुन्ना३आभा१रा२। पिताऔ-
२ र १ २ १ २ २ र
३हो। पुत्रेभी३योया१था२। शिक्षाऔ३हो। णोअ-
र १ २ १र १ २ ५र
स्मिन् पुरुहूतयामा१नी२। जीवार३ः। ज्यो२ता२३४औ-
र २१र २ ११११
होवा। अशीमहो२३४५ ॥२३॥

४ र ४ २ १र २१र
II इन्द्रक्रतूपुन्नआभरा। पितापुत्रेभियोयथा। शि-
र २ १ २र १ २
क्षाणो२३आ। स्माइन् पुरुहू। तयामा१नौ२। औ
१ २ ५ २र १र
२। हौ२। हूवाइ। औ३हो२३४वा। जीवाज्यो-
२ १र २ १
२३तीः। अशीमा२३हा३४३इ। ओ२३४५इ। डा॥ २४॥

३४३४ ५ र ३२३ ५ र २ ४र ५
III इन्द्रक्रतुन्नआ। भराओ२३४वा। पितापूत्रेभि-
४र ५ २ ११११ ४ ३र ४ ३र ४५ १ ५
योयथा। हुं२३४५। पितापुत्रेभियः। याथा२३४हा-

I,II,III वाष्यानाम्, इन्द्रस्य वा; संग्रानानि, वाम्राणि, वासिष्ठानि वा।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ ४ ५　　३　४ ५ र र　　१
इ। श्राइ्चाणोश्रा। स्माइन् पुरुहूतया। मानोर३४-
५　४ ५ ४ ५　२१　५　४　५
हाइ। जीवाज्योतीः। अशोर३४वा। मापूहो६हाइ॥

॥२५॥ २७

हे "इन्द्र!" "नः" अस्मभ्यं "क्रतुं" कर्म वा प्रज्ञानं वा "आभर" आहर। अपिच। "यथा पिता पुत्रेभ्यः" धनं प्रयच्छति तथा "नः" अस्मभ्यं "शिक्ष" धनं देहि। हे "पुरुहूत!" बहुभिराहूतेन्द्र! "यामनि" यज्ञे(१) "जीवा" वयं(२) "ज्योतिः" सूर्यम्(३) "अशीमहि" प्रतिदिनं प्राप्नुयामः। [यद्वा। हे इन्द्र! भूतानि प्रकाशयितरिन्द्र! तथाच यास्कः—"इन्द्रइरां दृणातीति वेरां ददातीति, वेरां दधातीति, वेरां दारयत इति, वेरां धारयतइति वेन्दवे द्रवतीति, वेन्दौ रमत इति, वेन्धे भूतानीति वा तद्यदेनं प्राणैः सर्वैः समैन्धत्तदिन्द्रस्येन्द्रत्वमिति विज्ञायते"(१०,८)-इति(४)। एवं गुण-विशिष्ट! परमात्मन्! त्वं क्रतुं कर्म्म स्व-विषय-ज्ञानं वा नः अस्मभ्यम् आभ-

(१)—यान्ति देवा यस्मिन् स यमो यज्ञः।

(२)—'जीवा जीवन्तो वयम्'-इति वि०।

(३)—'ज्योतिः ज्ञानम्'-इति बि०।

(४)—"इदं करणादित्याग्रयणः। इदं दर्शनादित्यौपमन्यवः। इन्दते वैश्वर्यकर्मणः। इञ्छत्रूणां दारयिता वा, द्रावयिता वा, दरयिता च यज्वनाम्"-इति च नै० दै० ४,८।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टम

रेभऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २
मानइन्द्रपरावृणक्भवानःसधमाद्ये।

१ २ ३ २उ ३ २ ३ १ २ ३ १ २
त्वन्नऊतीत्वमिन्नआप्यंमानइन्द्रपरावृणक्॥ ८॥ २८

५र १ २ २ १र २ ०
I मानइन्द्रा। परावा३र्णाक्। भवानः सधमा१द्ये-

२ १ २र २ २ १र र २
३याइ। त्वन्नऊतीत्वमित्रआपि३याम्। मानइन्द्रपरावृ-

२ ५
णा३१उवा२३। ऊ३४पा॥ २६॥

३र ४ ५ ४ ५र २ २ ३र ४ ५ २ १र
II मानइन्द्रपरा। वृणाक्। मानइन्द्रा। परावा-

राहरप्रयच्छेत्यर्थः। तत्र दृष्टान्तः—पिता पुत्रेभ्यो यथा लोके विद्यां धनं वा प्रयच्छति तथा नोऽस्मभ्यं शिच्च विद्यां प्रयच्छ। हे पुरुहूत! बहुभिराहूतेन्द्र! यामनि सर्वैः प्राप्तव्ये अस्मिन् प्रकृते ब्रह्मणि जीवा वयं ज्योतिः परं ज्योति रशीमहि सेवेमहि॥ ७॥ २७

---

२८ ऋग्वेदस्य ६,६,३७,२।

I,II आङ्गिरसस्य, अङ्गिरसस्य वा सामनी द्वे।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२३र्णाक्। भवा२नः साधमादा२३याइ। त्वन्नऊती२।

त्वमिन्ना२आपियाम्। मानाआ२३इन्द्रा। परावा२३

र्णा३४३क्। औ२३४५ई। डा॥ २७॥ २८

हे "इन्द्र"! "नः" हविषां प्रदातॄन् अस्मान् "मा परावृणक्" मा परित्याक्षीः (वृजी वर्जने रौधादिकः। लङि रूपं) तदेवाह त्वं नोऽस्माकं "सधमाद्ये" सह मादन-हेतुभूते यज्ञे सोम-पानाय भव। किञ्च। हे "इन्द्र"! नोऽस्मान् त्वमेव "ऊती" ऊत्या स्थापय। यद्वा। ऊती। व्यत्ययेन कर्त्तरि क्तिचा निपातितः त्वमेवास्माकं रक्षिता खलु। तथा "त्वमित्" (इदवधारणे) त्वमेव नोऽस्माकम् "आप्यं"(१) ज्ञातेयं त्वमेव बन्धुरित्यर्थः। अतएव मा न इन्द्रः परावृणगिति गतार्थः॥

"सधमाद्ये"-"सधमाद्यः"-इति च पाठौ॥ ८॥ २८

(१)—'आप्यम् ज्ञातव्यमित्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

मेधातिथिर्ऋषिः।

३ २ २ ३ १ २ ३ १ ३ २ ३ १ २
वयन्त्वासुतावन्तआपोनवृक्तबर्हिषः।

३ १ २ ३ १ २ ३ १ २ ३ १ २
पवित्रस्यप्रस्रवणेषुवृत्रहन्परिस्तोतारआसते ॥९॥ २९

५ २ ४र ५र ४ ५ १ र २ १
I वयन्ताऽ३त्वासुतावन्ताः। आपोनवृ। क्तबाऽ२३र्हि-

२ १ १ १ २ १ २ २ २ १ २ १
षाउ। बाऽ२३। पवित्रस्या। प्रस्रवणाइ। षुवृत्राऽ२३४-

५ ४ १ १र र २ १र
हान्। पाऽ२३री। स्तोतारः। आसाऽ२३४५ताई५ई।

३ १ १ १ १
आऽ२३४५ष् ॥ २८ ॥

४र ५र ४ ५ ४ ५ र र४ ५ ४र ५र ४ १र
II औहोवा। वयन्त्वासुतावन्तः। औहोवा। औ

र र २ २ १ र
होइ। आपोनवृक्तबर्हिषः। पवाइत्राऽ३स्या। प्रस्रवणे-

---

२९ उत्तरार्चिकस्य २,२,१२,१ = ऋग्वेदस्य ६,३,७,१ ऊहे द्वि० १८—च० ८—न० ६—उन० द्वि० ७।

I आष्-कार-णिधनं काण्वम्।

II महावैष्टभम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २ २ १र २ २
षुवा१न्त्रा२ह्वान् । औ्होऽ३इ । औ्होइ । परिस्तोता-

२ २ २ २ २र २१ २ ४ ५
रआसते । पराइस्तो३ता । रआसता । औ३ह्वोवा ।

४
होऽ५इ । डा ॥ २९ ॥

५र ४ ५ ४ ५ ४ ५ ३
III औहोहोवाइ । आइही । वायाम् । घा२३४-

५ २ ३ ३ २ ३ ५ २र १
त्वा । सूतावा२३४ताः । आपोना२३४वृ । क्तावर्हिषाः ।

२र १ ३ ५ २ ३ ५ २ ३
एहोइ । आ२३४इही । पावित्रा२३४स्या । प्रास्रावा-

५ २र १ २र १ ३ ५ २
२३४णे । षुवृत्वहान् । एहोइ । आ२३४इही । पा-

३ ५ २ २ ४ १ २ ३ ५
रिस्तो२३४ता । रआ२सापुता६५६इ । आ२३४भी ॥ ३० ॥

५ ४ ५ ४ ५ र ४ ५ १ २२
IV वयङ्क्तोवाइ । सुतावन्तोवा । आपोनवृ । क्त-

१ २ १ २ २ १ २ १ २र
वार्हा१इषा२३ः । होवा२हाइ । पवित्रस्यप्रस्रवणे । षु-

---

I,II आभि-निधनं काण्वम् ।

IV महावैष्टभम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

भरद्वाजऋषिः*।

१ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २
यदिन्द्रनाऊषीष्वाओजो†नृम्णञ्चकृष्टिषु।

१ २ १ २ २ १ २ १
वार्त्रा१हा२३न्। होवा३हाइ। पराइस्तो१त्ता२३। हो-

२ २ १ १ २ ५र र २
वा३हा। रश्रा२३। सा२ता२३४औहोवा। दी२३४-

५
श्राः॥२१॥ २९

हे "वृत्रहन्" "त्वा" त्वां वयं "घ" खलु "सुतवन्तः"(१) सोममभिषुतवन्तः "आपीन" आपइव प्रवण मभिगच्छामः(२)। "पवित्रस्य" सोमस्य प्रस्रवणेषु "वृक्तबर्हिषः" स्तीर्ण-बर्हिषः स्तोतारश्च त्वां पर्युपासते॥ ८॥ २९

---

* 'संयुराह'-इति वि०।
† "आ९ ओजो"-इति ऋक्पाठः।

---

(१)—ऋचि सुतावन्त-इति दीर्घः श्रूयते।

(२)—"एतदुक्तम् भवति। यथा आपः नदीनिर्झरेण स्थानेषु द्वीपं परिवार्य्य व्यवतिष्ठन्ते तद्वद् वयं स्तोतारश्च त्वां परिवार्य्य व्यवतिष्ठाम इत्यर्थः"-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ ३ २ ३ १र २र ३१र २र ३ १ २
यद्वापञ्चक्षितीनांद्युम्नमाभरसत्राविश्वानिपौंस्या ॥१०॥३०

॥ इति द्वितीय-दशति ॥

५र र ४ ५ ४र ५ र ५ १
I औहाइ। यदिन्द्रना। हुषीषुद्वा। ओजो२-

१
नाम्णा२म्। चकृष्टि। षु। ऐ२ही१आइही२। हा-

१ २ १ र १
२ऊऊवाइ। या१द्वा२पाञ्चा२। क्षितीनाम्। ऐ२ही-

१ ३ १ र २ १
१आइही२। हा२ऊऊवाइ। द्युम्नमाभ। रा। ऐ२-

हे "इन्द्र"! नाहुषीषु [नहुषइति मनुष्यनाम नि०२,३,९] तत्सम्बन्धिनीषु(१) "कृष्टिषु"(२) प्रजासु (आकारः समुच्चये) यच्च "ओजो" बलं "नृम्णं" धनं च विद्यते। "यद्वा" यच्च "पञ्च" पञ्चानां "क्षितीनां"(३) निषादपञ्चमाश्चत्वारो वर्णाः पञ्च

---

३० ऋग्वेदस्य ४,७,२८,२।

I औष्टीगवम्।

(१)—'नहुषइति मनुष्यनाम नि० २,३,९, तेषु भवो नाहुषः, मनुष्य-जातीया-स्तास्तावान्तर-जातीयाभिप्रेता, ते यक्षरक्षोगन्धर्वादयः, तासु,-इति वि०।

(२)—'कृष्टिषु मनुष्येषु च' (नि०२,३,७)-इति वि०।

(३)—'क्षितय इत्यपि मनुष्यनाम (नि० २ ३,६)। पञ्च च ते क्षितयश्च। कतमे पुनस्ते ? चत्वारो वर्णाः, निषादः पञ्चमः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



 १ २ १
हो१आइहो२। हा२ऊजवाइ। सा१त्रा२वाइस्वा२।
१र १
निपौᳪसि। या। ए२हो१आइहो२। हा२ऊजवा-
 ३ ५र र ३ ५
२। या२३४औहोवा। ऊ२३४पा॥२२॥ ३०

चितयः तेषां स्वभूतम् "द्युम्नं" द्योतमानमन्नं तत्सर्वं मस्मभ्यम् "आभर" आहर प्रयच्छ। तथा "सत्रा"(४) महान्ति "विश्वानि" सर्वाणि "पौंस्या" पौंस्यानि बलानि(५) चास्मभ्य माहर॥ १०॥ ३०

इति श्रीसायणाचार्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्य तृतीयः खण्डः॥ ३॥

---

अथ चतुर्थे खण्डे—

सैषा प्रथमा।

मेधातिथिर्ऋषिः।

 ३२ ३ १र २र३ १ २ ३ २
सत्यमित्थावृषेदसिवृषजूतिर्नोविता।

---

(४)—'यद्यपि सत्राशब्दः अन्न-नामसु पठितः, तथापीह सर्वदा-शब्द-प्रयोगे द्रष्टव्यः। तथाच सर्वदा इत्यर्थः।

(५)—'पौंस्यानि'-इति निघण्टौ बल-नामसु चतुर्विंशतितम् पदम् (२,९)। सुपां-सुलुगित्यादिना आले च पौंस्या इति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



क २१ २ १ २ ३ २ ३ १ २ ३ १ २ ३ २
वृषाह्युग्रशृण्विषेपरावतिवृषोअर्वावतिश्रुतः ॥ १ ॥ ३१

५ ४ ५ ४र ४ १ र र
I सत्यमित्थावृ। षापूइदसाइ। वृषजूतिर्नोऽविता-
१र ० र १
ऽ२। वृषाह्युग्राश्रृण्विषा२इ। परावताइ। वृषो२इ-
२ १ २ १
र्वा। वताइश्रू२३ता३४३ः। ओ२३४५इ। डा ॥२२॥ ३१ *

हे "उग्र" उद्गूर्णेन्द्र! त्वं "सत्यम्" "इत्था" इत्थं "वृषेत्" कामानां वर्षकएवासि। "वृषजूतिः"(१) वृषभिः सेक्तृभिः सोम-रसस्य सोतृभिश्चाहूतो "नः" अस्मान् "अविता" रक्षिता भवसि। "वृषाहि" सेचकएव "शृण्विषे" श्रूयसे। "परावति" दूरेऽपि(२) "वृषेव" कामानां सेचक एवासि। "अर्वावति" समीपेऽपि "वृषा" सेचक एव "श्रुतः" अश्रूयत॥

"अविता" "अवृतः"-"इति च पाठो॥ १ ॥ ३१

---

३१ ऋग्वेदस्य ६,३,८,६=आरण्यके च०द्वि०१८।

I इन्द्रस्य; वृषकम्।

(१)—'वृषजूतिः—जूतिर्गमनं; (जवति गत्यर्थः) वृषस्येव गमनं यस्य स वृषजतिः'-इति वि०।

(२)—निघण्टौ 'परावते'-इति दूरनामसु पञ्चमं पदम्। ३,२६।

---

*॥ इति ग्रामे गेय-गाने षष्ठस्यार्द्ध-पप्राठकः ॥

६८क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

रेभऋषिः ।

२ ३ १ २ ३ २ ३ १ २ ३ १ २ १ २
यच्छक्रासिपरावतियदर्वावतिवृत्रहन् । अतस्त्वा-
३ १ ३ १ २ ३ १ २ ३ २ ३ १ २
गीर्भिर्द्युगदिन्द्रकेशिभिःसुतावाँ३आविवासति॥२॥ ३२

५ २ ४ऽ ४र ५ १ २र १ २
I ओम् । यच्छक्रा३सीपरावती । यादर्वाव । तिवार्त्रा-
३ २ ऽ २ २ १र र
१हा२न् । अता३ः । औ३हो३वा । त्वागीर्भिर्द्युग-
२ १ १ ३ ५र र
दिन्द्राके१शिभि२ः । सुता२३ । वाँ२आ२३४औहो-
२ १ रऽ १ ३ १ १ १ १
वा । ए३ । विवा२सती२३४५ ॥ १ ॥

४ ५ ४र ५ र ४ ५ ४ २र १ ७
II यच्छक्रासिपरावतियदोहाइ । र्वावा३ताइवृत्राहा

---

३२ ऋग्वेदस्य ६,६,२६,४ = आरण्यके ८०१—२इति द्वे ।

I,II द्यौते, द्वैगते वा ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २　　३र २　　१　२　　१ २
२३४न्। अता३४स्त्वागाइ। भाइद्यगदि। द्राके१-
१　　　१ ३　५र र　　१ र
शिभा २ः। सुता२३। वा७२आ२३४औहोवा। विवा-
१ २ १ १ १ १
२सति२३४५॥ २॥ ३२

हे "शक्र" शत्रु-हनन-समर्थेन्द्र! "यद्" यदा "परावति" विप्रकृष्टे दूरे द्युलोक-देशे "असि" विद्यसे। हे "वृत्रहन्" वृत्रस्य हन्तरिन्द्र! "यद्" यदि वा "अर्वावति" अर्वाचीने तस्मादधस्तात् स्थिते तदपेक्षया समीपे देशेऽन्तरिक्षे भवसि तस्मादपि। "अतः" अस्माद्भूलोकाद्वा हे "इन्द्र"! "द्युगत्"(१) (गम्ऌ, सृप्ऌ, गतौ। क्विपि "गमः क्वौ" विति अनुनासिक-लोपः। तुक्। "सुपां सुलुगिति" भिसो लुक्। द्युलोकं प्रति गच्छद्भिः स्वभासा-सर्वतोगच्छद्भिः "केशिभिः" केशवद्भिः हरिभिरिवस्थिताभिः "गीर्भिः" "त्वा" त्वां "सुतवान्" अभिषुत-सोम-वान् यजमानः "आविवासति" आत्मीयं यज्ञं प्रति आगमयति। त्वामेतैः स्तोत्रैः परिचरति वा(२)॥ २॥ ३२

(१)—'द्युगत् क्षिप्रम्'-इति वि०। 'द्युगत्'-इति निघण्टौ क्षिप्रनामसु तयोविंशतितमम् पदम् (२, १५।

(२)—'रेभआत्मानमेव परोक्षरूपेण प्रतिनिर्द्दिशति। रेभोनामायमृषिः परिचरतीत्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

वत्सऋषिः *।

३ १ २ ३ १र २र ३ १ २ ३ २ ३ १र २र

अभिवोवीरमन्धसोमदेषुगायगिरामहाविचेतसम्।

३ २ ३ १ २ ३ २ ३ २ ३ १ २

इन्द्रनामश्रुत्यꣳशाकिनंवचोयथा॥ ३॥ ३२

५ ४ ५र र ४ ५ ४ २र १ १

I अभिवोवीरमन्धसाः। मदेषूइगाया२। गिरा-

३ १ २ ३ २ ४ ५ र ४ १ २र

माहा३। वोचेता२३४साम्। इन्द्रन्नामा। श्रुत्यꣳशा-

१ ३ ५र र २र १ ३ १ १ १ १

कार्इ। ना२३४औहोवा। वचोउपा२३४५॥ ३॥ ३२

इयं पिपीलिकमध्या(२) बृहतीति बह्वृचाः आद्यन्त्यौ पादौ त्रयोदशाक्षरौ, मध्यमोऽष्टाक्षरइति त्रिपदा। [हे उद्गात्रादयः! "वः" यूयम् (अथवा हे यजमानाः वो युष्माकं) "हिताय" "अन्धसः"

---

* 'वसुर्नाम ऋषिः'-इति वि०।

---

३२ ऋग्वेदस्य ६,४,२,४।

I कार्त्तयशं, कार्त्तवेशं वा।

(२)—'पिपीलिकमध्येत्यौपमिकम्, पिपीलिका पेलते र्गतिकर्मणः'-इति यास्कः दै० १, १९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

भरद्वाजऋषिः* ।

१ २ ३ १ २ ३२ ३१२ ३ १२
इन्द्रत्रिधातुशरणन्त्रिवरूथꣳस्वस्तये† ।
३ १२ ३ १ २ ३ १ २ ३ १ २ ३ १ २
च्छर्दिर्यच्छमघवद्भ्यश्चमह्यञ्चयावयादिद्युमेभ्यः ॥४॥३४

४ ४ २ १ र २ १
I इन्द्रत्रिधा५तुशरणाम् । त्रिवरूथꣳसुवस्तयाइ ।

सोमस्य "मदेषु" उत्पाद्यमानेषु सत्सु "वीरं" शत्रूणां वीरयितारं । "नाम" शत्रूणां नामकं । "विचेतसं" विशिष्ट-प्रज्ञं "श्रुत्यं" सर्वत्र श्रोतव्यं स्तुत्यं(३)। "शाकिनं" शक्तिमन्तम्(४) ईदृशम् "इन्द्र" ! "महा"(५) महत्या "गिरा" स्तुत्या "वचो" वाग्युक्त-

* 'संयुराह'-इति वि० ।

† "स्वस्तिमत्"-इति ऋग्वेद पाठः ।

३४ ऋग्वेदस्य ४,७,१८,४ ।

I इन्द्रस्य शरणम् ।

(३)—विवरणकारस्त्वेवं व्याचष्टे— कमिव स्तुहि ? उच्यते—'श्रुत्यं वचो यथा' श्रुतौ भवं श्रुत्यं, वचः वचनम् । यथा कश्चित् श्रुतौ भवं वचनं सत्यार्थत्वेन स्तौति तद्वत् स्तुहीत्यर्थः ।

(४)—शकनं शाकः शक्तिः, सा यस्यास्ति, तम् ।

(५)—'महः' इति निघण्टौ महन्नामसु प्रथमं पदम् ३, ३, सुपां सुलुगित्याद्यरूपम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ १ ७ २ र
छर्दियीर३च्छा। माघवङ्गर:। चामह्यार३च्चा। या-

१ २ १ १ २ ४ ५ ४
वयार३दी। द्यूमे२भिया। ओ३होवा। होऽ५इ।

डा॥४॥ ३४

दीया "यथा" येन प्रकारेण प्रवर्त्तते गायत्र्या त्रिष्टुभा वा तथा "गाय" गायत स्तुतिं कुरुत॥ ३॥ ३३

हे "इन्द्र"! "त्रिधातु" त्रिप्रकारं त्रिभूमिकं(२)। "त्रिवरूथं" त्रयाणां शीतातपवर्षाणां वारकं(३)। "स्वस्तये" अविनाशाय "छर्दिः" छर्दिष्मत् आच्छादन-युक्तम्। एवं-गुण-विशिष्टं "शरणं" गृहं(४)। "मघवद्भ्यश्च" मघं हविर्लक्षणं धनं तद्वद्भ्यस्ग्रास्मदीयेभ्यो यजमानेभ्यः "मह्यं" भरद्वाजाय "च" "प्रयच्छ देहि। अपिच। "एभ्यः" सकाशात् "दिद्युं" शत्रु-प्रेरितं द्योतमान मायुधं(५) "यवय" पृथक्कुरु॥ ४॥ ३४

---

(२)—'धातुशब्देन रसा उच्यन्ते। त्रयो रसाः, देव-पितृ-मनुष्योपभोग्याः। अथवा धातवः, काम-क्रोध लोभादय स्तैर्विमुक्तम्। अथवा सुवर्ण-रजत-माणिक्यैः त्रिभिः धातुभिः युक्तं यत् त्रिधातु-शरणं गृहम्'-इति वि०।

(३)—तच्च ग्रीष्म वर्षा-हेमन्त षु चन्दनागुरुकुङ्कुमादिरूपम् विवरण-सम्मतम्।

(४)—'छर्दि'-रिति यद्यपि गृहनामसु (नि० ३,४,१८) पठितम्, तथापि शरणमित्यनेन पौनरुक्त्य-प्रसङ्गात् क्रियानिमित्तं द्रष्टव्यम्। छर्दिर्दीप्तिदेवनयो रित्येतस्य दीप्त्यर्थस्येदं रूपम्। समृद्ध्या दीप्तमित्यर्थः'-इति वि०।

(५)—'दिद्युत्'-इति वज्र-नामसु प्रथमं पदम् (नि०२, २०)। 'दिद्युं देय मस्मभ्यम्'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

नृमेधऋषिः*।

१ २ ३ २ ३ १र २र
आयन्तइवसूर्यं विश्वेदिन्द्रस्यभक्षत।

१ २ ३ १र २र ३ १ २ ३ १ २ ३ १र २र
वसूनिजातोजनिमान्योजसाप्रतिभागन्नदीधिमः† ॥५॥३५

५र ५र ५ १
I आयन्तीयम्। आयन्तइवसू४रायाम्। विश्वा२-

हे अस्मदीयाजनाः! "आयन्तइव सूर्यं" यथा समाश्रिता रश्मयः "सूर्यं" भजन्ते तथा "इन्द्रस्य" "विश्वेत्" विश्वान्येव धनानि "भक्षत" भजत। स च यानि "वसूनि" धनानि "जाते" उत्पन्ने "जनिमानि" जायमाने जनिष्यमाणे च "ओजसा" बलेन करोति अतो "भागं न" पित्र्यं भागमिव तानि धनानि "प्रति-दीधिमः" प्रतिधारयेमेति [यद्वा। 'आयन्तइव सूर्यं' यथा समा-

---

* 'नृमेधसआर्षम्'-इति वि०।
† "दीधिम"-इत्यपि पाठः क्वचिदृग्वेदीय-पुस्तके दृश्यते।

---

३५ उत्तरार्च्चिकस्य ५,२,१४,१ = ऋग्वेदस्य ६,७,३,२ = ऊहे प० द्वि०९—१४द०द्वि०२=ऊह्ये द्वि०१६—१९—द० द्वि०७।

I आयन्तीयम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ १ १ २ २ २ १२ २२
इदिन्द्रा२। स्वभा२वाता। वासूनिजातोजनिमा।

१ २ १ २२ १ ऽ२ १ २
नियोजा१सा२। प्रतिभागन्नदी२धिमः। प्रा२३ती।

२ २ २ १२ ३२ १ ५ २११
भागान्ना३दा। ऊम्। धिमा३ः। ओ२३४वा। हे२३-

११
४५॥ ५॥ ३५

श्रिता रश्मयः सूर्यमुपतिष्ठन्ते तथा "इन्द्रस्य" "विश्वा" विश्वानि धनानि विभक्तुमिच्छन्तः समाश्रिता मरुतः इन्द्रमुपतिष्ठत इति शेषः। उपस्थाय च मरुतो 'वसूनि' उदक-लक्षणानि धनानि "जाते" जायमानाय "जनिमानि" जनिष्यमाणाय(१) मनुष्याय "ओजसा" बलेन "भक्षत(२)" विभजन्ते। तत्र चास्माकं यो भागः तं "भागं" (नेति सम्प्रत्यर्थे) प्रतीत्येषः अनुद्दत्येतस्य स्थाने। "अनुदीधिमः' वयमनुध्यायेम(३)। [तथाच यास्कः—(नै०६,८) "समाश्रिताः सूर्यमुपतिष्ठन्तेऽपिवोपमार्थे स्यात्सूर्यमिवेन्द्र मुपतिष्ठन्त

(१)—'जाते'-'जनिमानि' द्वेऽप्येते प्रथमैकवचने चतुर्थ्येकवचनस्य स्थाने द्रष्टव्ये। जाताय, जनिष्यमाणाय च भूतग्रामस्यार्थाय इति वि०।

(२)—शब्दोऽप्ययं भक्षि वि-पूर्वो द्रष्टव्यः।

(३)—'यथा कश्चित् पित्र्यस्य चार्थस्य साधारणस्य भागं ध्यायति, तद्वदयं तानि विभज्यमानानि उदकानि अनुध्यायामः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

पुरुहन्मा ऋषिः।

२ १२ ३१र २र ३१ २
नसोमदेवआपतदिषन्दीर्घायोमर्त्त्यः।
१२ ३ १र २र ३ १२३२ ३ १२ ३ १२
एतग्वाचिद्यएतशोयुयोजतइन्द्रोहरी*युयोजते॥६॥३६

३ ४र ३ ४र ५ र २ २ १
I नसोमदेवआ। हाइहाइइ। पा२३४। तत्पतो-
५ १ १र १ ७
वा। इषऽऽहो२इ। दोर्घाहो२। योमर्त्तायार२ः।

इति सर्वाणीन्द्रस्य धनानि विभज्यमाणाः स यथा धनानि विभजति जाते जनिष्यमाणे च तं वयं भ.गमनुध्यायामौजसा बलेनेति॥

"जनिमानि" "जनिमानः"-इति च पाठौ॥ ५॥ ३५

---

* "हरीइन्द्र"-इति व्यतिक्रमपाठश्च ऋग्वेदीयः।

---

३६ ऋग्वेदस्य ६,५,८,२।

I वाम्नम्, आचीलं वा।

७०क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २र १ २ ३ ३ २
आइतग्वाचित्। यआइताशो। युपाउवा३। ऊ३४-
५ १ १ १ १ १
पा। जता२३। आइन्द्रो२हारी२। युयो२३। जा-
३ ५र र २ ५
२ता२३४औहोवा। ऊ२३४पा॥ ६॥ ३६

हे "दीर्घायो"! नित्येन्द्र! सः "अदेवः" इन्द्राख्य-देव-रहितः "मर्त्यः" मरण-धर्मा मनुष्यः "सीं" सर्वं(१) "इषम्" अन्नं "नापतत्" न प्राप्नोति। "योमर्त्यः" यस्येन्द्रस्य "एतग्वाचित्" एतवर्णाविवाश्वौ भवतोऽभिमत-देश-गमनाय सः "एतशः" एतशौ(३) "युजोजते" योजयति रथे, यत्तं गन्तुम्। (यस्येन्द्रो हरी युजोजते न स्तौति स न प्राप्नोतीति समन्वयः।

**"आपतत्"-"आपद्"इति च पाठौ। "एतशः"-"एतशाः"-इति पाठौ॥ ६॥ ३६**

---

(१)—'सीमिति पदपूरणः'-इति वि०।

(२)—ईषमिति निघण्टौ अन्ननामसु चतुर्दशम्पदम् (२, ७)।

(३)—'एतग्वा'-इति निघण्टावश्वनामसु नवमम् पदम्; 'एतश'-इति च दशमम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

नृमेध-पुरुमेधावृषी ।

२ ६ १२ ३२३ १२ ३१२
आनोविश्वासुहव्यमिन्द्रᳬ*समत्सुभूषत ।

४र ५ ४ ५ २१ १
I आनः । एविश्वा । सुहाव्या२म् । आइन्द्रᳬ
२ १२ २ ३ ५ २ २ १२र
सम । त्सुभू१षाता । ऊ२३४पा । हा३हाइ । ब्रह्मा-
२ २र ३ २१ २१ २ १ २
णिसवना । निवृत्रहान् । परमा२३ज्याः । आर्चा३-
२ १ २ ४५ ४
हाइ । षमा । औ३होवा । होपूइ । डा ॥ ७ ॥

५र र र र४ ५ १ र र
II आनोविश्वासुहाहाव्याम् । इन्द्रᳬसमत्सुभूषतो ।
२ २१ २१ २१ १
पव्रा२३ह्मा । णिसवना । निवृत्रहान् । परमा२३ज्याः ।
१ २ ३ १ २ ४ ५ ४
आर्चा३हाइ । षमा । औ३होवा । होपूइ । डा ॥ ८ ॥

५र र र ४ ५ २ र
III आनोविश्वासुहाव्याम् । इन्द्राम् । समत्सभूषत ।

---

* "हव्यइन्द्र"-इति च ऋग्वेदीयः पाठः ।

---

I,II,III ग्रात्राणि वा, वासिष्ठानि वा, वैयश्वानि वा, आ-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ ३ १ २ ३ १ २
उपब्रह्माणिसवनानिवृत्रहन्परमज्याऋचीषम* ॥ ॥३७

१ २ र ४ १ २
उपाब्रा१ह्मा२। णिसवनानिवृत्रहन्। परामा१ज्या२:।
१र २ १
ऋचीषा२३मा३४३। ओ२३४५इ। डा ॥८॥ ३७

हे स्तोतारः! "विश्वासु" सर्वासु असुर-युद्धेषु "हव्यं" सर्वैर्देवै रात्म-रक्षार्थं माह्वातव्यम्। एतादृशम् "इन्द्रम्" उद्दिश्य "नः" अस्माकं यज्ञे "ब्रह्माणि" स्तोत्राणि हवीरूपाण्यन्नानि वा "उपभषत" अलङ्कुरुत प्रेरयत। हे "वृत्रहन्" वृत्रस्यासुरस्य पापस्य वा हन्तः! "परमज्याः" युद्धेषु शत्रु-हननार्थं परमा अविनश्वरा ज्या मौर्वी यस्य तथोक्तः। यद्वा परमान् बलेन प्रकृष्टान् शत्रून् जिनाति हिनस्तीति परमज्याः हे "ऋचीषम"(१)! स्तुतिभि रभिमुखीकरणीयेन्द्र! एतादृशस्त्वं सवनानि प्रातः सवनादीनि त्रीणि "ब्रह्माणि" स्तोत्राणि च "उपभूषत" अलङ्कुरुत।

"भूशतः"-"भूशतु"-इति पाठौ। "वृत्रहन्"-"वृत्रहः" इति च॥ ७॥ ३७

---

* "ऋचीषमः"-इत्युत्तरार्च्चिक-व्याख्यायां सायणाचार्य्यः।

---

३७ उत्तरार्च्चिकस्य ७,१,२,१ = ऋग्वेदस्य ६,६,१३,१ = ऊहे द०३—द्वा०२०।

श्वानि वा, शौल्कानि वा, सुम्नानि वा, द्युम्नानि वा, पृष्ठानि वा, यौक्ताश्वानि वा, सोमसामानि वा इमानि त्रीणि।

(१)—ऋचीषम इति हि ऋच स्तुतावित्यस्य रूपम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी ।

वसिष्ठऋषिः* ।

१र २र　३ २३ १ २　३ २
तवेदिन्द्रावमं वसुत्वं पुष्यसिमध्यमम् ।

३ १र २र　३ १ २　३ १ २ ३ १ २
सत्रा विश्वस्यपरमस्यराजसिनंकिष्टा गोषु वृण्वते ॥८॥३८

४ र　४　१ २　१　२
I तवेदिन्द्रा५वमंवसु । त्वंपुष्यसिमध्यमम् । सात्रा-

३　५　१ २ १ २ र　१ २ ३　५
वा२३४इश्वा । स्यापरमस्यराजसि । नकिष्टा२३४गो ।

१ ०　२　१ २ १　२र
षूवृण्वा२३ताइ । होवा३होइ । हो । वाहा३१उवा-

१ १ १ १
२३४५ ॥ १० ॥ ३८

हे "इन्द्र" ! "अवमम्" अधमं त्रपु सीसादिकं "वसु" धनं। यद्वा । भौमं वसु अवमं "तवेत्" तवैव । "त्वं" त्वमेव "मध्यमं"

---

* 'प्रगाथः इन्द्रमाह'-इति वि० ।

---

३८ ऋग्वेदस्य ५,३,२०१ = आरण्यके प्र०२०—२१—द्वि० ४—५ ।

I प्रजापतेः, निधनकामम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

मेधातिथिर्मेध्यातिथिश्च ऋषिः।

१२र ३ १ २ २ २ ३ २ ३ १ २
क्वेयथ क्वेदसि पुरुत्रा चिद्धि ते मनः।

१ २ ३ १ २ ३ १ २
अलर्षि युध्म खजकृत् पुरन्दर प्र गायत्रा अगासिषुः ॥९॥३९

५र २ र १ १ १र
I क्वेयथा। कुवेदसा२इ। औहो२। औहोइ।
२ ५ २ १र २ र १ १
औ३हो२३४वा। पुरुत्राचाइत्। द्धितेमना२ः। औहो-
१र २ ५ २ १ २र १
२। औहोइ। औ३हो२३४वा। अलर्षियू। धाख-
१ १र २ ५
जकृ२त्। औहो२। औहोइ। औ३हो२३४वा।

वसु रजतहिरण्यादिकम् आन्तरिक्षं वा "पुष्यसि"। "विश्वस्य" सर्वस्य परमस्योत्तमस्यापि रत्नादे र्दिव्यस्य वा वसुनो "राजसि" ईशिषे "सत्रा" सत्यमेव(१)। अपिच। "त्वा" त्वां "गोषु" निमित्तेषु "न किर्वृण्वते" केऽपि न वारयन्ति॥ ८ ॥ ३८

---

३९ ऋग्वेदस्य ५,७,११,२।

I इन्द्रस्य।

(१)—'सत्रा'-इति निघण्टौ सत्यनामसु ततीयं पदम् (३,१०)। 'सता सर्वदा'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २र १ १ १र २
पुरन्दरा । प्रगायाचारः । औहोर । औहोइ । औ-
१ १ १ १ ५ ३ २ १ ३ ५र र २ १
इहोर३४वा । अगा३ । सार२इषूर३४औहोवा । सुश्र९-
१ १ १ १
सार३४५ः ॥ ११ ॥

४ ५ ४ ४ १ २र १ २
II कुवाकुवा । यथा । कुवेद्साइ । ऊवाइ । औ३-
१ १ १ १ २ १र २र १ २
होर३४५ । पुरुत्वाचाइत् । हितेमनाः । ऊवाइ । औ-
१ १ १ १ २ १ २र १ २
इहोर३४५ । अलर्षियू । ध्माखजकृत् । ऊवाइ । औ-
१ १ १ १ २ २ २र १ २
इहोर३४५ । पुरन्दरा । प्रगायात्राः । ऊवाइ । औ-
१ १ १ १ ३ २ १ ३ ५र र २
इहोर३४५ । अगा३ । सार२इषूर३४औहोवा । सुश्रा-
१ १ १ १ १
३९सार३४५ः ॥ १२ ॥

२र १ ५ ५ २र १
III क्वयथकूरवाइदार३४सी । पुरुत्वाचित् । हिता-

---

II,III वसिष्ठस्य वा ; प्रियाणि त्रीणि ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

कलिर्ऋषिः।

३ १ २ ३ १र २र ३ २ ३ १ २
वयमेनमिदा ह्योपीपेमेह वज्रिणम्।

२ १ २ १ २ २
इमा२३नाः। आलर्षि। युध्माखजकृ३त्। हाउवा।

१ २ र १ १ १ ३
पुरन्दा२३रा। प्रगायात्रा२ः। अगा२३। सा२इषू२-

५र र ३ १ १ १ १
३४औहोवा। सु२३४५॥ १३॥ ३९

हे "इन्द्र"! "क्व" कुत्र देशे "इयथ" गतवानसि पुरा? "क्वेत्" कुत्र वा "असि" भवसि इदानीं वर्त्तसे? "पुरुत्राचिद्धि" बहुषु हि "ते" त्वदीयं "मनः" सञ्चरति। हे "युध्मकृत्" युद्ध-कुशल!। "खजकृत्" युद्धस्य कर्त्तः(१) हे "पुरन्दर" असुराणां पुरां दारयितर्हे इन्द्र! "अलर्षि" आगच्छ(२)। "गायत्राः"(३) गान-कुशला अस्मदीयाः स्तोतारः "प्रगासिषुः" प्रगायन्ति स्तुवन्ति। (अलर्षीत्येतत् दाधर्त्यादौ(४)निपात्यते॥ ९॥ ३९

---

(१)—'खजे'-इति निघण्टौ सङ्ग्रामनामसु ऊनचत्वारिंशत् पदम् (२,१७)।

(२)—'अलर्षति'-इति निघन्तौ गति-कर्मसु दृश्यते (२,१४)।

(३)—'मन्त्राः'-इति वि०।

(४)—दाधर्त्ति दर्धर्त्ति दर्द्धर्षि बोभूतु तेतिक्ते ऽलर्ष्या ऽऽपनीफणत् संसनिष्यदत् करिक्रत् कनिक्रदत् भरिभ्रत् दविध्वतो दविद्युता तरित्रतः सरीसृपतं वरीवृजत् मर्मृज्यागनीगन्तीति च (पा० ७।४।६५॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ १र २र ३ २ ३ २ ३ १ २ ३ २
तस्माउ अद्यसवने सुतं *भरानूनं भूषतश्रुते ॥ १० ॥ ४०

॥ इति तृतीय-दशति ॥ ३ ॥

५ र १ ३ ५र र २
I वयमेनाम् । आ२इदा२३४औहोवा । ह्यो२३४

५ १ र २र र १ १ १
याः । अपोपेमेह्ववज्रिणम् । तास्मा२ऊवा२ । द्यसव-

७ र १र २ १ २र १
नाइ । सूतम्भारा२ । आनूना२३भू । षातश्रुते । इ-

२ १
डा२३भा३४३ । ओ२३४५इ । डा ॥ १४ ॥

५ र १ १ २ १र २र
II वयमेनाम् । इदा२ह्यायाः । अपौहोइ । पे-

१र ३ २र १ २ र १ २र १
मौहोइ । इ । ह्यावज्रिणाम् । तस्माउवा । द्यासव-

"वयं" यजमानाः "एनं" वज्रिणं वज्र-युक्तमिन्द्रं "इदा" इदानीं । "ह्यः" श्वः अतीतेऽह्नि । "इह" यत्राहर्गणे "अपोपिम"

---

* "समनासुतम्"-इति ऋग्वेदीयः पाठः ।

---

४० उत्तरार्चिकस्य ८,२,१३,७=ऋग्वेदस्य ४,४८(३१), २=ऊहे षो० द्वि० ५ ।

I,II इन्द्रस्य, वसिष्ठस्य वा वैरूपे ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र १ २र १र २ १र २र १ २
नाइ। सूतम्भरा। आनौहो। नम्भौहो। षातश्रुता-
२ ५
३१उवा२३। ऊ३४पा॥ १५॥

४ ३ ४र ५ र ३ २ २ ५ ४ ५
III वयमेनमिदा। ह्यियँ। ओ२३४वा। इयाहाइ।
२ १ १ र र र ७ १ र
ऊवेहो२इ। अपीपेमेहावज्रिणा२म्। तस्माउअद्य-
७ ८ २ र १र ५
सवनाइ। सूतम्भारा२। ई३या। आनूना२३४भू।
२ १ २ १ १ १ १ १
षताश्रू२३४५ता६५६इ। अवा३सा२३४५इ॥ १६॥ ४०

आप्याययाम(१) सोमेन। "तस्माउ"तस्मादेव "अद्य" अत्र "सवने" "सुतम्" अभिषुतं सोमं "भर" हर हे अध्वर्यो!। "नूनम्" इदानीं "श्रुते"(२) सति "आभूषत" अलङ्कुरुत॥ १०॥ ४०

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयाध्यायस्य चतुर्थः खण्डः॥ ४॥

---

III इदञ्चेन्द्रस्य वसिष्ठस्य वा वैरूपम्।

(१)—प्यायी ओ प्यायो वृद्धा वित्यस्य रूपम्।

(२)—'श्रुते सप्तम्येकवचनमिदं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यं, श्रुताय विश्रुतायेत्यर्थः'-इति वि०।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमि खण्डे—

सैषा प्रथमा ।

पुरुहन्मा ऋषिः* ।

१र　२र　३२उ　२ १ २　३ १ २
यीराजाचर्षणीनांयातारथेभिरध्रिगुः ।

१ २　३१र २र　३ २ ३ १ २ ३ २　३ २
विश्वासान्तरुतापृतनानांज्येष्ठंयोवृत्रहागृणे ॥ १ ॥ ४१

२५ र　२　४　४　५　१ र २ र　१ २
I यीराजा३चर्षणाइनाम् । यातारथे । भिराध्रा-

१　१　२　१ २
१इगू२ः । ध्राइगू२ः । वाइश्वासा३म् । तरुता३ ।

१　२　१ २　३　५　१　२ र १
तरुता३ । पार्त्तना२३४नाम् । ज्याइन्द्रयोवा । त्रा-

२　३　५　४　४
हागा२३४णाइ । त्रहापूगृणाइ । होपूइ । डा ॥ १७ ॥

---

* 'पुरुहन्मन आर्षम्'-इति वि० ।

† "ज्येष्ठो"-इति ऋग्वेदीयः पाठः ।

---

४१ उत्तरार्चिकस्य ३,१,१५,१ = ऋग्वेदस्य ६,५,८,१ = ऊहे द्वि० द्वि०१४—स०द्वि०७—अष्टा०द्वि०१३ ।

I पौरुहन्मनम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

भर्गऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २
यतइन्द्रभयामहेततोनोअभयंकृधि।

२र र ४र ५ ३ २ ५ १र र र २ १
II योराजा३च। षणा३२३४इनाम्। यातारथेभिर-

२ १ र र र र २ १
ध्रार२३इगुः। विश्वासान्तरुतापृतना२३नाम्। ज्या२३इ-

२ १ २ १ २ १ ५ ४ ५
ष्ठाम्। योवृत्रहोवा३ओ२३४वा। गापुरुाँईहाइ॥१८॥४१

"विश्वासां" सर्वासां "पृतनानां" सेनानां "तरुता"(१) तारकः। यस्य ज्येष्ठः गुणैर्गरीयान्। "यः" च "वृत्रहा" वृत्रं हतवान्। तं "ज्येष्ठं" सर्वं रतिशयेन प्रशस्यम् अधिकं वृद्धं वा महाभागमिन्द्रं "गृणे" स्तौमि॥ १॥ ४१

---

II प्राकर्षम्।

(१) — "प्रसित-स्कभित-स्तभितोत्तभित-चित-विकस्ताविशस्तृ-शंस्तृ-शास्तृ-तरुतृ-तरूतृ-वरुतृ-वरूतृ-वरुत्री-रुज्ज्वलिति-क्षरिति-क्षमित्यमिति च (पा०७।२।३४)"-इति सिद्धम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ २उ ३ १ २ ३ २ ३ २उ ३ १र २र
मघवञ्छग्धि तव तं न ऊतये* वि द्विषो वि मृधो जहि ॥२॥४२

५ २ ४ ५ ४र ५ १र र २
I यतआ३इन्द्राभयामहाइ। ततोनोअभयङ्कार३इर्ों।
१ २ १र २ १ २ १
मघवंछग्धितवतन्नऊता२३याइ। विद्वाइषोर२३वो। मा-
र २ १ २ १
ईंजहि। इडा२३भा३४३। ओ२३४५इ। डा॥१९॥४२

हे "इन्द्र"! "यतः" हिंसकात् "भयामहे" वयं "ततः" "नः" अस्मभ्यम् "अभय" "कृधि" कुरु। हे "मघवन्"! "शग्धि"(१) शक्तो भवसि "नः" अस्मभ्यमभयं कर्त्तुं। "तव" "ऊतये" रक्षणाय "विजहि" "द्विषः" अस्मद्द्वेष्टॄन्। "मृधः" अस्मद्धिंसकान्(२) "वि" जहि(३)॥ २ ॥ ४२

---

* "ऊतिभिः"-इति ऋग्वेदीयः पाठः। उत्तरार्चिकभाष्ये सायण-सम्मतश्च।

---

४२ उत्तरार्चिकस्य ५,२,१५,१ = ऋग्वेदस्य ६,१,२४,४ = ऊहे प० द्वि०१०।

I इन्द्रस्य; अभयङ्करम्।

(१)—'शग्धि याचामहे तव स्वभूतं तत् अभयम्'-इति वि०। 'शग्धि'-इति निघण्टौ याच्ञाकर्मसु पञ्चमं पदम् (३,१९)।

(२)—मृध इति सङ्ग्राम-नाम (नि०२,१७,२)। मृधं करोति, "तत् करोति"-इति णिच्, मृधयति-एन्तात् क्विपि रूपं साध्यम्।

(३)—वीत्युपसर्गश्च तेर्ज्जहीत्याख्याताभ्यासः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र　　　　र　　　　१　　　　र　　　२१र
I अभीषतस्तदाहाउ । भरा । इन्द्रज्यायः कनीया

२　　　र १　　　　२ १र　　　२　　१
२३सः । पुरूवसुर्हिमघवन्बभूवार३इथा । भराइभार३-

२　　१ २　　　१　　२　　　　१
रे । चहव्यः । इडा२३भा३४३ । औ२३४५इ । डा ॥

॥ ३० ॥ ७७

हे "ज्यायो" ज्यायन्निन्द्र ! ("आमन्त्रितं पूर्वं मविद्यमानवदि-तीन्द्रपदस्याविद्यमानवद्भावात् ज्यायइत्यस्य सर्वानुदात्तत्वाभावः । नकारस्य रुत्वं(१) व्यत्ययेन नुमभावो वा(२) "कनीयसः" सतो मम "तत्" प्रसिद्धम् । "अभ्याभर" अभ्याहर । हे "मघवन्" धनवन्निन्द्र ! "पुरुवसुः" बहुभिर्वननीयो "बभूविथ" असि । "भरे भरे" सङ्ग्रामे(३) "च" "हव्यो" हातव्यश्च बभूविथ(४) ॥

"मघवन् बभूविथ"-इति छन्दोगाः । 'मघवत्सनादसि"-इति बह्वृचाः ॥ ७ ॥ ७७

---

I समुद्रप्रैयमेधम् ।

(१)—"दसम्बुद्धौ (८,३,१)"-इति ।

(२)—"व्यत्ययोबहुलम् (३,१,८५)"-इति ।

(३)—'भरे' इति सङ्ग्रामनामसु पठ्यमं नैघण्टुकम् (२,१७) ।

(४)—'एतदुक्तं भवति—यस्मात् ईश्वरः प्रभुश्च तस्मादाभरेत्यर्थः'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ र २र
यदिन्द्रयावतस्त्वमेतावदहमीशीय।
३ २ ३ १ २ ३ १ २ ३ १ २
स्तोतारमिद्दधिषेरदावसोनपापत्वायरꣳसिषं ॥ ८ ॥ ७८

२ १ ४र ५ २र १र र र
I यदिꣳद्रा२३यावतस्तुवाम्। एतावदहमीशीया।
र र २ २र १ २ १र
स्तोतारा२३मीत्। दोधिषे। रदावा१सा२उ। नपापार३
५ १ २ ३ ५ ४ ५
४त्वा। यारौवा३ओ२३४वा। सा५इषो६हाइ ॥ ३१ ॥

५ २ २र ३ ४ ५ १ २ १ २ ४ ५
II यदिन्द्रयावतस्तुवाम्। आइता३। वादा३हामी।

हे "इन्द्र!" "यद्" यतो(१) "यावतो" धनस्य "ईशिषे" "एतावत्" (षष्ठ्यालुक्(२)) एतावतो धनस्य "अहमीशीय" ईश्वरो

---

७८ उत्तरार्चिकस्य ८,१,१२,१ = ऋग्वेदस्य ५,३,२०,३ = ऊहे २२,२० = ऊह्ये ५,२०—५,२२।

I,II वैरूपे द्वे।

(१)—'यच्छब्दो यदिमब्दस्यार्थे'-इति वि०।

(२)—सुपां सुलुगित्यादिना।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी ।

नृमेधऋषिः ।

१ २ ३ १ २　३ १र २र　३ १ २
त्वमिन्द्र प्रतूर्त्तिष्वभिविश्वाअसिस्पृधः ।

१ २　१ २र १　४ ५र　१ २
शाया३ऽ१२। स्तोतारामो२३त्। दधिषेरदा। वासा३

१ २र १　१ २ ३ ५　४
ऽ१२उ। नापापात्वार३। यारौवाओ२३४वा। सा५

५
इषोऽ६हाइ ॥ २२ ॥ ७८

भवेयम् । हे "रदावसो !" रदति ददाति वसूनीति रदवसुः(३) तादृश हे इन्द्र ततोऽहमस्मदीयं "स्तोतारम्" "इत् दधिषे" धनप्रदानेन धारयेयमेव । "पापत्वाय" क्षीणत्वाय(४) "न रंसिषं न दद्याम् ।

"स्तोतारमिद्दधिषेरदावसोनपापत्वायरंसिषम्"-इति छन्दोगाः । "दिधिषेयरदावसोनपापत्वायरासीय"-इति बह्वृचाः ॥ ८ ॥ ७८

---

(३)—रदावसो इति दीर्घमध्यपाठोऽस्ति क्वचि। "द्व्यचोऽतस्तिङः"-( ६,३,१३५,)"-इति तद्भाष्यम् ।

(४)—'पापभवाय पापात्मानः'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
अशस्तिहाजनितावृत्रतू*रसित्वं तूर्यतरुष्यतः ॥ ९ ॥ ७९

४ ५ ४ ५ र ४ ५ १ २ र
I त्वमिन्द्रोहाइ। प्रतूर्तिष्वोवा। आभिविश्वाः।
१ २ १ २ र र १ २
असाइस्पा१र्द्धा२ः। आशस्तिहाजनितावृ। त्रातू१रा-
१ २ ३ २ १ २ ४ ५ ४
सा२इ। त्वां तू१र्या२। तरुष्यता। औ३होवा। हो-

५इ। डा ॥ २३ ॥ ७९

हे "इन्द्र!" "त्वं" "प्रतूर्त्तिषु" सङ्ग्रामेषु(१) "विश्वाः" सर्वाः "स्पृधः" युद्धकारिणीः शत्रुसेनाः(२) "अभ्यसि" अभिभवसि किञ्च। हे "तूर्य!" शत्रूणां बाधक इन्द्र! त्वम् "अशस्तिहा" दैवानामशस्तीनां हन्तासि। "जनिता" असुरेभ्यः अशस्तीनां

---

* "विश्वतू"-इत्यपि पाठः क्वचिदृग्वेदीयपुस्तके दृश्यते।

---

७९ उत्तरार्चिकस्य ८,१,८,१ = ऋग्वेदस्य ६,७,३,५= आरण्यके ८,१,३४।

I वैश्वदेवम्।

(१)—प्रकर्षेण तूर्य्यन्ते हिंस्यन्ते यत्र, स प्रतूर्त्तिः सङ्ग्रामः।

(२)—'स्पृधः'-इति सङ्ग्रामनामसु ऊनविंशतितमं नैघण्टुकम् (२,१७)। स्पर्धं कुर्वन्ति इति स्पृधयतेः क्विपि स्पृधः सङ्ग्रामकारिणीः सेनाः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी ।

नोधाऋषिः* ।

१र २र ३ १र　२र　३ १र　१र ३ १ २
प्रयोरिरिक्त*ओजसादिवःसदोभ्यस्परि† ।
१ २　　२ १ २　३ १　२ ३ २ ३ १ २
नत्वाविव्याचरजइन्द्रपार्थिवमतिविश्वंववक्षिथ‡ ॥ १० ॥८०

॥ इति द्वितीय-दशति ॥

जनयिता चासि । "तुवतूः"(३) सर्वस्य शत्रुवर्गस्य हिंसिता चासि । "तरुष्यतः" बाधकांश्च(४) बाधमानोसि ॥ ९ ॥ ७९

---

* "मेधसआर्षम्"-इति वि० ।

---

* "प्रद्विरिरिक्त"-इति
† "दिवोअन्तेभ्यस्परि"-इति　} ऋग्वेदीयाः पाठाः ।
‡ "पार्थिवमनुस्वधांववक्षिथ"-इति च

---

८० ऋग्वेदस्य ६,६,११,५ ।

(३)—तूरिति तूर्यतेर्हिंसार्थस्य रूपम् ।

(४)—तरुष्यतिर्वधकर्मा तस्येदं रूपम्, तथाहि—"वनुष्यतिर्हन्तिकर्मा"-इत्यादि "तरुष्यतिरप्येवं कर्मेति नैरुक्तं द्रष्टव्यम् ५,२ । विवरणकारस्तु 'तरुषतिर्वधकर्मा, तरुषितु मिच्छन्ति वान् तरुष्यतः (ये त्वां हन्तु मिच्छन्ति तान्) प्रतिहिंसेत्यर्थः'-इति व्याचष्टे ।

७९ क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र र ५ २ १ ३र १
I प्रयोरिरिक्षओजसा३ए। दिवः सदोरभ्यस्परि। न

७ २र ३ १ १ २र ३ २
त्वाविव्या। औहोऽ३वा। चा। रजः। औहोऽ२वाइ।

१र २ १ २ १
इपार्थिवाम्। अतिवार३इ२श्वाम्। वावक्षिथ। इडा२-

२ १
३भा३४३। ओऽ२३४५इ। डा॥ २४ ॥८०

हे "इन्द्र!" यस्त्वं "दिवो" द्युलोकस्य "सदोभ्यः" स्थानेभ्यः(१) परिपर्यन्तेभ्यः "ओजसा"बलेनैव "प्र रिरिचे" प्रकर्षेणातिरिक्तो भवसि(२) (रिचेर्लिटि बहुलञ्छन्दसीति स्नुः। प्रत्ययस्वरः) किञ्च। हे इन्द्र! "पार्थिवं" पृथिव्यां भवं "रजो" लोकः "त्वा" त्वां महता स्व-शरीरेण "न विव्याच" न व्याप्नोति (द्यावापृथिवीभ्यामपि स्वतः स त्वं बलेन समर्थोऽसीत्यर्थः) एवम्भूतः स त्वम् अस्मान् "विश्वम्" "अति" अतिक्रम्य "ववक्षिथ"।

---

1 पुरीषम्।

(१)—'दिवः अवयवभूतानि सदःस्थानानि तेभ्यः। पञ्चमीनिर्देशात् आगत्येति वाक्यशेषः'-इति वि०।

(२)—'रिष हिंसायामित्यस्य मध्यमपुरुषैकवचने एतद्रूपं, यस्त्वं प्रकर्षेण हिंससीत्यर्थः। कान् सामर्थ्याच्छत्रून्'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वोढुमिच्छ(३) (वहेः सन्नन्तस्य छान्दसेलिंटि रूपं मन्त्रत्वादाम-भावः ॥

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवदार्थ-प्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्याष्टमः खण्डः ॥ ८ ॥

॥ इति बार्हतमैन्द्रम्(१) ॥

असावित्देवमेकोनत्रिंशत्तासु प्रबोमहे।
त्रिपद्योक्ताविराडन्यास्त्रिष्टुभोष्टोर्ध्वविंशतिः(१)।
ऐन्द्रीषु तासु तार्क्ष्यस्य स्तुति रेषा त्वमुष्विति।
पर्वतेन सहेन्द्रस्य गीरिन्द्रापर्वतेत्यपि(२) ॥

---

(३)—'ववक्षिथ'-इति महन्नामसु चतुर्दशं नैघण्टुकम् (३,३) अतएव 'महान् भवसी त्यर्थः'-इति वि० ।

(१)—इन्द्रदेवताका बृहतीच्छन्दस्काः सन्तिये मन्त्रास्तेषां प्रकरणं समाप्त मित्यर्थः।

(१)—असावि देवमित्यारभ्य कोषयेति ऋक्पर्यन्तं एकत्रिंशत्, तत्र असावीत्या-रभ्य ततचुरित्यन्तास्तृतीयदशदात्मका नवमखण्डात्मका वा ऋचो दश, ततः अवद्रप्सो इत्यारभ्य ओषधीष्वित्यन्तास्चतुर्थदशदात्मका दशमखण्डात्मका वा ऋचो नव, ततः त्वमूष्वित्यारभ्य सजोवादित्यन्ताः पञ्चमदशदात्मका एकादशखण्डात्मका वा ऋचो दशेति सङ्कलनयोनत्रिंशत्। तासु ऋक्षु प्रबोमहे-इति तु षोडशतमा, त्रिपदा इयं विराट् इत्युक्ता त्रिपाद्विराट्छन्दस्का इति पूर्वाचार्यैः कथितेत्यर्थः। 'अन्याः अष्टो-र्ध्वविंशतिः अष्टाविंशत्यृच ऋचः त्रिष्टुभः। इति सम्प्रति व्याख्यास्यमानानामृचां छन्दः-सङ्केतः।

(२)—ऐन्द्र-पर्व-गतानान्तु प्रकरणफलादैन्द्रत्वं सिद्धमेव, तासु ऐन्द्रीषु ऋक्षु त्वमुषु-इति विंशतितमा ऋक्, एषा तार्क्ष्यस्य मध्यमस्याजाग्निविशेषस्य [तदाह यास्कः—"तार्क्ष्यः त्वष्ट्रा व्याख्यातः (दै०४,२७)"-माध्यमिकस्त्वष्टे त्याङ्क्षर्मे.म.व स्थाने समाम्ना-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तत्र नवमखण्डे—

सैषा प्रथमा।

द्वयोर्वसिष्ठ ऋषिः।

१ २ ३ १र २र ३ २ ३क २र ३ १ २ ३ १ २
असाविदेवंगोऋजीकमन्धोन्यस्मिन्निन्द्रोजनुषेमुवोच।
१ २ ३ १र २र ३ २ ३ १ २ ३ १ २
बोधामसित्वाहर्यश्वयज्ञैर्बोधानःस्तोममन्धसोमदेषु॥१॥८१

I असौहोवा३हाइ। वो२३४दे। वाङ्गोऋ। जो-
कमन्धाः। न्यौहोवा३हा। स्मी२३४नी। द्रौजनु।
षेमुवोचा। बोधौहोवा३हाइ। मा२३४सी। त्वाहरि।

"देवं" दीप्तं(१) "गोऋजीकं" गोभिः संस्कृतं गव्येन मिश्रित-
मित्यर्थः(२)। "अन्धः" सोमरूप मन्नम् "असावि" अभिषुतम्।

---

८१ ऋग्वेदस्य ५,३,३,१ = आरण्यके ३,२९—३०।

I प्राकर्षम्।

तोऽग्निरिति प्राकपूर्णिः (दै० २,१२)] स्तुतिः; किञ्च 'इन्द्रस्यगीरिति सप्तविंशति तमा अपिच 'इन्द्रापर्वता'-इति षड्विंशतितमा ऋक्, इयमपि पर्वते न सह इन्द्रस्य स्तुतिः न केवलेन्द्रस्येत्यर्थः।

(१)—'देवं द्वितीयैकवचन मिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यं, देवस्य इन्द्रस्यार्थाय' -इति वि०।

(२)—गो-शब्देनेह गोविकारं गव्यम्, ऋजीकं च मिश्रम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ ३ ४ ५ २र र र २ ३ ५ २ १
अश्वयज्ञैः। वोधीहोवा३हाइ। ना२३४स्तो। ममन्ध।

२ २ ४
सो३४३। मा२दा५इषुई५६॥ २५॥

१ २ १ २ १र २ ३ ५
II आइही३। आइही। एहियां। ओ२३४वा।

२ र र र १ २ १ २
हाइ। असाविदेवङ्गोऋजीका३मान्धा३ः। आन्धाः।

३ २ ३ ५ २ र र
अन्धा। ओ२३४वा। हाइ। न्यस्मिन्निन्द्रोजनुषेमू३-

१ २ १ २ ३र २ ३ ५ २ र
वोचा३। वोचा। वोचा। ओ२३४वा। हाइ। बो-

र र १ २ १ २ ३ १ २
धामसित्वाहर्यश्वा३याज्ञ३ः। याज्ञैः। यज्ञां। ओ२३

५ २ र र र र १ २ १
४वा। हाइ। वोधानस्तोममन्धसे।मा३दाइषू३। आ-

२ २ २ ३ ५ २ १ २ १ २
इषु। एषुवा। ओ२३४वा। हाइ। आइही३। आइही।

---

II निहवः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

१ २ ३१२ ३१र २र ३१२
योनिष्ट इन्द्रसदनेअकारितमानृभिःपुरुहूतप्रयाहि।

३र २ ३ ५ २ ५र र ३ १११
एहियां। ओ२३४वा। हा३४। औहोवा। ई२३४५॥

॥ ३६ ॥ ८१

"ईम्" अयम्(३) "इन्द्रः" "अस्मिन्" अभिषुते सोमरूपेऽन्धसि "जनुषा"(४) स्वभावत एव "न्युवोच" नितरां सङ्गतो भवति(५) (उच समवाये) [अथ प्रत्यक्षस्तुतिः(६)-हे "हर्यश्व!"(७) "त्वा" त्वां "यज्ञैः" स्तोत्रैः हविर्भिर्वा "बोधामसि" बोधयामः। "अन्धसः" सोमस्य "मदेषु" "नो" अस्माकं "स्तोमं" स्तोत्रं "बोध" बुध्यस्व॥ १ ॥ ८१ *

---

(३)—निरुक्ते तु 'ईम्'-इति पदपूरणार्थे व्यवस्थितम्, तथाहि—"अथ ये प्रवृत्तेऽर्थे ऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति" नि०१,९। अत एव ईमिति पादपूरणः'-इति वि०।

(४)—'जनुषेति तृतीयैकवचनमिदं पञ्चम्येकस्य स्थाने द्रष्टव्यम्, पञ्चमी-निर्देशाच्च प्रभृतीति वाक्यशेषः, जन्मनः प्रभृति'-इति वि०।

(५)—'उवोच उक्तवान्'-इति वि०।

(६) बोधेति मध्यमपुरुषयोगादित्यर्थः। तथाहि—"अथ प्रत्यक्षकृता मध्यमपुरुष-योगास्त्वमिति चैतेन सर्वनाम्ना"-इत्यादि नि०७,२।

(७)—हरी हरिद्वर्णौ अश्वौ यस्य, हे तादृश!।

---

*॥ इति अर्द्धः प्रपाठकः॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ १ २  ३ २ ३ २ ३ २ ३ १ २  ३ १ २ ३ १ २
असोयथानोवितावृधश्चिद्दोवसूनिममदश्चसोमैः ॥२॥८२

४ ५ १ २ १ २ ३ ४ ५
I योनोः । तआइ । द्राइसद् । नाअकारी ।

४ ५ १ २ २ ३ ४ ५ ४ ५
तामा । नृभाइः । पुरुहूइ । ताप्रयाही । आसाः ।

१ २ १ २ ३ ४ ५ ४ ५ १
यथा । नोइअवि । तावृधश्चीत । दादाः । वसू ।

२ १ १ २ ४
नीइमम । दाइ४इः । चाइसोपमाई५६इ ॥१॥

१ २ ३ २ ३ ४ ५ ४ ५ १ २
II योनिष्टआइ । द्रसदनाइ । होवा । आकाइ ।

२ ३ ४र ५ ४ ५ १ २ २ ३ ४र ५
राइतमानृभीः । होवा । पू । हूइ । ताप्रयाही ।

हे "इन्द्र !" "ते" तव "सदने" "सदनार्थं "योनिः" स्थानम् "अकारि" । हे "पुरुहूत" बहुभिराहूतेन्द्र ! "नृभिः" नेतृभिर्मरुद्भिः(१) सार्द्धं "तं" योनिम् "आ प्रयाहि" । "नो"ऽस्माकं "यथा"

---

८२ ऋग्वेदस्य५,३,८,१ ।

I,II योनिनी द्वे ।

(१)—'नृभिः ऋत्विग्भिः'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

गात्वृर्षिः* ।

१ २ ३ २ ३ १ २ ३ २उ २ १ २ ३ १ २ ३ १ २
अदर्द्दरुत्समसृजोविखानित्वमर्णवान्बद्बधानाᳬअरम्णः ।

३ १ २ ३ १ २ ३ १ २उ ३ २उ ३ २ ३ १ २ ३ १
महान्तमिन्द्रपर्वतंवियदःसृजद्धाराअवयद्दानवान्हन् ॥२॥८२

४ ५ १ २र ३ २ ३र ४ ५ ४ ५ १ २
होवा । आसोयथा । नोअविता । होवा । वाड्डाइः ।

२ ३ ४र ५ ४ ५ १ २ ३ २ ३ ४र ५ ४
चाइद्दोवद्ध । होवा । नाइममदः । चसोमैः । हो-

५ ४
वा । होऽ५इ । डा ॥ २ ॥ ८२

"असः" भवसि । नोऽस्माकं "वृधश्चित्" वृधे वर्द्धनाय चासः । ("वृधेच"-इति बह्वृचाः) तथा "वसूनि" "ददो" ऽस्मभ्यं देहि । "सोमैः" अस्मदीयैः "ममदो" मादय च ॥ २ ॥ ८२

---

* "गृत्समदो नाम ऋषिः"-इति वि० ।

---

८२ ऋग्वेदस्य४,१,२२,१ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ ४ २ र १ २ १
I अदर्दृहूत् । समस्रजोविखानि । त्वमर्णा२३-

५ २ र र १ २ १र ५ २
४वान् । बद्बधानाँऽअराम्णाः । महान्ता२३४मी । द्रप-

१ २ १ ५ १२१२र १
र्वतंवियाद्वः । सृजाद्धा२३४राः । अवयद्दान । वा२३न्-

२ १
हा३४३न् । ओ२३४५इ । डा ॥ ३ ॥

हे "इन्द्र !" "त्वम्" "उत्सम्" उत्स्यन्दमानं मेघं "अदर्दः" विदारितवानसि । तदनन्तरं "खानि" मेघस्योदकनिर्गमनद्वाराणि(१) "व्यसृजः" विशेषेण सृष्टवानसि । किञ्च । "बद्बधानान्" "अर्णवान्" उदकवतो मेघान् "अरम्णाः" "विसर्जयसि" चारयसीत्यर्थः (अत्र रम्णातिर्विसर्जनकर्मा(२) ) हे इन्द्र ! "यत्" यस्त्वं (यदिति लिङ्गव्यत्ययः) "महान्तं" प्रभूतं "पर्वतं" मेघं(३) विवृत-

---

(१)—'खानि आकाशानि उदकाभिगमनशीलानीत्यर्थः ।

(२)—अन्यत्र संयमनकर्मेत्याह माधवः ।

(३)—पर्वतमिति मेघ-नामसु नवमम् ।

८०क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४५ ४ ५ ४ ५ ४ १र र
II, अदद्द्रुत्समसृजाः। विखानि। त्वमर्णवान्बद्ध-

र र २१ २ १र २१ २
धानाᳫँअरार३म्णाः। महान्तमिन्द्रपर्वतंवियार३द्वाः।

१ २र १२र १२र १ ५ २ ५र र
सृजाद्धारा२ः। अवा२यद्दान। वा२। या२३४औहो-

२ १११ १
वा। हा२३४५न्॥४॥८३

वानसि। "धारा" अपां "वि सृजत्" व्यसृजः विसर्जितवा-
नसि। "यद्" यदा "दानवान्" दनोः पुत्रान्। यद्वा। उदकस्य
दातॄन् मेघान् "अवहन्" अभिहतवानसि। [अत्र निरुक्तम्—
"अदृणा उत्समुत्सउत्सरणाद्वोत्सदनाद्वोत्स्यन्दनाद्वोनत्तेर्वाव्यसृजोस्य
खानि त्वमर्णवानर्णस्वत एतानित्यादि(४)]।

"वियद्वः सृजद्धारा अवयद्दानवान्"—"वियद्वः सृजो-
विधारा अवदानवं हन्—इति च पाठौ॥३॥८३

---

I,II औरुक्षये द्वे।

(४)—इत्यादि पदेनास्यापरांशोग्राह्यः, तथाहि—(एतानित्यस्यानन्तरम्) "माध्यमिकानस्यायान् बाबध्यमानानरम्णाः। रम्णातिः संयमनकर्मा विसर्जनकर्मा वा। महान्तमिन्द्र पर्वतं मेघं यद् व्यवृणोर्व्यवृणो ऽस्य धारा अवहन्नेनं दानवं दानकर्माणम्"-इति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

पृथीवैन्यऋषिः ।

२ १ २ २ १ २ ३ १ २ ३ १ २
सुष्वाणासइन्द्रस्तुमसित्वासनिष्यन्तश्चित्तुविनृम्णवाजम् ।
१ २ ३ १ २र३ २उ ३ १ २ ३ १ २
आनोभरसुवितंयस्यकोनातनात्मनासह्यामात्वोताः ॥४॥८४

४ ५ ४ ५ ३ २ २ २ ३ ५ ४ २
I ह्वष्वाणासाः । इन्द्रस्तु । मसित्वा । सनिष्य-
४ ५ ३ र र २
न्तश्चित्तुवि । नृ । म्णवार३४जाम् । आनः । भरा-
३ ५ ४ ५ र ४ ५ ४ ५ २
ओर३४वा । सुवितंयस्यको । ना । तानात्माना । सह्वि-
र २ २ ४
या । मा३४३ । तू३वोपुता६५६ः ॥ ५ ॥

२ २ २ २ ५ १र ३ २ २
II औ३होइ३होइ । स्व्र३४षा । णासाः । इन्द्रस्तु ।

हे "इन्द्र !" "सुष्वाणासः" सोममभिषुतवन्तो वयं त्वां "स्तुमसि" स्तुमः । हे "तुविनृम्ण" बहुबल बहुधन वा इन्द्र ! "वाजं" चरु-पुरोडाशादि-लक्षणमन्नं "सनिष्यन्तः" दत्तवन्तः सम्भक्तवन्तो वा वयं त्वां स्तुमः । यत एवं अतो हेतोः "नो" ऽस्मभ्यं "सुवितं" सुष्ठु प्राप्तव्यं शोभनं धनम् "आभर" आहर प्रयच्छ । "यस्य" यद्धनमतिप्रियत्वेन "कोना" (कनेः कान्तिकर्मण

---

८४ ऋग्वेदस्य८,८,८,१ ।

1,II पार्थे द्वे ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३ ५ २ २ २ ३ ५ १
मसित्वा। औ३हो३हो३इ। सा२३४नी। ष्यन्ता:।
२ १ २ ३ ४ ५ २ २ २ २
ची३त्तुवि। नृम्णवाजाम्। औ३हो३हो३इ। आ२३४
५ १ २ २ ३ ४ ५ २ २
ना:। भरा। सुविता३म्। यस्यकोना। औ३हो३
२ ३ ५ १ २ १र २ २ ४
हो३इ। ता२३४ना। त्मना। सह्यिया। मा३४३। तू३वोपु-
ताई५६:॥ ६॥ ८४

इदं रूपं। पचाद्यच्। अकारस्य व्यत्ययेन ओकारः। प्रथमैक-वचनस्याकार:) कामयमानो भवसि तद्धनमाभरेत्यर्थ:(१)। वयं च "त्वोता:" त्वया रचिता: सन्त:। "तना" (धननामैतत्(२) विस्तृतानि धनानि "त्मना"(३) आत्मना स्वयमेव अन्य-नैरपच्चे-णैव "सह्याम" (सह अभिभवे। धातूनामनेकार्थत्वात्) त्वत्प्रसा-दाल्लभेमहि।

"सनिष्यन्तश्चित्तुविनृम्णवाजम्"-इति छन्दोगा:। "ससवासश्च"-इति बह्वृचा:।

"कोनातनात्मनासह्याम"--"चाकन्त्मनातनासनुयाम"-इति पाठौ॥ ४॥ ८४

(१)--'किं पुनरभि भवेम? कोना:, कुत्सिताश्च ते ऊनाश्च कोना:। छान्दसत्वात् कु-शब्दस्य क-भावः। पञ्चम्येकवचनस्य छान्दसत्वान्नादादेशः। कोनात्। कुत्सिताद् ऊनाच्च शत्रोरित्यर्थ:'-इति वि०।

(२)—तनेति धननामसु ऊनविंशतितमं नैघण्टुकम् २,१०।

(३)—"मन्त्रे घ्वाड्यादेरात्मनः। ६। ४। १४१।"-इत्यात्मन आकारलोपः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी ।

सप्तगुर्ऋषिः* ।

३ २ ३ १ २ ३ १ २ १ २ ३ १ २ ३ २र
जगृह्मा*तेदक्षिणमिन्द्रहस्तंवसूयवोवसुपतेवसूनाम्। विद्मा

३ १ २ ३ १ २ ३ १ २ ३ १र २ ३ १ २
हित्वांगोपतिꣳशूरगोनामस्मभ्यचित्रंवृषणꣳरयिन्दाः॥५॥ ८५

५ र र र र र ५ १ २
I जगृह्मातेदक्षिणमोहाओहाइए। इन्द्रहा२३स्ता-

र १ २ २ ३ ५ २
म्। वसूयवो। वसूपा३। ताइवसू। नाम्। ओ३।

२ २ २ १र र २
हा। ओ३। हा३ए। विद्माहित्वा। गोपती३म्।

२ ३ ५ २ २ २ २
शूरगो। नाम्। ओ३। हा। ओ३। हा३ए। अ-

१ २ १ २ ३ ५ २
स्मभ्यञ्चाइ। चा३०वृष। णꣳरयिम्। दाः। ओ३।

२ २ २ १ ऽ २ २ ५
हा। ओ३। हा३ए। रयाइन्द्रा३उवा३। ऊ३४पा।

२र १र २र १र १ १ १ १ ३ १ १ १ १
औहोऔहोवा२३५उ। वा। ई२३४५॥७॥

---

* "सहगोरार्षम्"-इति वि० ।

---

* "जगृम्भा"-इति ऋग्वेदीयः पाठः ।

---

८५ ऋग्वेदस्य८,१,३,१।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४र ५र ४ ५ र ४र ५ २
II. जगृह्मातेदत्तिणम्। औहौहोवाहाइ। इन्द्रा
३ ५ २र१ २ २ २५ २
हार३४स्ताम्। वद्वयवो। वसुपा३। ताइवसू। नौ।
३ ५ २ २ १र र २
वाओर३४वा। हा३हाइ। विद्माहित्वा। गोपती३
२३५ २ ३ ५ २ २ १
म्। भूरगो। नौ। वाओर३४वा। हा३हाइ। अस्मभ्य
२ १ २ ३५ २ ३ ५
न्चाइ। त्रा३०वृष। ण्ऌरयिम्। दौ। वाओर३४वा।
२ ५रर ३१११११
हा३४। औहोवा। ई२३४५॥ ८॥

१ १ १ १र २र१२
III होई२। होई२। होई२। जगृह्मातेदत्तिणम्।
१ १ १ र१२र
इन्द्रहास्ता२म्। हास्ता२म्। हास्ता२म्। वसूयवोर
र १ १ १
वसुप। तेवसूना२म्। सूना२म्। सूना२म्। वि-
१र २र १र २ र १ १ १
द्माहित्वागोपतिम्। भूरगोना२म्। गोना२म्। गो-
१ २ १ २ १ १
ना२म्। अस्मभ्यञ्चित्रंवृष। ण्ऌरयाइन्दा२। आइ-
१ १ १ १
न्दा२ः। आइन्दा२। होई२। होई२। होया२।
३ ५रर ३११११
वा२३४औहोवा। ई२३४५॥ ९॥

I,II सौपर्णे द्वे।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ─५र ४ ५र ४ ५र ५ ऽ
IV आ३औहोइ। आ३औहोइ। आ३औहो३इवा। औ-
२ ऽ १ र २ १र २
३होइ। औ३होइ। औ२३होवा। जगृह्माताइ। दक्षिणा३म्।
१ २ ४ ५ ४ ५ ४ ५ २ र-१ २
इन्द्रहस्तम्। द्रहस्ताम्। द्रहस्ताम। वसूयवो। वसुपा३।
१ २४ ५ ४ ५ ४ ५ २ १र र
ताइवसूनाम्। वसूनाम्। वसनाम्। विद्माहित्वा। गो
२ २ ३ ४ ५ ४ ५ ४ ५
पती३म्। शूरगोनाम्। रगोनाम्। रगोनाम्।
२ १ २ १ २ ३ ४ ५ ४ ५
अस्मभ्यन्त्वाइ। त्वा३०वृष। ण०रयिन्दाः। रयिन्दाः।
४ ५ ४ ५र ४ ५र ४ ५र ५
रयिन्दाः। आ३औहोइ। आ३औहोइ। आ३औहो३इवा।
ऽ २ ऽ २ १ र २ ५र र
औ३होइ। औ३होइ। औ२३होवा३४। औहोवा।
३ १ १ १ १
ई२३४५॥ १०॥

५र र र १ २ १
V हाउहाउहाउ। ओ। होहोवा। ओ। हो

हे "वसुपते"! वसूनां धनानां स्वामिन्निन्द्र! "ते" तव

---

III,IV,V वाग्रप्राणि त्रीणि।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १र २ २ ३ ४ ५
होवा। जगृह्माताइ। दक्षिणा३म्। इन्द्रहस्तम्।

४ ५ ४ ५ २र१ २ २
द्रहस्तम्। द्रहस्ताम्। वसूयवो। वसुपा३। ताइ-

३ ४ ५ ४ ५ ४ ५ २ १र
वसूनाम्। वसूनाम्। वसूनाम्। विद्माहित्वा।

र २ २ ३ ४ ५ ४ ५ ४ ५
गोपती३म्। शूरगोनाम्। रगोनाम्। रगोनाम्।

२ १ २ १ २ ३ ४ ५ ४ ५
अस्मभ्यश्चाइ। त्रा३०वृष। णा३रयिन्दाः। रयिन्दाः।

र र र १ २ १ २
हाउहाउहाउ। औ। होहोवा। औ। होहोवा।

१ २ ५र र ३ १ १११
औ। हो। होर। वा२३४। औहोवा। ई२३४५॥

॥ ११ ॥ ८५

"दक्षिणं" हस्तं(१) "वसूयवो" धनकामा वयं "जगृह्म" गृह्णीमः

---

(१)—यद्यपीन्द्रस्य तेजोरूपत्वात् हस्ताद्यभाव एव सिद्धान्तः तथाप्यत्र आरोपितत्वेन समाधेयम् ग्रावादीनामचेतन-प्रसिद्धानामपि तथा स्तुति-दर्शनात्। तथाच यास्कः—"अथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते—

"ऋष्वात इन्द्र स्थविरस्य बाहू।
यत् संगृभ्णा मघवन् काशिरित्ते॥"

*** यथो एतत् पौरुषविधिकैरङ्गैः संस्तूयन्त इत्यचेतनेष्वप्येतद् भवति "अभिक्रन्दन्ति हरितेभिरासभिः"-इति "ग्रावस्तुतिः"-इत्यादि नै० दै०१,७।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

वसिष्ठऋषिः।

३ १ २ ३ १ २ ३ १२ २ २२ ३ १ २ ३ २ ३ २
इन्द्रंनरोनेमधिताहवन्तेयत्पार्यायुनजतेधियस्ताः।
३ १ २ ३ १ २ २ २ ३१२ ३२ ३ १ २ ३ १ २
शूरोनृषाताश्रवसश्चकामआगोमतिव्रजेभजात्वनः॥६॥८६

२ ३ ५ २ ३ ५ २ १
I इन्द्रन्ना२३४रो। नेमाधा२३४इता। हवन्ता-
२ ३ ५ २ ३ ५ २ १
२३इ। यत्पारा२३४याः। यूनाजी२३४ताइ। धिया-

(यथा बहुप्रद अर्थिनोऽस्मभ्यमदत्वा न गन्तव्यमिति हस्तं गृह्ण-न्ति तद्वत्) हे "शूर" विक्रान्तेन्द्र"! त्वां "गोपतिं" (अत्र वृत्यवृत्तिभ्यां स्वामित्वं बहुत्वं च प्रतिपाद्यते) बह्वीनां गवां गोपतिं "विद्म" जानीम। अतोऽस्मभ्यं "चित्र" पूजनीयं "वृषणं" वर्षकं "रयिं(२)"धनं "दाः" धेहि॥ ५॥ ८५

---

८६ ऋग्वेदस्य ५,३,११,१ = यजुर्वेदस्य २८,१ = आरण्यके १,२,१—२—१४—१५—२,२,१—२—३—४—५—६—७—८—४,१४—४,२,१-१४-१६—१९-२०-५,४—५,२,१८।

I गौरीवितम्।

(२)—'रयिं गो-लक्षणं धनम्'-इति वि०।

८१क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३ ५ २ ३ ५ २ १

स्तार३ः। शूरोना२३४र्षा। ताश्रावा२३४साः। चक्रा-

२ ३ ५ २ ३ ५ १ ऽ

मा२३इ। आगोमा२३४तो। व्रजाइभा२३४जा। त्वन्ना-

२ २ १ ३ ११११

३उवा३। ए३। उपा२३४५*॥ १२ ॥ ८६

"यद्" यदा(१) "पार्य्याः(२)" युद्धे भरण-निमित्तभूतास्ताः प्रसिद्धाः "धियः" कर्म्माणि "युनजते" प्रयुज्यन्ते। तदा "नरो" नेतारो "यज्ञानां" सङ्ग्रामाणां वा "नेमधिता" नेमधितौ यज्ञे सङ्ग्रामे वा(३) यमिन्द्रं "हवन्ते" ह्वयन्ति। हे "इन्द्र!" स त्वं "शूरः" "नृषाता" नृणां सम्भक्ता(४)। "श्रवसो" बलस्य अन्नस्य(५) वा "चकामे" चकाने काम्यमाने सति "गोमति" गोयुते "व्रजे" गोष्ठे "नो" अस्मान् "भज" भागिनः कुरु।

"श्रवसश्चकाम"-"श्रवसश्चकाने"--इति पाठौ॥ ६ ॥८६

---

(१)—'यत् यस्मात्'-इति वि०।

(२)—'पार्य्याः पालयितव्याः प्राप्तव्याः'-इति वि०।

(३)—'नेमधितिः' सङ्ग्राम-नामसु पठ्यते नैघण्टुकम् (२,१७), यज्ञ-नामसु तु न दृश्यते। विवरणकारस्तु सङ्ग्रामार्थ एव स्वीकृतः।

(४)—'नृषाता—नरो मनुष्याः ऋत्विग्लक्षणास्ते सन्यन्ते सम्भज्यन्ते यत्रेति नृषाति यज्ञः। वन षण सम्भक्तावित्यस्येदं रूपम्। तस्मात परस्य सप्तम्येकवचनस्य डादादेशः। नृषाता—नृषातौ यज्ञ इत्यर्थः'-इति वि०।

(५)—हविर्लक्षणस्येत्यर्थः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

गौरिवीतऋषिः।

१ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २ ३ १ २
वयःसुपर्णाउपसेदुरिन्द्रम्प्रियमेधाऋषयोनाधमानाः।

१ २ ३ १ २ ३ २ ३ १र २र ३ २ ३ १ ३ १ २ ३ २
अपध्वान्तमूर्णुहिपूर्द्धिचक्षुर्मुमुग्ध्या३स्मान्निधयेवबद्धान्॥७॥८७

५ र र १ र र २ १ र
I वयोहाहाउ। सुपर्णाउपसेदुराइन्द्रम्। प्रियमे-

र र ७ २ १ र र र २ १ २
धाऋषयोनाधमार२३नाः। अपध्वान्तमूर्णुहिपूर्द्धिचार२३क्षूः।

"वयो" गन्तारः(१) "सुपर्णाः" सुपतनाः आदित्य-रश्मयः "इन्द्रम्" "उपसेदुः" उपसन्ना अभवन्। कीदृशाः? "प्रियमेधाः" प्रिययज्ञाः(२) "ऋषयो" द्रष्टारः(३) "नाधमानाः" प्रज्ञां याच-

---

८७ ऋग्वेदस्य ८,३,४,५।

I वैदन्वतम्।

(१)—'वयः पक्षिसदृशादित्यर्थः'-इति वि०।

(२)—मेधइति यज्ञ-नामसु चतुर्थं नैघण्टुकम् ३,१७। प्रियमेधवदत्रिवदित्यस्य व्याख्यानावसरे तु 'प्रियमेधः प्रिया अस्य मेधा'-इत्यादि यास्कः (३,१७)।

(३)—ऋषिरिति द्रष्टृरूपमिति नैघण्टु-भाष्यादौ। "साक्षात्कृतधर्माण ऋषयो बभूवुः"-इत्यादि नि० नै०१.२०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ ५ २ २ १ २
मुमुग्धि। औ३होऽ३इ। आ २१। स्मा३न्निध। ये३-

२ ४
४३। वा३बा५द्धा६५ऽ६न् ॥ १८ ॥ ८७

माना:(४) (याचनप्रकारउच्यते)—हे इन्द्र! "ध्वान्तम्" अन्धकारम् "अपोर्णुहि" परिहर ("अपध्वान्तमूर्णुहीति येन तमसा प्रावृतो मन्येत तन्मनसा गच्छेदपहैवास्मात्तल्लुप्यत"-इत्यैतरेयब्राह्मण-मत्रानुसन्धेयम्) "पूर्द्धि" पूरय(५) "चक्षुः" तेजश्च(६)। "मुमुग्धि" मोचय च "अस्मान् निधयेव बद्धान्"। "निधा" पाश्या भवति पाश्या पाश-समूहः(७)। पाश-समूहेन बद्धान् यथा मुञ्चन्ति तद्वत्। (अत्र "वयो वेर्बहुवचन मित्यादि निरुक्त(८) द्रष्टव्यम् ॥ ॥ ७ ॥ ८७

---

(४)—नाधमानाः इत्यस्य याचमानाः इत्यर्थः कृतो यास्केनैव नै०४,३।

(५)—"पूर्द्धि पूरय"-इति नि० नै०४,३।

(६)—"चक्षुः ख्याते र्वा चष्टे र्वा"-इति नि०नै०४,३।

(७)—"निधा पाश्या भवति, यन्निधीयते। पाश्या पाशसमूहः। पाशः पाशयते. र्विपाशनात्"-इति नि० नै०४,३।

(८)—नैगमकाण्डीय तृतीयखण्डम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

वेनोभार्गवऋषिः।

१ २ ३ २३ ३ १र २र २ १र २र ३ १ २
नोकेसुपर्णमुपयत्पतन्तꣳहृदा वेनन्तो अभ्यचक्षतत्वा।

१ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ १ २ २
हिरण्यपक्षं वरुणस्यदूतयमस्ययोनौशकुनंभुरण्युम्॥८॥८८

१ ३ २र १ ५ २
I आ२याम्। अयायम्। औ३हो३इ। आ२इ।

१र २ ३ २ १ ३ १ १ ५ २
ऊ२। नाकेसुपार्णमुपयात्पतन्ताम्। पतन्तम्। औ३हो३इ।

१ ३ २र १ ५ २
आ२इ। ऊ२। आ२याम्। अयायम्। औ३हो-

१ २र २ २ ३ २ १
३इ। आ२इ। ऊ२। हृदावेनान्तोअभ्यचाक्षतत्वा।

३ २ ५ २ १
क्षतत्वौ३। हो३इ। आ२इ। ऊ२। आ२याम्।

३ २र १ ५ २ १
अयायम्। औ३हो३इ। आ२इ। ऊ२। हिर-

---

८८ उत्तरार्चिकस्य ९,२,१३,१ = ऋग्वेदस्य ८,७,८,३ = आरण्यके ३,२,३।

I यामम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ २र १   २ २र१   २ २
एथपात्त्वंवरुणास्यदूताम्। स्यदूतम्। औ३हो३इ।

१   ३ २र१   ऽ २
आ२इ। ऊ२। आ२याम्। अयायम्। औ३हो-

५ र   र   १ र र   ३ २ १
३इ। आ२इ। ऊ२। यमस्ययोनौशकुनांभुरण्यूम्।

३२१   ऽ २
भुरण्युम्। औ३हो३इ। आ२इ। ऊ२। आ२-

१   ३ २र १   ऽ २   १
याम्। अयायम्। औ३हो३इ। आ२इ। ऊऽ२।

र   २   १   २   १   २
वाहा३१उवा२३। ए३। दिवम्। ए३। दिवम्। ए३।

१   २   १   १११
दिवम्। ए३। दिवा२३४५॥ १४ ॥ ८८

हे "वेन !"(१) "त्वा" त्वां "हृदा" हृदयेन मनसा "वेनन्तः" कामयमानाः स्तोतारः "नाके" अन्तरिक्षे "अभ्यचक्षत" अभिपश्यन्ति तदानीं त्वम् उपगच्छसीति शेषः। कथंभूतं ! "सुपर्णं" शोभन-पतनं "पतन्तं" अन्तरिक्षं गच्छन्तं। "हिरण्यपक्षं" हिरण्मयाभ्यां पक्षाभ्या मुपेतम्। "वरुणस्य" जलाभिमानिनो

(१)—'वेनति'-इति कान्तिकर्मसु चतुर्थं नैघण्टुकम्, (२,६) अर्चतिकर्मसु च द्विचत्वारिंशत्तमम् (३,१४)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

बृहस्पति र्नकुलो वा ऋषिः।

१ २ ३१ २३२ ३२३ १ २ ३२ ३ १ २ ३ ६ २
ब्रह्मजज्ञानंप्रथमंपुरस्ताद्विसीमतःसुरुचोवेनआवः।

क २र ३१२ ३ २ ३२३ २ ३१२ ३१ २
सबुध्नयाउपमाअस्यविष्ठाःसतश्चयोनिमसतश्चविव॥८॥८९

देवस्य(१) "दूतं" चारम्। "यमस्य" नियामकस्य वैद्युताग्नेः(३) "योनौ" स्थाने अतरिक्षे अतरिक्षे "शकुनं" पक्षिरूपेण वर्त्तमानम्(४)। "भुरण्युं" भर्त्तारं वृष्टि-दानादिना सवस्य जगतः पोषकं(५) (भुरण् धारण-पोषणयोः कण्ड्वादिः। अस्मादौणादिक उ प्रत्ययः॥ ८॥ ८८

---

८९ अथर्ववेदस्य ५,४,१।

(२)—वरुणो मेघ-वर्षण-हेतु-भुतो वायु विशेषः "वरुणो वृणातीति सतः"-इत्यारभ्य "दृष्टिर्व्युनक्ति भूमिम्"-इत्यन्तेन यास्कोक्तेः।

(३)—यमशब्दस्य तु नियामकत्वं योगार्थ-लभ्यम् "अग्निरपि यमउच्यते (नि० दै० ४,२०)"-इति "तृतीयो अग्निः (नि० दै० ४,२१)"-इति च यास्कोक्तेः वैद्युताग्नित्वञ्च लभ्यते तृतीयो अग्निः-इत्युक्तेः तृतीयस्थानो द्युलोकः, तत्स्थः सूर्यरूपोऽग्निरिति च लभ्यते। अतएवाह विवरणकृत्—'यमस्य योनौ, यमः आदित्यः, तस्य योनिः स्थानं मण्डलं, द्युलोके यदा आदित्यमण्डलं तत्र व्यवस्थितम्'-इति।

(४)—'शकुनं शक्तं योनितः आत्मसात् कर्त्तुं समर्थ मित्यर्थः'-इति वि०।

(५)—'भुरण्युं भ्रमणशील मित्यर्थः'-इति वि०। 'भुरण्युः'-इति क्षिप्रनामसु चतुर्दशममम नैघण्टुकम् २,१५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ र १ २
I ब्रह्मा। ब्रा२३ह्मा। जज्ञानंप्रथमंपुरास्तात्।

१ २ रर१ २ १
विसाइ। वा२३इसो। मतःसुरुचोवेनआवः। सबू।

२ र र १ २ १
सा२३बू। घ्नियाउपमाअस्यवाइष्ठाः। सताः। सा२३-

२ र १ २ १
ताः। चयोनिमसतश्चवाइवा३४३ः। ओ२३४५इ। डा॥

॥ १५ ॥ ८९

१ऽ २ १ऽ २ १ ऽ २ १२
II ऊवे२हा३इ। ऊवे३हो३इ। हिषा३या। ब्रह्मज-

१ २ १ २३४ ५ १ १र २१
ज्ञा। ना३०प्रथ। मंपुरस्तात्। विसीमताः। सुरु-

२३४ ५ २१ २१र २३४
चः। वेनआवाः। सबुध्नियाः। उपमाः। अस्यवि-

५ २१ २ १ २३४५ १ ऽ २
ष्ठाः। सतश्चयो। नी३मस। तश्चविवाः। ऊवे३हा-

I,II ऋतसामनी द्वे।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ ९　२　　१　　　२　　　५ र
इडू। इवे३हा३इ। हि। षा२ः। आ२३४। औ-
र　　२　　२ १　२　२　　२ १　३ १ १ १ १
होवा। ए३। ऋतमसृतम् ए३। ऋतमसृता२३४५म्॥

॥ १६ ॥ ८८

वेनो नाम कश्चित् कमनीयो(१) गन्धर्वः। तथाच शाखान्तरे —"वेनस्तत्पश्यन्नित्यारभ्य गन्धर्वो नाम नित्याम्नातम्।

स च "वेनः" "पुरस्तात्" पूर्वस्मिन् काले "जज्ञानम्" उत्पन्नम् "अभिज्ञं" वा "ब्रह्म" ब्राह्मण-जातिरूपं(२) "प्रथमम्" आद्य-शरीरम्। अतोऽस्याः सर्वैं दृश्यमानायाः "सुरुचः" शोभनायाः कान्तेः "आवो" रचितवान् (वसुमित्यनुग्रहसूचकः कश्चिदनुकरणशब्दः तथाविधं शब्दं मुखेनाभिव्यञ्जयन्। ब्राह्मणशरीर-महत्या कान्त्या योजितवानित्यर्थः) स वेनः "बुध्न्याः" मूलं अन्तरिक्षं वा बुध्नः, तत्र भवाः, अस्योपमाः एतदीय-शरीरकान्ति-सदृशाः, आदित्य-प्रकाशादि-रूपाः कान्तीः(३) "विष्ठाः" विशेषेण स्थापितवान् तथा "सतश्च" इदानीं विद्यमानस्य च "असतश्च" भविष्यद्रूपस्येदानीमविद्यमानस्य च "योनिम्" उत्पत्तिकारणं निवास-स्थानं वा "विवः" विवृतवान् निष्पादितवानित्यर्थः ॥ ८ ॥ ८८

---

(१)—"वेनो वेनतेः कान्तिकर्मणः"-इति नि० १०४,३८।

(२)—'ब्रह्म-शब्देनादित्याख्यं च सूयते'-इति वि०।

(३)—'बुध्न्याः दिशः'-इति वि०।

८२क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

सुहोत्रऋषिः।

१२ ३१० ३२३ १२३१२३१२
अपूर्व्यापुरुतमान्यस्मै महेवीरायतवसेतुराय।

३ १२३२३१२ ३१२ ३१२
विरप्शिने वज्रिणेशन्तमानिवचांस्यस्मै स्थविरायतक्षुः॥१०॥९०

इति तृतीय-दशति॥ ३॥

५२२ २४ ५ ३१२ २३४५ २
I अपूर्व्याऔहोहोहाइ। पूरुत। मानियस्मै। म-

१२२ २ १ २ ३४५ २
हेवीरा। याइतव। साइतुराया। विरप्शि। नाइ-

३४५२ २ २२२५ २१२ २ १
वज्रिणे। शाइ४३०नमानि। वचांसिया। स्माइस्थ-

"अपूर्व्या" अपूर्व्याणि पूर्वैरकृतानि नूतनानि "पुरुतमानि" बहुतमानि "शन्तमानि" सुखकृत्तमानि "वचांसि" स्तुतिरूपाणि वाक्यानि "अस्मै" इन्द्राय "तक्षुः" ततक्षुः (तक्षतिः करोतीत्यर्थे। कुर्वन्ति स्तोतार इति शेषः। कीदृशाय ?

---

९० ऋग्वेदस्य ४,७,४,१।

I वारवन्तीयम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ४५ ३ ४ ५र १
वि। रायतच्चू:। स्थविरायतच्चु:। स्थवि। रा३४३।
२ ४ १ २र ३ १ १ १ १
या३ता५च्चुई५६:। स्थविरायतच्चू२३४५:॥ १७॥ ९०

"महे" महते। "वीराय" विविध-शत्रूणां मारयित्रे। "तवसे" तवस्विने बलवते(१)। "तुराय" त्वरमाणाय "विरप्शिने" विशेषेण स्तुत्याय "वज्रिणे" वज्रवते। "स्थविराय" प्रवृद्धाय।

इति श्रीसायणाचार्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्य नवमः खण्डः॥ ९॥

---

अथ दशमे खण्डे—

सैषा प्रथमाः

अस्याः परस्याश्च द्युतानऋषिः*।

१२३ १२ ३ १२ ३२ ३२ ३१ २ ३१२
अवद्रप्सोअ᳭ᳪशुमतीमतिष्ठदीयानः†कृष्णोदशभिःसहस्रैः।
३ २३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
आवत्तमिन्द्रःशच्याधमन्तमपस्नीहितिंनृमणाअधद्राः‡॥ १॥ ९१

---

* 'तिरश्चिफतानस्यार्षम्'-इति वि०।

† "इयानः"-इति, ‡ "स्नेहितीनृमणाअधत्त"-इति च ऋग्वेदीय पाठः।

---

९१ ऋग्वेदस्य ६,६,३४,२।

(१)—'तवः' इति बलनामसु चतुर्थं नैघण्टुकम् २,९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



I अवद्रा२३४प्साः। आ॒ꣳशूमा२३४तीम्। आ-
तीऽ३। ष्ठा२३४५त्। ईयाना२३४ःकृ। ष्णोदाशा२३४-
भीः। साहा३। स्रा२३४५इः। अवत्ता२३४मो।
द्रःशाची२३४या। धामा३। ता२३४५म्। आपःस्नो२३-
४ही। तिनृमा२३४णाः। अधा२द्रा२३४औहोवा।
अधा३द्रा२३४५ः॥ १८॥

II अवद्रप्साइए। आ॒ꣳशूमतीमतिष्ठा२३त्। ईया-
नःकृष्णाः। दाशभिःसहस्रा२३इः। आवत्तमिन्द्राः।
शाचियाधमन्ता२३म्। अपास्नोहितीम्। नृमणा२३।
अधा५द्रा होपुइ। डा॥ १९॥

---

I,II सुरूपविणी द्वे।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ ४ २र ४ ५ ४ ५र ऽ २ २र ४र
I अवद्रोप्सअंशुमतीम् । औ३हो३४इ । औहो-
५ १ २ २ ऽ २ ३र ४र ५ ३र
वा । आतीर्३ष्ठात् । औ३हो३४इ । औहोवा । ई-
२ ३ ४ ५ ऽ २ ३र ४र ५ १ २
यानःकृष्णाः । औ३हो३४इ । औहोवा । दश । भा-
३ ४ ५ ऽ २ ३र ४र ५ ३र २ ३ ४ ५
इःसहस्रैः । औ३हो३४इ । औहोवा । आवत्तमिन्द्राः ।
ऽ २ ३र ४र ५ १ २ ४ ५
औ३हो३४इ । औहोवा । शचि । याधमन्ताम् ।
ऽ २ ३र ४र ५ ३ २ ३र ४ ५ ऽ २
औ३हो३४इ । औहोवा । अपास्नीहितीम् । औ३हो३४इ ।
३र ४र ५ १ २ ५र र २ १ १ १ ११
औहोवा । नृमा२णा२३४औहोवा । अधा३द्रा२३४५ः ॥२०॥

३ ४ २र ४ ५ ४ ५र २ २ ४
II अवद्रप्सअंशुमतीम् । ए३ । औ३हो५वा ।
१ २र र१ २ १र २ १ २ १२र
आता२३४५इष्ठा६५ईत् । ईयानःकृष्णोदशभिःसहस्रैः ।
१र २ १ २ ३ ४ ५ ४ ५
आवत्तम् । आइ । द्रा३शचिं । याधमन्ताम् । अप-
४र ५ ४ ५र ४ ५ २ १ १ १ ११
स्नीहितिनृमणाः । ओवा । अधद्रा३आ२३४५ ॥ २१ ॥८१

I,II स्तोमरश्मि द्वे ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(अत्रेतिहास माचक्षते—पुरा किल कृष्णो नामासुरः दश-सहस्र-संख्याकै रसुरैः परिवृतः सन् अंशूमतीनामधेयाया नद्यास्तीरे अतिष्ठत्। तत्र तं कृष्ण मुदक-मध्ये स्थितम् इन्द्रो बृहस्पति-सहागच्छत्। आगत्य तं कृष्णं तस्यानुचरांश्च बृहस्पति-सहायो जघानेति केचिदन्यथा वदन्ति। तेषां कथा-हेतुः—द्रप्सइत्युदक-कणोऽभिधीयते। स तु सोमः 'द्रप्सश्चस्कंदेत्यादिषु-सोमपरत्वेनोक्तत्वात्(१)। एतत्पदमाश्रित्याहुः—

"अपक्रम्य तु देवेभ्यः सोमो वृत्रभयार्दितः।
नदी मंशुमतीं नाम अभ्यतिष्ठत् कुरुं प्रति।
तं बृहस्पतिनैकेन सोभ्ययात्तत्र वृत्रहा।
योत्स्यमानः सुसंहृष्टै र्मरुद्भि र्विविधायुधैः।
दृष्ट्वा तानागतान् सोमः स्व-बलेन व्यवस्थितः।
मन्वानो वृत्रहायान्तं जिघांसु मरिसेनया।
व्यवस्थितं धनुष्मन्तं त मुवाच बृहस्पतिः।
मरुत्पतिं रयिं सोम प्रेहि देवान् पुनर्विभो!।
सोऽब्रवीन्नेति तं शक्रः खड्ग एव बलाद्बली।
इन्द्राय देवानादाय तं पुनर्विधिवत्पुरा।
जघ्नुः पीत्वा च दैत्यानां समरे नवतीर्नव।

(१)—निरुक्तावित्यर्थः। तथाहि—"द्रप्सं स्कन्नं ब्रह्मणा दैवेन, द्रप्सः सम्भृत-स्थानीयो



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तदवद्रप्सइत्यस्मिन्नृचे सर्वं निगद्यते। एतदनार्षत्वेऽनादरणीयं भवति। एषोऽर्थः क्रमेण ऋचि वक्ष्यते। तथाचास्य ऋचोऽयमर्थः—

द्रप्सो द्रुतं सरति गच्छतीति "द्रप्सः"(पृषोदरादिः) द्रुतं गच्छन् "दशभिः सहस्रैः" दशसहस्र-सङ्ख्याकै रसुरैः "इयानः" इयमानः "कृष्णः" एतन्नामकोऽसुरः अंशुमतीं नाम नदी मनु "अवातिष्ठत्" अवतिष्ठते। ततः "शच्या" स्व-कर्मणा प्रज्ञाने न वा(२) "धमम्" उदकस्यान्तरुच्छ्सन्तम्। यद्वा। जगद्गीतिकरं शब्दं कुर्वन्तं "तं" कृष्णासुर"मिन्द्रो" मरुद्भिः सह "आवत्" प्राप्नोत्। "अथ" अनन्तरं पश्चात् "तं" कृष्णासुरं तस्यानुचरांश्च हतवान् इति वदति। "नृमणाः" नृषु मनो यस्य सः। यद्वा। कर्मनेतृषु ऋत्विक्षु एकविधं मनो यस्य स तथोक्तः। तादृशो भूत्वा "स्नीहितिं" (स्नीहितिर्वधकर्मसु पठितः (नि० नै० ३,१९) हिंसित्रीं तस्य सेनाम् "अपद्राः" (द्राति: कुत्सित-गति-कर्मा। स इन्द्रः "अपगमयत्" अवधीदित्यर्थः। तस्यानुचरान् हत्वा तम् असुरं हतवानित्यभिप्रायः॥ १॥ ९१

भवति। सर्वे देवा पुष्करे लाधारयन्त। पुष्करमन्तरीचं पोषति भूतानि। उदकं पुष्करं पूजाकरं पूजयितव्यम। इदमपीतरत् पुष्करमेतस्मादेव पुष्करं वा पुष्पं पुष्यतेः"-इति नि० नै०५,१४॥

(२)—शचीति कर्म-नामसु द्वाविंशतितमं पदम् (नै०२,१) प्रज्ञा-नामसु च नवमम् (नै०३,९)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १र २र
वृत्रस्यत्वाश्वसथादीषमाणाविश्वे देवाअजहुर्येसखायः ।
३ १ २ ३ १ २ ३ २ ३ २उ ३ १२
मरुद्भिरिन्द्रसख्यन्ते अस्त्वथेमाविश्वाःपृतनाजयासि ॥ २ ॥९२

२ ऽ २ ऽ २ २ १
I हाउ। ओउहाउ। ओउहाउ। हाइ। वृत्रस्यत्वा।
२ १र २ ३ ४ ५ २ १र र २ २ ३
श्वसथात्। ईषमाणाः। विश्वे देवाः। अजहुः। येस-
४ ५ २ १ २ १ २ ३र ४ ५ २ १ र
खायाः। मरुद्भिराइ। द्राउसखि। यन्तेअस्तू। अथे
र २ १ २ ३ ४ ५ २ ऽ २
मावाइ। श्वाउःपृत। नाजयासी। हाउ। ओउहाउ।
ऽ र २ ५र र १ २ १ १ १ १ १
ओउहाउ। हाउ४। औहोवा। आ औउहोउ३४५ ॥२२॥

१ २ २ १ २ २ ३र ५
II होयेउ। हयायेउ। हया। औहोउ३४वा।
२ १ २ १ र २ ३ ४ ५ २ १र
हाइ। वृत्रस्यत्वा। श्वसथात्। ईषमाणाः। विश्वे-

---

९२ ऋग्वेदस्य ६,६,२३,२ ।

I,II घृषतो मारुतस्य सामनी द्वे ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



देवाः। अजहु३ः। येसखायाः। मरुद्भिराइ। न्द्राइ-

सखि। यन्तेअस्तू। अथेमावाइ। श्वाइःपृत। नाज-

यासी। होये३। हयाये३। हया। औहोर३४वा।

हा३४। औहोवा। आऔ३हो। आऔ३हो३३४५॥

॥ २२ ॥ ९२

हे इन्द्र! तव ये "विश्वदेवाः" प्राक् सखायः सङ्ग्रामे सखित्वं कुर्यामिति मित्राण्यभवन्। सर्वे देवाः "वृत्रस्य" वृत्रासुरस्य "श्वसथात्" (श्वसेरौणादिकोऽथप्रत्ययः ( , , )। सर्वान् आगच्छतो दृष्ट्वा तेषां भीत्युत्पादनाय वृत्रासुरः श्वास मकार्षीत्) श्वासाद्भीताः सन्तः अतएव "ईषमाणाः" सर्वतः पलायमानाः "त्वा" त्वाम् "अजहुः" सङ्ग्रामे त्यक्तवन्तः। एव सति हे इन्द्र! "मरुद्भिः" सह "सख्य" सखिभावः "ते" तवास्तु। ये मरुतस्त्वां न परित्यजन्ति तैः सहेति। "अथ" अनन्तरम् "इमाः" विश्वाः सर्वाः "पृतनाः" शत्रुसेनाः "जयासि" स्व-बलेनाभि-





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

बृहदुक्थऋषिः ।

३ १ २ ३ १२ २२ ३ १२ २२ ३ १ २ ३ १ २
विधुन्दद्राणꣳसमने बहूनांयुवानꣳसन्तंपलितोजगार ।
३ १ २ ३ १ २ ३ २उ ३ २ ३ १२ २२
देवस्यपश्यकाव्यंमहित्वाद्याममारसह्यःसमान ॥ ३ ॥ ९३

४ ५ १ ७ २ १ २ ३ ४
I वीधूम् । दद्रादद्रा । णा३ꣳसम । नाइबहू-
५ ४ ५ १ ७ २ १ २ ३
नाम् । यूवा । नꣳसानꣳसा । ता३०पलि । तोज-
४ ५ ४५ १ ७ २ १२ २ ३ ४
गारा । देवा । स्यपास्यपा । श्या३कावि । यम्महि-

भवसि(१) (अनेन वृत्रघ्नं तमिन्द्रमाह(२) । अत्र मन्त्रे "इन्द्रो वै वृत्रं हनिष्यन्"-इत्यादि ऐतरेय-ब्राह्मण मनुसन्धेयम् ॥ २ ॥ ९२

---

९३ उत्तरार्चिकस्य ८,१,७,१ = ऋग्वेदस्य ८,१,१८,५ = अथर्ववेदस्य १४,२६,८ ।

(१)—'वृत्रस्य' मेघस्य (क) 'श्वसथात्' श्वासघर्षणात् गर्जितशब्दादेवेत्यर्थः 'ईषमाणाः' पलायन्तः 'विश्वे देवाः' सर्वे देवाः 'अजहुः' त्यक्तवन्तः, के ? उच्यतेऽग्र—'सखायः' ये तव सखीभूता आसन् ; केवलैर्मरुद्भिः (ख) हे इन्द्र ! 'सख्यं' 'ते' तव 'अस्तु' (लोडर्थं लङर्थे द्रष्टव्यः)'-इत्यादि वि० ।

(क)—वृत्रः इति मेघ-नामसु अष्टाविंशति पदम् नै०१, १० ।

(ख)—"मरुतः मितराविणो वा मितरोचिनो वा महद्द्रवन्तीति वा"-इत्यादि नि०दै०५,१३ ।

(२)—एष [illegible]



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५　४ ५　१ ०　२ १　२
त्वा । आद्या । ममाममा । रा३सहि । या३४३: ।

२　४
सा३मापूना६५६ ॥ २४ ॥

२　३　३ ११११　२ १
II हउ४ । आ४५ । हउ । हउ२३४५ । विधुं-

२　१　२ ३ ४ ५　२ १र
दद्रा । णा३उसम । ना३ बहूनाम् । युवानउमा ।

२　१　२ ३ ४ ५　२र १　२　१र
ता३०पलि । तीजगारा । देवस्यपा । श्या३कावि ।

२ ३ ४ ५　३　३　३ ११ ११
यन्महित्वा । हउ४ । आ४५ । हउ । हउ२३४४ ।

२ १र　२　१　२　२　४
अद्याममा । रा३सहि । या३४३:। सा३मापूना६५६॥

॥ २५ ॥ ९३

अनया कालात्मक इन्द्रः स्तूयते—"विधुं" विधातारं सर्वस्य युद्धादेः कर्त्तारं(१) (वि-पूर्वो दधातिः करोत्यर्थे) तथा "समने" (अनन समनः प्राणनं। सम्यगनोपेते) सङ्ग्रामे(२) "बहूनां" शत्रूणां

---

I,II सोमसामनी द्वे ।

(१)—'वृष्टि-प्रदानादिना उपकरणेन सर्वजगतः धारयितारम्'-इति वि० ।

(२)—'समनम्' इति सङ्ग्राम-नामसु षोडशं नैघण्टुकम्२,१७ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

द्युतानऋषिः।

२ ३ २३२३ १ २ ३ १ २ ३ १२
त्वꣳह्यत्यशत्रुभ्योजायमानोशत्रुभ्योअभवःशत्रुरिन्द्र।

३१२ २२ ३ १२ २२ ३ २ ३ १ २ ३ १ २
गूढेद्यावापृथिवीअन्वविन्दोविभुमद्भ्योभुवनेभ्योरणन्धाः॥४॥९४

"दद्राणं" द्रावकम्। ईदृक्सामर्थ्योपेतमपि "युवानं" सन्तम्। "पलितोजगार"(३) निगिरतीन्द्र-कृपया। एव मुक्त-लक्षणं वक्ष्य-माण-लक्षणं च "देवस्य" कालात्मकस्येन्द्रस्य "महित्वा" महत्वे-नोपेतं "काव्यं" सामर्थ्यं(४) पश्य हे बृहदुक्थ! (ऋषिःस्वात्मान मामन्त्र्य वदति—) तथा यो जरां प्राप्तोऽद्य "ममार" म्रियते "स" "ह्यः" परेद्युः "समान" सम्यग् जीवति पुनर्जन्मान्तरे प्रादुर्भवतीत्यर्थः(५)॥ ३॥ ९३

---

९४ ऋग्वेदस्य ६,६,२५,१।

(३)—'पलितः', पलितत्वं वृद्धत्वस्योपलक्षणम्. वृद्धः सन् जगार, गट स्तुताविल्यस्य उत्तमपुरुषैकवचनमिदम् स्तौमीत्यर्थः'-इति वि०।

(४,—कविर्मेधावी, तस्य भावः काव्यं कवित्व मित्यर्थः, कीदृशं पुनः कवित्वम्? उच्यते—महित्वा महत्वेन समाहात्म्येनेत्यर्थः'-इति वि०।

(५)—यास्कस्त्विम मेवं व्याचष्टे—" 'विधुं' विधमनशीलं 'दद्राणं' दमनशीलं 'युवानं' चन्द्रमसं 'पलितः' आदित्यो 'जगार' गिरति स ह्यो म्रियते स दिवा समुदितं त्यधिदैव-तम्। अथाध्यात्म—'विधुं' विधमनशीलं 'दद्राणं' दमनशीलं 'युवानं' महान्तं 'पलितः' आत्मा गिरति रात्रौ म्रियते रात्रिः समुदितेत्यात्मगतिमाचष्टे"-इति नि० पृ० २,१८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र र　४　२ १ २ १ २र १र २र ३　५र
I औहोइतुवाम् । हत्यत्सप्तभ्योजायमाना२३४ः । औ-

र　४　१ १र　१　२ ३　५र र　र ४
होअशा । त्रुभ्योअभवः शत्रुरिन्द्रा२३४ । औहोइगढे ।

१र र २　१र　२ ३　५र र　४　१ २र
द्यावापृथिवीअन्वविन्दा२३४ः । औहोइविभू । मद्वरो-

१　२र र १　३ १११
भुवनेभ्योरणन्धा२३४५ः ॥ २६ ॥

४　३ २　३　५　२ १ २र १र २र
II त्वोहाइ । हत्यौवाओ२३४वा । सप्तभ्योजायमा ।

१ २　१ २ ११११　४　३ २　३　५
नोवा३ । औवा२३४५ । औणोहाइ । त्रूभ्यौवाउ२३४वा ।

१ २　१　२　१　२　३ २ १११　र ४
अभवःशत्रुरि । द्रोवा३ । औवा३४५ । गढोहाइ ।

२　३　५　२　१र　२　१ २　१ २ १११
द्यौवाओ२३४वा । पृथिवीजन्वविं । दोवा३ । औवा३४५ ।

४　३ २　३　५　१ २र　१ २
विभोहाइ । मद्वरौवाओ२३४वा । भूवने । भ्योवा३ ।

१ २ १११　४　४
औवा३४५ । रणापून्धाः । होपुइ । डा ॥ २७ ॥ ९४

I,II इन्द्रवज्रे द्वे ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

वामदेवऋषिः।

३ १र २र ३ १ २ ३ १ २ ३ १ २ ३२ ३ १ २
मेडिन्नत्वावज्रिणम्भृष्टिमन्तम्पुरुधस्मानंवृषभंस्थिरप्स्नुम्।

३ २र ३ १ २ ३ १र २र ३ १ २ ३ १ २
कराध्यर्यस्तरुषीर्दुवस्युरिन्द्रद्युक्षंवृत्रहणंगृणीषे ॥ ५ ॥९५

हे "इन्द्र!" "त्वं ह" त्व खलु "त्यत्" तदेतत् कर्म कृतवानसि। किं तदुच्यते? "जायमानः" त्वं प्रादुर्भवन्नेव "अशत्रुभ्यः" शत्रु-रहितेभ्यः "सप्तभ्यः" कृष्णा-वृत्र-नमुचि-वराहारादिभ्यः सप्तभ्यो बलवद्भ्यः प्राणिभ्यः "शत्रुः" "अभवः" सप्तभ्यः पूर्भ्यः शत्रुः शातयिता दारयिता अभवः (सप्त यत्पुरःशर्म-शार-दीर्दर्त्त इति हि निगमः) अथवा सप्तभ्यःसप्त होतृ-प्रभृतयो होत्रकाः; तदर्थं यज्ञेषु प्रादुर्भवन्नेव कर्म-विघ्नकारिभ्यः शत्रुरभवः। किञ्च। हे इन्द्र! त्वं "गूढ़े संवृते द्यावापृथिव्यौ सूर्यात्मना प्रकाश्य अनुक्रमेण ते "अविन्दः" अलभथाः तथा "विभुमद्भ्यो" महत्व-युक्तेभ्यः "भुवनेभ्यो" लोकेभ्यः "रणं" रमणं "धाः" धारयसि विदधासीत्यर्थः ॥ ४ ॥ ९४



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५　　　१ २　　　　२ १　　२
I मेडोम् । नत्वावज्रिणम्भष्टिमा२३न्ताम् । पुरु-
१र　　　२ १　　२　　　　१र　　　　　२
धस्मानंवृषभᳫस्थिरा२३प्स्नुम् । करोष्यर्यस्तरुषाइर्दुवार३-
२　　१　　२ १　　　　　　१　३　　५र र
स्यूः । आइन्द्रद्युम्नम् । वृत्रा२३ । हा२णा२३४औहो-
२　　१ १ १ १ १
वा । गृणीइषे२३४५ ॥ २८ ॥

४र ५　　४　　२　　　५　　१　　२ १
II मेडिन्नत्वा । वा३४औहो । जाइ । णम्भाष्टीइ-
२　　　　　　५　　　　२ २　　२ ५　　　२ १र
मौ । वा३२३४ । ताम् । पुरा३४औहो । धस्मान
　　२ १　　　　र　　　　　५　　　२ २
वृ । षभᳫस्थाइरौ । वा३२३४ । प्स्नूम् । करा३४-
५　　२ १　　　　　२　　　　　　　　५
औहो । षिअर्यस्त । रुषाइर्दूवौ । वा३२३४ । स्यूः ।
२ २　　　५　　२ १　　　　　　　१　२
इन्द्रा३४औहो । द्युम्नम् । वृत्रा२३ । हा२णा२३४
५र र　　　२ र ३ १ १ १ १
औहोवा । गृणीषे२३४५ ॥ २८ ॥ ९५

---

I,II भृष्टिमतः सूर्यवर्चसः सामनी द्वे ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "इन्द्र !" "दुवस्युः" दुवः परिचरणं स्तुत्यादि-लक्षणं(१) तदिच्छुस्त्वं यतः "अर्यः" अरीन् अस्मद्विरोधिनः(२) "तरुषीः"(३) तारकान् जेतॄनस्मान् करोषि (यद्वा। तरुषीः तरणस्वभावात्। पक्ष-द्वयेऽपि लिङ्ग-व्यत्ययः। अर्यः अरीनस्माकं शत्रून् करोषि उपक्षीणानिति शेषः) अतः "मेळिं न" (मेळिरिति-वाङ्नाम) [नै०१,११,१८] माध्यमिकीं वृष्टि-प्रदां वाचमिव तां यथावृष्ट्यर्थं स्तुवन्ति तद्वत्(४) "त्वा" त्वां "गृणीषे" स्तोत्रमुच्चारयामि स्तौमि(५) कीदृशं त्वां? "वृत्रहणं" वृत्रस्यासुरस्य मेघस्य वहन्तारं। "द्युक्षं"(६)द्युलोके वर्त्तमानम्। "पुरुधस्मानं" बहूना मुदकानां धारकं(७) (यद्वा। वर्ण-व्यत्ययः(८)। पुरूणां बहूनां दासयितारं शत्रूणां क्षपयितारं) "वृषभं" कामानां वर्षकम्(९)। "स्थिरप्स्नं" स्थिररूपं। न ह्यीन्द्रस्य रूपं कदाचिदपि प्रच्युतं भवति (यद्वा। स्थिराणां शत्रूणां भक्षकं विघातिन

(१)—'दुवस्यति'-इति परिचरण-कर्मसु पञ्चमं नैघण्टुकम ३,५।

(२)—'अर्यः'-इति ईश्वर-नामसु द्वितीयं नैघण्टुकम् २,२२। अतएव 'अर्यः ईश्वरः'-इति वि०।

(३)—'तरुषमिति वधकर्म वधेन सङ्ग्रामो लक्ष्यते, सङ्ग्राममित्यर्थः'-इति वि०।

(४)—'अन्तर्णीत-मत्वर्थश्च द्रष्टव्यम्, वाग्मिन मित्यर्थः'-इति वि०।

(५)—'गृणीषे मध्यमपुरुषैकवचनमिदम् उत्तमपुरुषैकवचनेकस्य स्थाने द्रष्टव्यम्' इति वि०।

(६)—दिवि द्युलोके क्षियति निवसति इति द्युक्षः, तम्।

(७)—'पुर्विति धननाम, धस्मान मिति धसे दमने इत्यस्येदं रूपम्'-इति वि०।

(८)—दस्मानमित्येवं दकारवर्णे पठितव्ये धस्मानमिति धकारवर्णपाठो वर्णव्यत्ययः

(९)—'वर्षणाद् वृषभः'-इत्यादि नैरुक्तम् दै०३,२२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी ।

वसिष्ठऋषिः ।

१ २ ३ १ २ ३ १ २　३ १ २　३ १ २ ३　१ २
प्रवोमहेमहेवृधे*भरध्वप्रचेतसेप्रसुमतिंकृणुध्वं ।

१ २　३ १र　२र　३ २
विशःपूर्वीःप्रचरचर्षणिप्राः ॥ ६ ॥ ९६

५ ४　१ र २ र　र　१　२　२　१
I प्रवाः । माहेमहेवृधे । भराधूइवाम् । प्रचाइ-

२ १　२ ३　५　१　३
तसाइ । प्रासूमार३४तोभ् । कृणुध्वम् । इहा२वा२३-

मित्यर्थः ।) "वज्रिणं" वज्रवन्तम् "ऋष्टिमन्त" शत्रूणां भर्जन-

वन्त (९) ॥ ५ ॥ ९५

---

* "महिवृधे"-इति, "चरा चर्षणि प्राः"-इति च ऋग्वेदीय पाठः ।

---

९६ उत्तरार्चिकस्य ८,१,११,१ = ऋग्वेदस्य ५,३,१६,४ आरण्यके ४,२,१३ ।

(९)—'भष्टिशब्देन शिखराण्युच्यन्ते, तानि चात्र बहुशिखराणि परिगृह्यन्ते, तैस्त-द्वन्तम्'-इति वि० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "इन्द्र!" "दुवस्युः" दुवः परिचरणं स्तुत्यादि-लक्षणं(१) तदिच्छुस्त्वं यतः "अर्यः" अरीन् अस्मद्विरोधिनः(२) "तरुषीः"(३) तारकान् जेतॄनस्मान् करोषि (यद्वा। तरुषीः तरणस्वभावात्। पक्ष-द्वयेऽपि लिङ्ग-व्यत्ययः। अर्यः अरीनस्माकं शत्रून् करोषि उपक्षीणानिति शेषः) अतः "मेहिंन" (मेहिरिति-ब.ङ्नाम) [नै०१,११,१८] माध्यमिकीं वृष्टि-प्रदां वाचमिव तां यथावृष्ट्यर्थं स्तुवन्ति तद्वत्(४) "त्वा" त्वां "गृणीषे" स्तोत्र मुच्चारयामि स्तौमि(५) कीदृशं त्वां? "वृत्रहणं" वृत्रस्यासुरस्य मेघस्य वहन्तारं। "द्युक्षं"(६)द्युलोके वर्त्तमानम्। "पुरुधस्मानं" बहूना मुदकानां धारकं(७) (यद्वा। वर्ण-व्यत्ययः(८)। पुरूणां बहूनां दासयितारं शत्रूणां क्षपयितारं) "वृषभं" कामानां वर्षकम्(९)। "स्थिरप्स्नं" स्थिररूपं। न हीन्द्रस्य रूपं कदाचिदपि प्रच्युतं भवति (यद्वा। स्थिराणां शत्रूणां भक्षकं विघातिन

(१)—'दुवस्यति'-इति परिचरण-कर्मसु पञ्चमं नैघण्टुकम् ३,५।

(२)—'अर्यः'-इति ईश्वर-नामसु द्वितीयं नैघण्टुकम् २,२२। अतएव 'अर्यः ईश्वरः'-इति वि०।

(३)—'तरुषमिति वधकर्म वधेन सङ्ग्रामो लक्ष्यते, सङ्ग्राममित्यर्थः'-इति वि०।

(४)—'अन्तर्णीत-मत्वर्थश्च द्रष्टव्यम्, वाग्मिन मित्यर्थः'-इति वि०।

(५)—'गृणीषे मध्यमपुरुषैकवचनमिदम् उत्तमपुरुषैकवचनैकस्य स्थाने द्रष्टव्यम्' इति वि०।

(६)—दिवि द्युलोके क्षियति निवसति इति द्युक्षः, तम्।

(७)—'पुरुरिति धननाम, धस्मान मिति धसे इसने इत्यस्येदं रूपम्'-इति वि०।

(८)—दस्मानमित्येवं दकारवर्णे पठितव्ये धस्मानमिति धकारवर्णपाठो वर्णव्यत्ययः

(९)—'वर्षणाद् वृषभः'-इत्यादि नैरुक्तम् दै०३,२२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

वसिष्ठऋषिः।

१ २ ३ १ २ ३ १ २  ३ १ २ ३ १ २ ३ १ २
प्रवोमहेमहेवृधे*भरध्वप्रचेतसेप्रसुमतिंकृणुध्वं।

१ २ ३ १र २र ३ २
विशःपूर्वीःप्रचरचर्षणिप्राः॥ ६ ॥ ९६

५ ४ १ र २र र १ २ १ १
I प्रवाः। माहेमहेवृधे। भराधूइवाम्। प्रचाइ-

२ १ २ ३ ५ १ ३
तसाइ। प्रासूमार३४तीम्। कृणुध्वम्। इहार्वा२३-

मित्यर्थः।) "वज्रिणं" वज्रवन्तम् "भृष्टिमन्त" भ्रत्रणां भर्जन-

वन्त (९)॥ ५ ॥ ९५

---

* "महिवृधे"-इति, "चरा चर्षणि प्राः"-इति च ऋग्वे

दीय पाठः।

---

९६ उत्तरार्चिकस्य ८,१,११,१ = ऋग्वेदस्य ५,२,१६,४

आरण्यके ४,२,१२।

(९)—'भृष्टिशब्देन शिखराण्युच्यन्ते, तानि चात्र बहुशिखराणि परिगृह्यन्ते, तैरु-

द्दन्तम्'-इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ १ २ १ २ १
४इशाः। पूरवीः। प्रचा। रा२३चा। षणाइ।
२ ४ ५ ४
प्रा। औ३होवा। हो५इ। डा॥ ३०॥

३ १ १ ११ २ र ३ ५ ३ २
II हुं२३४५। प्रवोमहाइमा२३४हे। वृधा३४३इ।
२ २ ५ ३ ११११ २ ३ ५
भरा२३४ध्वाम्। हुं२३४५। प्रचेतसाइप्रा२३४ह्न।
३ २ २ ३ ५ ३ ११११ २ र
मता३४३इम्। कृणू२३४ध्वाम्। हुं२३४५। विशःपू-
३ ५ ३ २ २ २ ५ ३ १
र्वीइःप्रा२३४चा। रचा३४३। षणा२३४इप्राः। हुं२
१११ र र ४ ५ ५ ३ ११११
३५। हाउहौहोवाई। हाउवा। ई२३४५॥ ३१॥ ९६

हे अस्मदीयाः पुरुषाः! "वो" यूयं "महेवृधे" महतां धनानां वर्द्धयित्रे "महे" महत इन्द्राय "प्रभरध्व" सोमान् प्रणयत। "प्रचेतसे" प्रकृष्ट-ज्ञानाय इन्द्राय "सुमतिं" सुष्टुतिं च(१) "प्रकृणुध्वं" प्रकुरुत।

---

I,II अङ्गी हे।

(१)—'मन्यते इत्यर्चतिकर्मणः (नै०३,१४,९८) सुशब्दः सुत्यर्थः; शोभनां स्तुतिमित्यर्थः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

विश्वामित्रऋषिः ।

२ १ २ २ १ २ ३ १ २ ३ २उ ३ १ २ ३ १ २
प्रुनᳪ हुवेमम घवानमिन्द्रमस्मिन्नरेनृतमंवाजसातौ ।

३ १ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ ३ १ २
श्रृण्वन्तमुग्रमूतयेसमत्सुघ्नन्तंवृत्राणिसञ्जितंधनानि*॥७॥ ९७

५ ४ ५ २ ४ ५ २ ४ २ १ २
I प्रुनᳪ हुवेममघवानमिन्द्राम् । अस्मिन्भरेनृत-

२ २ १ २ १ २ २ २ १ २
मंवाचसा२३ताउ । श्रृण्वन्तमुग्रमूतयेसमा२३त्सू ।

अथ प्रत्यक्ष-स्तुतिः(१) । हे इन्द्र ! "चर्षणिप्राः"(२) कामैः प्रजानां पूरयिता त्वं "पूर्वीः" हविषां पूरयित्रीः "विशः" प्रजाः "प्रचर" अभिगच्छ ॥ ६ ॥ ९६

* "धनानाम्"-इति ऋग्वेदीयः पाठः ।

९७ ऋग्वेदस्य ३,२,४,६ ।

I भारद्वाजम् ।

(१)—प्रचरेति मध्यमपुरुषयोगात् ।

(२)—चर्षणयो मनुष्याः नै०२,३,८ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २ २ १ २
घ्न। तंवा२३र्त्री३। होवा३हा। णिसञ्जितम्।

१ २ १ २ २ १
धना२३नी३। होवा३हा३४३इ। ओ२३४५इ। डा॥

॥ ३२ ॥ ९७

हे "इन्द्र!" "वाजसातौ" वाजस्यान्नस्य सातिर्लाभो यस्मिन् सोऽयं वाजसातिः तस्मिन् "भरे" (बिभ्रति जय-लक्ष्मी मनेन योद्धार इति भरः संग्रामः तस्मिन्) सङ्ग्रामे "शून" शूनम् उत्साहेन प्रवृद्धं(१) "मघवान" धनवन्तम् अतएव "इन्द्र" निरतिशयैश्वर्य्यसम्पन्नं "नृतमं"सर्वस्य जगतोऽतिशयेन नेतारं त्वां "हुवेम" कुशिकावयं यज्ञार्थ मावह्वयेमा। तथा "शृण्वन्तम्" अस्माभिः क्रियमाणां स्तुतिं शृण्वन्तम्। "उग्र" शत्रूणामुद्गूर्णं। "समत्सु" सङ्ग्रामेषु(२) "वृत्राणि" वृत्रोपलक्षितानि सर्वाणि रक्षांसि "घ्नन्त" हिंसन्तं। "धनानि" शत्रु-सम्बन्धीनि सञ्जितं सम्यग्जेतारं त्वाम् "ऊतये" रक्षणाय वय मावह्वयेम॥ ७॥ ९७

(१)—'शून' सुखं (नै० ३,६,११), सुखकरमिन्द्र मिति वि०।

(२)—'समत्सु'-इति सङ्ग्रामनामसु द्वाविंशतितमं नैघण्टुकम् २,१७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी ।

वसिष्ठ ऋषिः ।

२ ३ १ २　　२ १ २ ३ १ २
उदु ब्रह्माण्यैरत श्रवस्येन्द्रं समर्ये महया वसिष्ठ ।
१र　२र २ १ २　३ १ २　३ २ ३ १ २ ३ १ २
आयो विश्वानि श्रवसा* ततानोपश्रोता म ईवतो वचाꣳसि ॥ ८ ॥ ९८

१ २र १ २ ५ २ २ १ २
I दिवया । ओवा । औ३हो३वा । उदुब्रह्मा । णी३-
१र २ ३ ४ ५ २ १ २ १ २ ३ ४
ए र । तश्रवस्या । इन्द्रꣳसमा । यँ३मह । यावसि-
५ २र १र २ १ २ ३ ४ ५ १
ष्ठा । आयोविश्वा । नी३श्रव । सांततानां । दिव-
२र १ २ ५ २ २ र १ २ १र
या । ओवा । औ३हो३वा । उपश्रोता । मईव ।
२ २ ४
तो३४३ । वा३चा५ꣳसा६५६इ ॥ २२ ॥ ९८

---

* "श्रवसा"-इति ऋग्वेदीयः पाठ ।

---

९८ ऋग्वेदस्य ५,३,७,१ = आरण्यके ४,२,९-१० ।

I वैश्वदैवम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

गौरिवीतिर्ऋषिः।

३ १र २र३ १र २र ३ १र २र३ १र २र
चक्रं यदस्याप्स्वा निषत्तमुतो तदस्मै मध्विच्चछद्यात्।

"अवस्या" अन्नेच्छया(१) "ब्रह्माणि" स्तोत्राणि हवींषि च इन्द्रार्थम् "उदैरत" सर्वे ऋषय इति शेषः(उङ्गतिपूरणः(२) हे वसिष्ठ! त्वमपि "समर्ये" यज्ञे(३) "इन्द्र" "महय" स्तोत्रेण हविषा च पूजय। अपिच "यइन्द्रो" "विश्वानि" भुवनानि "अवसा" अन्नेन कीर्त्या वा "आततान" सः "ईवतः"(४) उपगमनवतो "मे" मम "वचांसि" स्तुति-रूपाणि वाक्यानि "उपश्रोता" भवतु॥ ८॥ ९८

---

(१)--अवोऽन्नमिति नरुक्तम्। 'अवस्या श्रवणीयाणि उतकृष्टानीत्यर्थः'-इति वि०।

(२)—'अथ ये प्रवृत्तेऽर्थे मिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति, पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति'-इति नै०१,९।

(३)—'समर्ये सङ्ग्रामस्थानीये यज्ञे'-इति वि०। 'समये' इति सङ्ग्रामनामसु चयोविंशतितमं नैघण्टुकम् २,१७।

(४)—'ईवतः ईन्वतेर्व्याप्ति कर्मणः, एतद्रूपं व्याप्तिमतः, अशेष-गुणप्रकाशनस्येत्यर्थः। कस्य पुनर्व्याप्तिमतः उपश्रोता! उच्यते—वचांसि, प्रथमाबहुवचनमिदं षष्ठ्येकवचनस्य स्थाने द्रष्टव्यम्, वचसः वचनस्येत्यर्थः। यो विश्वानीति पुरस्ताच्छब्दमध्याहृत्यैक-वाक्यता योजयितव्या'-इति वि०। 'ईन्वति' 'इन्वति' च पाठभेदेन व्याप्तिकर्मसु प्रथमं नैघण्टुकम् २,१८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३　१र　२र　३२र　३ २ ३१र　२र३　१　२
पृथिव्यामतिषितंयदूधःपयोगोष्वदधाओषधीषु॥ ९॥९९

॥ चतुर्थ-दशति ॥

५ ४　५ र ४ र　५ ४　　२ १र　र　२
चक्रं यदस्याप्स्वानिषत्ताम् । उतोतदस्मैमध्विच्च-

१　२　　१र　　२ १　२　१ र
क्रा२३द्यात् । पृथिव्यामतिषितंयदू२३धाः । पयोगा२३-

"अस्य" इन्द्रस्य "चक्रम्" आयुधं(१) अप्सु" अन्तरिक्षे "आ" सर्वतो "निषत्त" निषसामासोन्मेघ-हननार्थम् । "उतो" तत् अपिच "अस्मै" इन्द्राय "मध्वित्" उदकमपि(२) "चच्छद्यात्"

---

९९ ऋग्वेदस्य ८,३,४,३ ।

I पुरीषम् ।

(०)—"चक्रं चकते र्वा चरते र्वा क्रामते र्वा"-इति नि० नै०४,२७।

(१)—'आप'-इति अन्तरीक्षनामसु अष्टमं नैघण्टुकम् १,४ ।

(२)—इकच्छन्दोप्यर्थः । 'मधु' इति उदकनामसु एकादशं नैरुक्तम् १,१२ । मध्वी-दिति ऋचि दीर्घत्व छान्दसः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २र १र २र १ २ १
षू । आदधाओषधीषु । इडार३भा३४३ । ओर३४५इ ।

डा * ॥ ३४ ॥९९

वशं नयति । "पृथिव्याम" अतिषितं" अतिषितं" विसृष्टं यद्धः" उदकमस्ति तत् "पयोगोष्वोषधीषुच "आदधा" आदधाति ॥ ८ ॥ ९९

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने तृतीयस्याध्यायस्य दशमः खण्डः ॥ १० ॥

---

अथैकादशे खण्डे—

सैषा प्रथमा ।

तार्क्ष्यपुत्रोऽरिष्टनेमिरृषिः ।

३ २ २ ३ १ २ ३ १ २ ३ १ २ २ २ २ १ २
त्यमूषुवाजिनन्देवजूतꣳसहोवानं*तरुतारꣳरथानाम् ।

१ २ ३ १ २ ३ २ ३ २ ३ १ २ २ १ २
अरिष्टमिनेपृतनाजमाशुꣳस्वस्तयेतार्क्ष्यमिहाहुवेम॥१॥१००

---

॥ * इतिग्रामगेये अष्टमः प्रपाठकः ॥

---

* "सहावानम्"-इति ऋग्वेदीयः पाठः ।

१०० ऋग्वेदस्य ८,८,३६,१ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



उपेतं "मरुत्वन्तम्" इन्द्रं "सख्याय" सख्युः कर्मणे(५) "हुवेमहि" आह्वयामः ।

"हुवेमहि"-"हवामहे"-इति च पाठौ ॥ ११ ॥ १४८

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

॥ इति जागतम् ॥

—)०(—

---

अष्टाविंशतिरिन्द्रेति मुख्याः(अ) सप्तदशोष्णिहः ।
आद्या(क) दशान्त्याः ककुभः(च) पिबेत्यष्टादशी विराट्(ट) ॥

---

(५)—"सख्युर्यः (५,२,१२६)"-इति कर्मणि यः ।

(अ)—इन्द्रेति "इन्द्रसुतेषु"-इत्यारभ्य "वयमुत्वे त्यन्ताः दशत्रयात्मकाः अष्टादश ऋचः मुख्याः साम्प्रतं व्याख्यातुं गृहीतत्वेन प्रधानाः ।

(क)—तत्र आद्याः सप्तदश "इन्द्रसुतेष्वित्यारभ्य "अपामीवेत्यन्ताः उष्णिहः उष्णिक्-छन्दस्काः ।

(च)—अन्त्याः दश "अभ्रातृव्यो"-इत्यारभ्य "वयमुत्वेतदृगन्ताः अन्तिमदशदात्मकाः दश ऋचः ककुप्-छन्दस्काः ।

(ट)—पिबेति "पिबा सोम मिन्द्र"-इति द्वितीय-दशदन्तिमा ऋक् तु विराट्-छन्दस्का । इति छन्दःसङ्केतः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

तु चे वेत्था ह्यपामीवामित्यादित्यपरिष्टुतिः(त)।
आगन्त गाव इत्येते मरुता(प) मिन्द्रदेवताः॥
अन्या ऋचो(य) ऽभिधीयन्ते ऋषयस्तत्र तत्र हि(श)॥

---

तत्र चतुर्थे खण्डे—

सैषा प्रथमा।

नारद ऋषिः।

१ २ ३ २ ३ १ २ ३ १ २ ३क २र
इन्द्र* सुतेषु सोमेषु क्रतुम्पु नीष† उक्थ्यम्।

---

(त)—"तुचे तुनाय"-इति पञ्चदशी, "वेत्था हि निर्ऋतीनां"-इति षोड़शी, "अपामीवामपस्त्रिध"-इति च सप्तदशी ऋक्—आदित्यस्य देवस्य परिष्टुतिः सर्वतः स्तवनं यथा तादृशी, आदित्य-देवताका इत्यर्थः।

(प)—"आगन्ता मा रिषण्यत"-इत्येकविंशतितमा ऋक्, "गावश्चिद्घा"-इति चतुर्विंशतितमा ऋक् च इत्येते द्वे मरुद्देवतानां स्तुत्यर्था इति शेषः।

(य)—अन्याः अवशिष्टाः त्रयोविंशति ऋचः इन्द्रदेवताः ज्ञेया इति यावत्। इति दैवत-सङ्केतः।

(श)—आसामष्टाविंशत्यृचामृषयस्तु तत्र तत्रैव व्याख्यानमुखेनैव अभिधीयन्ते कथितु मारभ्यते इत्यर्थः।

---

* "इन्द्रः" } इमौ ऋग्वेदीयौ पाठौ,
† "पुनीत" } सायण-कृतोत्तर-भाष्ये च।

Digitized by Madhuban Trust, Delhi



३ २ ३ २ ३ १ २　३ २
विदेवृधस्यदक्षस्य*महाᳪहि†षः ॥ १ ॥ १४९

५ ४　२ १र र र　२　१　१　२र १
I इन्द्रा । सुतेषुसोमे । षु । होई२ । हो । वाहोइ ।

र　२ १　२　२ १ २
क्रतुम्पुनीषउक्थियाम् । विदाइवा१र्द्धा२३ । स्याइदाचा-

२　१　२　१
३स्या । महाᳪ२३हिषा३४३ः । ओ२३४५इ । डा ॥ २४ ॥

३ २　१　३ २ १　२ १र र र
II इन्द्रा३होइ । हवे३होइ । सुतेषुसोमेषुक्रतुम्पु-

र　२ १ २　१　२
नीषउक्थियाम् । विदाइवा१र्द्धा२ । स्यदक्षस्या । मा-

४र　५　३ १ १ १ १
३हाᳪहि । षा२३४५ः ॥ २५ ॥

---

* "दक्षसो"
† "महान्हि" } इमौ च ऋग्वेदीयौ पाठौ ।

---

१४९ उत्तरार्चिकस्य १,२,१२,१=ऋग्वेदस्य६,१,७,१=
जहे१,२,१०—१८,२ ।

I क्रोशम् ।

II अनुक्रोशम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र र ४५ १ १ २ १
III इन्द्रसुतेषुसोमेषू। क्रतूर०पुनाइ। षउक्थि-
२र१ १ २र १
याम्। विदेवाद्धा२। स्यदत्तस्या। महाᳲहाइषा२ः।
१ २ १
महाᳲ२३हिषा३४३ः। ओ२३४५इ। डा॥ २६ ॥ १४९॥

हे "इन्द्र!" "सोमेषु" सुतेष्वभिषुतेषु सत्सु तान् पीत्वा "क्रतु" कर्म-कर्त्तारं "उक्थ्य" स्तोतारं च(१) "पुनीषे" शोधयसि(२)। [यद्वा सोमेष्वभिषुतेषु उक्थ्यं(३) क्रतुं यागं तैः सोमैः पुनीषे यजमानैः पूतङ्कारयसि] किमर्थं? "वृधस्य" वर्द्धकस्य "दक्षस्य" बलस्य(४) "विदे" लाभाय। स तादृश "इन्द्रः" "महान् हि" महान् खलु (अत एवं कर्त्तुं शक्नोतीति भावः॥ १ ॥ १४९

I,II कौसम्।

(१)—क्रतुरिति कर्मनाम (२,१,११)—उक्थ्यमिति स्तोत्रविशेषस्य नाम, गौण्या वृत्त्या इह तत्तत्कर्त्तरि व्यपदेश इति भावः।

(२)—विवरणकारस्त्वेवं व्याख्यातम्—'क्रतुं प्रति पुनीषे, पुनातिरत्र गत्यर्थो द्रष्टव्यः गच्छतीत्यर्थः। कीदृशं प्रति गच्छति? उच्यते—उक्थ्यम् प्रशस्यमधिगुणमित्यर्थः -इति। एतन्नये तु पुनीषे-इति "पवते"-इत्यस्य गति-कर्मसु पठितस्य (नै०२,१४,१०८) विकरण-व्यत्ययेन२,१,८८ रूपम्। किन्तु उक्थ्यमिति प्रशस्य-नामसु (३,८,६)पठितस्येति।

(३)—अत्र पक्षे उक्थ्यमिति क्रतुमित्यस्य विशेषणम्; उक्थस्तु सप्तानां सोम-संस्थानामन्यतमम्, तथाहि लाट्यायन-सूत्रम्—"अथ सोमसंस्थाः, अग्निष्टोमो(१) ऽत्यग्निष्टोमो(२) उक्थः(३) षोड़शी(४) तिरात्रों(५) वाजपेया(६) प्तोर्यामः(७)"-इति (५प्र० ४ख०)।

(४)—"दक्षः"-इति बल-नामसु त्रयोदशतमं नैघण्टुकमम् (२,९)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

द्वयोर्गोषूक्त्यश्वसूक्तिनाद्वषी* ।

१ २ ३ १र २र　　३ १ २ ३ २
तमुअभिप्रगायतपुरुहूतंपुरुष्टुतम् ।

५र　र　२ र १　५र　२ २
I हाउतमूवभी । प्रगायता । हाउ । पुरुहूऽ२३४-

५　२ १　५र　२ ३　५　२
ताम् । पुरुष्टुताम् । हाउ । इन्द्रङ्गाऽ२३४इर्भीः । त-

१　२　५र　३ २ ४　२
वाइषाऽ२इमाऽ३४ । हाउ । विवाइसापूताऽ६५६ । दी-

५
२३४वौ ॥ २७ ॥

३ ५र　२　३ ४र ५ ५　२ १ २
II ताऽ४मूवभि । होइ । प्रगायताइए । पुरुहूइ-

* 'गोषुक्ती वाश्वसूक्ती वा आत्मीयान् ऋत्विज आह'-इति वि० ।

I,II दैवोदासे द्वे ।

९९का,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ १ २ ३१र २र
इन्द्राग्नीभिस्तविषमाविवासत ॥ २ ॥ १५०

२ १ २ २ १ २ ५ २ १ २
ताम्। पुरुहूइताइम्। पुरुहू२हू२३४ताम्। इन्द्राग्नी-

२ १ २ २ १ २ २ १ २
इर्भीइः। तवाइषाइमा। विवासाइताइ। विवा२सा-

५ १ २ १र २ १
२३४ता। आइन्द्रा३४म्। गीर्भा२इः। तविषम्।

७ २ १ २ २ ५ २ १ १ १ १
आ। विवा२३हाइ। साताओ२३४वा। ऊ२३४५ ॥२८॥

५ ४ २ २ ४ र ५ २ १ र १
III तमू३अभिप्रगायता। पुरु। हूतम्पुरू२हू-

१ १ १ ५ २ १
ता२म्। इन्द्रा२०गाइर्भी२ः। तविषा२३४मा। विवा-

१ २ ५र र २ ५
२३। सा२ता२३४औहोवा। ओ२३४काः ॥ २९ ॥

---

१५० ऋग्वेदस्य ६,१,१७,१।

III प्रहितोः संयोजनम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४ २ ३ ४ र ५ र २ १ र १
IV तमू३अभिप्रगायतेदाम्। पुरु। हूतम्पुरु२ष्टू ता-

१ २र र १ २ १
२म्। आइन्द्रङ्गीर्भिस्तविषमा। विवासा१ता२। आ-

२ ३ १ १ १ १ २ १ २ १
इन्द्रङ्गा२४५इ। भा२३४५इः। तवाइषा२३मा३। वा-

३ ५र र २ ३ १ १ १ १
२इवा२३४औहोवा। सतए२३४५॥ ३०॥ १५०

"पुरुहूतं" बहुभिराहूतं "पुरुष्टुतं" बहुभिः स्तुतं "तमु" तमेव इन्द्रं हे स्तोतारः! "अभिप्रगायत" अभिमुखं प्रकर्षेण स्तुध्वम्। एतदेव स्पष्टयति—"तविषं" महान्तम्(१) इन्द्रं "गीर्भिः" वाग्भिः "आविवासत" परिचरत(२)॥ २॥१५०

IV औकोनिधनम्।

(१)—"तविषः"-इति महन्नामसु सप्तमं नैघण्टुकम् ३,३।

(२)—"विवासति"-इति परिचरण-कर्मसु अन्तिमं पदम्३,५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

२ ३ १ २ ३ १ २ ३ १ २ ३ २
तन्त्वेमदङ्गृणीमसिवृषणम्पृत्तु*सासहिम्।

३ १ २ ३ १ २
उलोकङ्कृत्नुमद्रिवोहरिश्रियम्॥ ३ ॥१५१

४ ४ २ १ र
I तन्त्वे५मदम्। गृणी५मसि। वृषा। णम्पृत्सुसा

१ २ १र र २
सा२हाइम्। उलोका। कृत्नुमद्राइ। वोहा२३रीः।

१ २ १
आ३४३या३४३म्। ओ२३४५इ। डा॥ ३१॥

२ ५ २ ३ ४ र ५ ५ २ १
II ता४न्ते। होइ। मदङ्गृणीमसी६ए। वृषाहो२।

२ १ र र र १
णम्पृत्सा१साहो२म्। उलोककृत्नुमद्रिवोहा१री२।

१ ४ ५ ४
श्रियाम्। औ२३होवा। हो५इ। डा॥ ३२॥

---

* "पृत्सु"-इति ऋग्वेदीय-पाठः, सायणकृतोत्तरभाष्ये च।

---

१५१ उत्तरार्चिकस्य २,२,१८,१ = ऋग्वेदस्य ६,१,१७,४ = ऊहे२,२,६—८,१३—१८,१९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र  र  ५  २ १ २  २
III तन्तेमदङ्गृणीमसी३ए। वृषाऔ३हो३४। णं-

५ ४ ५र ४ ४  २ १ २  २  ५ ४ ४ ४
म्पृत्सुसासहीम्। उलाऔ३हो३४। कक्षन्तुमद्रिवाः।

२ १  ५  ४  ५
हरो२३४वा। आपूयोईहाइ॥ ३३॥

४ र  र ४  १ २  १ २ २
IV तन्तेमदा५ङ्गणीमसाइ। वार्षणंप्र। त्सुसासा३ही-

१ २ २  १ १ २  १ २ २  १
३म्। होवा३हाइ। उलोका३कृ३। होवा३हा। तुमा-

१ ३ ५र र  २ १ १११ १
२३। द्रा२इवा२३४औहोवा। हरिश्रिया२३४५म्॥

३४॥ १५१॥*

हे "अद्रिवः" वज्रवन्निन्द्र! "ते" त्वदीयं "तं" "मदं" सोमपान-जनितं हर्षं "गृणीमसि" गृणीमः प्रशंसामः (गॄ शब्दे क्र्यादिः "प्वादीनां ह्रस्वः(७,४,८०)"। "इदन्तोमसि(७,१,४६)"-इति मस इकारागमः।) कीदृशं? "वृषणं" वर्षितारं कामानां।

---

I,II,III,IV हारिवर्णानि चत्वारि।

---

*॥ इति अर्द्धः प्रपाठकः॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

पर्वतऋषिः।

१र २र ३ १ २ ३ १ २ ३ २ ३ २
यत्सोममिन्द्र विष्णवियद्वाघत्रितआप्त्ये।
१ २ ३ २ ३ १ २ ३ १र २र
यद्वामरुत्सुमन्दसेसमिन्दुभिः॥ ४॥ १५२

५ र ४ ५ १ र र
I ओम्। यत्सोममिन्द्रविष्णावी। यद्वाघत्रितआप्तियाइ।
२ र १ ५ १ ३ ५र र
यद्वामरुत्सुमाइन्दासो२३४हाइ। सा२मा२३४औहोवा।
२ १ ३ १ १ १ १
ए३। दूभी२३४५ः॥ १॥

"पृत्सु" वैरि-सम्पर्क-जनितेषु संग्रामेषु(१)। (अतएव बह्वृचाः पृत्स्विति पठन्ति। पृत्सु समत्स्विति संग्रामनामसु (नि०२,१७,-२१-२२)पठितम्। "सासहिं"(२) शत्रूणामभिभवितारं "लोककृतु" लोकस्य स्थानस्य कर्त्तारं "हरिश्रियं" हरिभ्यामश्वाभ्यां श्रयणीयं सेव्यम्। "उ" शब्दः सर्वेषां समुच्चये पाद-पूरणे वा॥ ३॥ १५१

---

१५२ ऋग्वेदस्य ६,१,४,१।

(१)—ननु "पृत्सु"-इत्यस्य सङ्ग्रामेषु इत्येव मर्थश्चेत् कथं तत्पर्य्यायेषु न पठितं निघण्टौ? अतस्तत्र विनिगमकमावश्यकमित्याह—अतएवेत्यादि। अस्ति पाठः सङ्ग्रामनामसु "पृत्सु"-इति पदस्य (२,१७,२१) श्रूयते च तथा पाठो वह्वृचि, तदेवं निघण्टावपि 'पृत्सु'-इति च पाठभेदेन ग्राह्य मिति भावः।

(२)—तुजादित्वादभ्यासदीर्घः (६,१,७)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



II यत्सोममापुइन्द्र विष्णवाइ। यद्वाघात्रितआप्ना२-
याइ। यद्वामा२रुत्सुमा। दासाये३। सा२मा२३४-
औहोवा। द२३४भीः॥ २॥

III हाउहायत्सोममा। द्रा२वा२३४औहोवा। ष्णा-
२३४वी। यद्वा२घत्रितआर२प्तिये। यद्वामरुत्सुमा२३हो।
दसा२इ। समा२३होये३। दुभिरो २ ३ ४ ५ इ।
डा॥ ३॥

IV औहो३१इ। औ२हो२३४वा। यत्सोममीन्द्रा-
३विष्णवाइ। औहो३१इ। औ२हो२३४वा। यद्वाघ-
त्रीइता३आप्तियाइ। औहो२१इ। औ२हो२३४वा।
यद्वामरुइत्सु३मन्दसाइ। औहो३१इ। औ२हो२३४५वा-
६५६। समिन्दुभीर२३४५ः॥ ४॥ १५२॥

---

I,II,III,IV वैतानि चत्वारि।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

एतदादि-तिसृणां विश्वमना वैयश्वऋषिः।

२ ३ १ २ ३ १ २ ३ १ ३ ३ २ २
एदुमधी*र्मदिन्तरꣳसिञ्चाध्वर्यो† अन्धसः।

३२उ २ १र २र २ १ २
एवाहिवीरस्तवतेसदावृधः॥ ५ ॥ १५३

हे "इन्द्र!" "विष्णवि"(१) विष्णौ सोमपानार्थं आगते सति अन्यदीये यागे "यद्" यदि तेन विष्णुना सार्द्धं पिबसि। "यद्वा" यदि वा "आप्त्ये" अपाम्पुत्रे "त्रिते" एतत्संज्ञके राजर्षौ यजमाने सोमं पिबसि (वेतिपूरणं) "यद्वा" यदि च "मरुत्सु" च सोमपानायागतेषु अन्यदीये यज्ञे "मन्दसे" माद्यसि तथाप्यस्मदीयैरेव "इन्दुभिः" सोमैः सम्यक् माद्य ॥ ४ ॥ १५२

---

* "मध्वो" }
† "सिञ्च वाध्वर्यो" } इति-ऋग्वेदीय-पाठौ।

---

१५३ उत्तरार्चिकस्य ८,२,१०,१ = ऋग्वेदस्य ६,२,१८, = ऊहे १५,२,९।

(१)—"ह्रस्वस्य गुणः (७,३,१०८)-"जसि च (१०९)"-इति सूत्रे "जसादिषु छन्दसि वा वचनं प्राङ् णौ चङ्युपधायाः"-इति कात्यायनोक्तेरिह गुणः। विवरणे तु—'सप्तम्येकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यं, सहयोगे च तृतीया, विष्णुना सह'-इति व्याख्यानम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३र४ ५र २ २ ३ ५ २ १र र
I एदुमधोः। मदा३रइन्ता२३४राम्। सिञ्चाध्वर्यो-

२ ५ २र१र र २
अन्धसा२ः। धा२३४सा:। एवाहिवीरस्तवया२इ। वा-

५ २ २ ४
२३४ताइ। सदा३वा५द्धा६४६: ॥ ५ ॥

४र र ४ २ १ १
II एदुमधौहोपूर्मदिन्तराम्। सिञ्चाहो२इ। अध्वर्यो-

२ १ २ १
अन्धासा२ः। आइवा१इहिवी२। रा२स्तवताइ।

२ १र २ ४ ५ ४
सदावृ। धा। औ३होवा। हो५इ। डा ॥ ६ ॥१५३॥

हे "अध्वर्यो" अध्वरस्य नेतः ऋत्विक्! "मधोः"(१) मदकरस्य "अन्धसः" सोमलक्षणस्यान्नस्य "मदिन्तरं" अत्यर्थं मादयितृतमं(२) सोमरसमेव "आसिञ्च" इन्द्रार्थमभिक्षर(३)। [इदु-इत्यवधारणे(४)] "वीरः" समर्थः "सदावृधः" सर्वदा हविर्भिर्वर्द्ध-

---

I,II सुराधसे हे।

(१)—लिङ्गव्यत्ययेन रूपम् (३,१,८५)।

(२)—मदं कर्त्तव्यत्वेन यस्यास्ति स मदी अतिशयेन मदी, मदितरस्तम्। अतिशयेन मदकरमित्यर्थः। अत्र मते "मदितर"-इति नकारहीन-दकारान्वित-पाठ एव बुध्यते।

(३)—ग्रहचमसादाविति भावः।

(४)—"इत्"-"उ" द्वावपि पदपूरणौ इति वि०। "पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति"-इति नि० नै०१,९।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

२ ३ १ २ ३ १ २ ३ १र २र
एन्दुमिन्द्राय सिञ्चत पिबाति सोम्यं मधु।
१र २र ३ २
प्रराधाᳩसि चोदयते* महित्वना ॥ ६ ॥ १५४

२ ४ २ ४ ५ १ ऽर २ १
I एन्दु५ऽमि। द्रा३या३सिञ्चता। पिबा२तिसोम्य-
२ १र २ १र १ २ १
म्मधु। प्रराधा२३ᳩसी। चोदयता३मा३ही। त्वना।
२ ४ ५ ४
औ३होवा। होपु५इ। डा ॥ ७ ॥ १५४ ॥

नीयः। यद्वा। सर्वदा स्वबलस्य वर्द्धकोऽयमेवेन्द्रः "स्तवते(५)हि" स्तोतृभिस्त्वादिभिः स्तूयते खलु (स्तुतायेन्द्राय सोमो दातव्यः तस्मादासिञ्चेति समन्वयः ॥ ५ ॥ १५३

हे ऋत्विजः! "इन्दुं" स्यन्दनशीलं(१) सोमम् "इन्द्राय"

---

* "राधसा चोदयाते"-इति ऋग्वेदीय-पाठः, सायणीयोत्तरभाष्ये च।

---

१५४ उत्तरार्चिकस्य ७,१,८,१ = ६,२,१७,३ = ऊहे १०,२,९।

I मारुतम्।

(५)—विकरण-व्यत्यये रूपम् (३,१,८५)।

(१)—यदाह यास्कः—"इन्दुरिन्धे रुनत्ते र्वेति(१०,४१)"-तद्द्विोनत्ते रूपमिष्टमिति भावः। 'उन्दी क्लेदने (रु० प०)'। क्लेदनत्वाद्भावः सुतरां स्यन्दनशीलमित्यर्थो ऽवगम्यते।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

२ ३ २ ७ १ २ ३ १ २ ३ २ ३ १ २
एतोन्विन्द्रꣳस्तवामसखायःस्तोम्यन्नरम्।
२ १र २र ३ २उ ३ २
कृष्टीर्योविश्वाअभ्यस्त्येकइत्॥ ७॥ १५५५

५ र र ५ १ २र १ ३ २
I एतोन्विन्द्रꣳस्तवाईमा। साखायस्तोर। मिया३४-
१ २ १र र २र १ २ १ २
पुम्। नरमाकृष्टीर्योविश्वाअभि। आ। स्तियाये।
१ ३ ५र र ३ १ १ १ १
काईरदा२३४औहोवा। ऊ२३४५॥ ८॥ १५५५॥

इन्द्रार्थम् "आसिञ्चत" आभिमुख्येन प्रत्याचारयत (आश्रयण-द्रव्येण सेचनं कुरुत तमभिषुणुतेत्यर्थः) ततः "सोम्य"(२) सोम-मयं "मधु" मदकरं सोमरसं "पिबाति"(३) पिबतु। पीत्वा च स इन्द्रः "महित्वना" स्व-महत्वेनैव "राधांसि" अन्नानि स्तो-तृभ्यः "प्रचोदयते" प्रकर्षेण चोदयतु॥ ६॥ १५५४

---

१५५५ ऋग्वेदस्य ६,२,१८,४।

I वैश्वमनसम्।

(२)—"सोममर्हति यः (४,४,१३७)"—"मये च (४,४,१३८)"—इति मयडर्थे यः।

(३)—लेटि (३,४,७)—बाहुलकात्(३,१,३४) सिबभावे—इतोलोपस्यापि वैक ल्पिकत्वात् (३,४,९७)—आड़ागमे (३,४,९४) रूपम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

नृमेधऋषिः।

१२ ३१ २ २ १२ ३२३२
इन्द्रायसामगायतविप्राय बृहतेबृहत्।

२ १२ २ १२ ३१ २
ब्रह्मकृते*विपश्चितेपनस्यवे॥ ८॥ १५६

५ र १ र २ १२ १ १
1 इन्द्रायसा। मागायत। वाइप्रा१याबृ२। हा-

र २ १ ० १ १ २ ५र
तेबृहत्। ब्राह्मकृते२। विपा२३ः। चा२इता२३४औ-

र २ १ ११११
होवा। पनस्यवे२३४५॥ ८॥

हे "सखायः" समानख्याना मित्रभूता ऋत्विजः! "नु" क्षिप्रम् "एतो" आगच्छतैव। किमर्थं? तदाह—"स्तोम्यं" स्तोमार्हं "नरं" सर्वस्य नेतारं "तम्" इन्द्रं "स्तवाम" स्तोत्रं करवाम। य इन्द्रः "एकइत्" एकाकी असहायएव सन् "विश्वाः" सर्वाः

* "धर्मकृते"-इति ऋग्वेदस्य, सायणीयोत्तरभाष्ये च।

१५६ उत्तरार्चिकस्य ३,२,२२,१ = ऋग्वेदस्य ६,७,१,१ = ऊहे २,१७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २　　र　　५र　५　१ २र
II इन्द्रा३४ । यसाम । गायाईता । वाइप्राय-

१　२ २　　३　५　　२ १ र ८　१
बृ२ । हता३४५इ । बृ२३४हात् । ब्रह्मकृते२विपश्चि-

५र　१ २　१ ३　५र र　　३　५
ते२ । ओये३ । पा२ना२३४औहोवा । स्या२३४वे ॥१०॥

२र १र　　२　१　　२
III औहौहोइ । औ३हो३इ । ओ३२३४५वाई५ई ।

१ ५र　१र　२र　　१ ५र　　१र २ १　　२　१
इन्द्रा२यसामगायत । विप्रा२यबृहतेबृहत् । ब्रह्मकृ-

५र　　५　र १र　　२　४　　२
ते२विपश्चिते२ । औहौहोइ । औ३हो३इ । ओ३२३४-

२　२　१ १११
५वाई५ई । ए३ । पनस्यवे२३४५ ॥ ११ ॥१५६ ॥

"कृष्टीः"(१) मनुसेनाः "अभ्यस्ति" अभिभवति तं स्तवामेति शेषः ॥ ७ ॥ १५५

हे उद्गातारः ! "विप्राय" मेधाविने(१) "बृहते" महते "ब्रह्मकृते" ब्रह्मणः अन्नस्य(२) कर्त्रे "विपश्चिते" विदुषे "पनस्यवे"

---

I,II,III सोमित्राणि त्रीणि ।

(१)—"कृष्टयः"-इति मनुष्य-नामसु सप्तमं नैघण्टुकम् (२,३) ।

(१)—"विप्रः"-इति मेधावि-नामसु प्रथमं नैघण्टुकम् (३,१५) ।

(२)—"ब्रह्म"-इत्यन्ननामसु चतुर्विंशतितमं नैघण्टुकम् (२,७) ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

गौतमऋषिः।

२उ ३ २ ३ १ २ ३ २ ३ १ २ २ १ २
यएकइद्विदयतेवसुमर्त्तायदाशुषे।

१ २ ३ १ २ २ १ २ ३ २
ईषानोअप्रतिष्कुतइन्द्रोअङ्ग॥ ९॥ १५७

५ र र २ १ १
I यएकइदिहाहाउ। विदयताइ। वसुमा२३र्त्ता।

१र र र २ र १ २
यदाशुषाइ। ईशानोर२३हा। प्रातिष्कुता३१उवा२३।

५ १ २ २ ४ ५ ४
ई२३४न्द्राः। अङ्गा। औ३होवा। होऽ५इ। डा॥१२॥

३ ५ ३ ५ २ २ ५
II यार३४ए। का२३४ई त्। वीदाया२३४ताइ।

१ २ १ २ १ २ ३ ५ १ २र र १
वासुमर्त्ता२३हा३। यादाशू२३४षाइ। आइशानोअ।

स्तुतिमिच्छते(२) "इन्द्राय" "बृहत्" बृहन्नामकं साम "गायत" पठत॥ ८॥ १५६

---

१५७ उत्तरार्चिकस्य ५,२,२२,१ = ऋग्वेदस्य १,६,६,२, = आरण्ये २,१४ = ऊहे६,७।

(२)—"पनस्यति"-इति अर्चति-कर्मसु पञ्चविंशतितमं नैघण्टुकं, तस्मादुपत्यये (३,२,१७०) रूपम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ ५ १ २र १
प्रता२३हाइ । ष्कू२३४ताः । आइन्द्रोअ । गा२ ।

२ ५र र २ ५
या२३४औहोवा । ई२३४न्द्राः ॥ १३ ॥

५ र र ५ १ २ २ १
III यएकइद्विदायाइताइ । वासुमर्त्तायाइदा । इम् ।

३ ५ १ २र र १ २ १ २र २र
शू२३४षाइ । आइशानोअप्रतिष्कुतः । आइशा । नो-

२ १ २ ५ १ २र १ २
अप्रताइ । ष्कू२३४ताः । आइन्द्रोअ । गा२ । या-

५र र २ ५
२३४औहोवा । ई२३४न्द्राः ॥ १४ ॥ १५७ ॥

"यः" इन्द्रः "एकइत्" एकएव "दाशुषे"(१) हविर्दत्तवते "मर्त्ताय" मनुष्याय यजमानाय "वसु" धनं "विदयते" विशेषेण ददाति [अङ्गेति क्षिप्र-नाम(२)] "अप्रतिष्कुतः" परैरप्रतिशब्दितः [प्रति-कूल-शब्द-रहित इत्यर्थः(३)] एवम्भूतः स "इन्द्रः" क्षिप्रम् "ईशानः" सर्वस्य जगतः स्वामी भवति ॥ ९ ॥ १५७

---

I,II,III त्रैककुभानि त्रीणि ।

(१)—"दाश्वान् साक्षान् मीढ्वांश्च (६,१,१२)।

(२)—"अङ्गेति क्षिप्रनामाञ्चितमेवाङ्कितं भवति"-इति नि० नै०५,१७।

(३)—'स्कु, आवरणे (स्वा० उ०)'-इति स्कुनोते रूपम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी ।

विश्वमना ऋषिः ।

१ २ ३१ १ २ ३ १र २र ३ १ २
सखायआशिषामहे*ब्रह्मेन्द्रायवज्रिणे ।

३ २३ २३ १ २ ३ १ २
स्तुषऊषुवोनृतमायधृष्णवे ॥ १० ॥ १५८

॥ पञ्चम-दशति ॥

५र र ३ २ ४ ५ ३ २ ४
I सखायआहाउ । शिषाइमहेहाउ । ब्रह्माइइन्द्रा-

५ १ २ २ २ १ ०
हाउ । यवज्रिणाइ । स्तूषऊषूइहाइ । वोनृतमा२-

२ १ १ २ ५र र २
इहा । यधा२३ । ष्णायो२वा२३४औहोवा । ऊ२३-

५
४पा ॥ १५ ॥

४ ५र ४र ५ र ४ ५ र र
II सखायआशिषाम । हाइ । ब्रह्मेन्द्रायवज्रि-

* "आशिषामहि"-इति ऋग्वेदस्य ।

१५८ ऋग्वेदस्य ६,२,१५,१ ।

*॥ इति चतुर्थः प्रपाठकः ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



णोवा। आईतो३वा३। होवा३हा३। हाइ। स्तुष-ऊषू२३४। वोहोहाइ। नार्त्ता३मा३। होवा३हा३। हा। यधा२३। वण्यार्वा२३४औहोवा। ई२३४५॥१६॥

III सा४खायः। आशिषा। मा३हाइ। ब्रह्मे-न्द्रायवज्रिणो। हाइ। स्तुषऊषुवो३नार्त्तामा। यार-३४धृ। हा३हाइ। वानार्त्तामा। या२३४धृ। हा-३हा। णावा३इ। औ३हो। औहोवा। त्मघा३इ। औ३हो। औहोवा३४। औहोवा। ऊ३२३४पा॥१७॥१५८॥

"सखायः" मित्रभूता हे ऋत्विजः! "वज्रिणे" वज्रहस्ताये-न्द्राय "ब्रह्म" स्तोत्रम् "आशिषामहे" वयमाशास्महे च [यद्वा। ब्रह्म अस्माभि दीयमानं हवीरूपमन्नम् आशास्मः। शास्तु अनु-

I, II, III औचणे नियानानि त्रीणि।

१०१क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



शिष्टौ (अदा०प०)। व्यत्ययेनात्मनेपदम्(३,१,८५)। अतएव "आशिषामहि"-इति बह्वृचा आमनन्ति ) तत्र "वः" सर्वेषा मेवं युष्माकमर्थाय "नृतमाय" सर्वेषां नेतृतमाय। यद्वा सङ्ग्रामे आयुधानां नेतृतमाय "धृष्णवे" शत्रूणां धर्षण-शीलाय तस्मै इन्द्राय अहमेव "सुस्तुषे" सुष्ठु स्तौमि(१) ॥ १० ॥ १५८

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

अथ पञ्चमे खण्डे—

सैषा प्रथमा।

प्रगाथ ऋषिः ।

३ १र २र ३ १ २ ३ २ ३ १ २
गृणेतदिन्द्रतेशवउपमान्देवतातये* ।

१र २र३ १ र २र
यद्धंसिवृत्रमोजसाशचीपते ॥ १ ॥ १५९

---

* "उपमं भद्रा इन्द्रस्य रातयः"-इति ऋग्वेदीय-पाठः ।

---

(१)—क्वचि "उषु"-इति "सुञः (८,३,१०७)"-इति षत्वे रूपम् ।

१५९ ऋग्वेदस्य ६,४,४०(२३),२ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ २ २ ४ ५ १
I ह्वाउगृणाइ । तदाइइन्द्रातार्इ । शवा२३१२३ः ।

२ ४ ५ २ १ २ २ ३ २
उपाइमान्देवतातयाइ । यद्ध्वँसा२३इर्वा । न्नमोइ-

४ ५ ४ ५ १ २र २ र २ ५र र
जासा । शचौ । पते । औ२३होवा३४ । औहोवा ।

२ ५
द्यू२३४औः ॥ १८ ॥

५ र ३ २ ३र ४ र ४ १
II गृणे । तदा३४ । औहोपइन्द्रते शवाः । उप-

र र २ १र २ ३ २ ३ २ र १
मान्देवताता२३या३४इ । यद्धा३४ँसिवा । न्नमोजसा ।

२ ४र ५ २ १ १ १ १
शा३चीप । ता२३४५इ ॥ १९ ॥

४ र र र ५ १ र ५र ५र
III गृणेतदौहोपइन्द्रते शवाः । उपमान्दे२वतार-

र १ २र र १र २ १ २ १
तये । उपमान्देवताता२३याइ । यद्धँसिवृ । न्नमो-

---

I, प्रयस्वत्, II, आच्चारम्, III प्रयस्वत् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

भरद्वाज ऋषिः।

२ ३ १र २र२ २ ३ १ २ ३ १ २
यस्यत्यच्छम्बरंमदेदिवोदासायरन्धयन्*।

२ ५ ३ ५ ३
२३जसाउ। वा३। शा२३४ची। पा२३४ताइ। हो-
२३४५इ। डा॥२०॥१५९

हे "इन्द्र!" "ते" तव "तच्छवो" बलं "उपमा" अन्तिकं(१) "देवतातये(२)" यजमानाय यज्ञार्थं वा(३) "गृणे" स्तुवे। "यद्" यस्मात् हे "शचीपते!(४)" "वृत्रम्(५)" "ओजसा" बलेन "हंसि" [तस्मात् ते शवो गृण इति सम्बन्धः॥१॥१५९

---

* "रन्धयः"-इति ऋग्वेदीयः पाठः।

---

(१)—"उपमा"-इत्यन्तिक-नामसु अन्त्यं (नैघण्टुकम् २,१६)।—'सर्वबलानामुपमा-भूतम् अत्यन्तोत्कृष्टमित्यर्थः'-इति वि०।

(२)—"सर्वदेवात् तातिल् (४,४,१४२)"-इति स्वार्थे तातिलि रूपम्।

(३)—"देवताता"-इति यज्ञनामसु दशमं नैघण्टुकम् (३,१७)।

(४)—'शचीति कर्म-नाम (नै०२,१,१३) तस्य पतिः शचीपतिः, तस्य सम्बोधनं [हे शचीपते! ज्योतिष्टोमादि-कर्मणामधिपति-भूतइत्यर्थः'-इति वि०।

(५)—'वृत्रं मेघम्'-इति वि०। "वृत्र"-इति मेघनामसु अष्टाविंशतितमं नैघण्टु-कम् (१,१०)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ १२  २२  ३ १२  २२
अयꣳससोमइन्द्रतेसुतःपिब ॥ २ ॥ १६०

२ २  ३ २  ५  २ २
I यस्या३१ । त्यच्छा३१२३४म् । बरम् । मा३दाइ ।

२ २  ३२ २  ५  २ २  ३ २
दिवो३१ । दासा३१२३४ । यर । धा३यान् । अया-

३ २  ५  २ २  ३ २
३१म् । ससो३१२३४ । मई । द्रा३ताइ । सुता३१ः ।

३ २  १  ५  ३  ५
पिबा३ । ओ२३४वा । ऊ२३४पा ॥ २१ ॥

४  ४  १ २ २ २
II यस्यत्यच्छम्बरम्मदाइ । दिवोदासायरन्धयन् ।

०  २  ४ ५  २ २  १ ३  ५२ २
आयꣳससो३ । मइ । द्रताइ३ । सरता२३४औहोवा ।

३  ५
पीर३४बा ॥ २२ ॥

५  २  ४ ५ ४  ५  १ ड २ २ १२ २१
III यस्यत्या३च्छाम्बरम्मदाइ । दिवो२दासायरन्धयन् ।

---

१६० ऋग्वेदस्य ४,७,१५,१ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



७ २ ४५ ३२ १२१ १
आयꣳससोɜ। मइ। द्रताɜइ। सूतआɜɜः। पा

३ ५र र ३ ५
ɜइबाɜɜ४औहोवा। इɜɜ४ती॥ २३॥

२ ५ २ ३ ४ ५ ५ २ र
IV या४स्यत्यत। होइ। शम्बरम्मदाɜइए। दिवो-

र र २ ४ ५ ३ २ ५र
दासायरन्धयन्नयाꣳसाɜसो। मई। द्रताɜ४। औ-

र २ ५ ३
होवा। सूɜɜ४ताः। पिबोɜɜ४५इ। डा॥ २४॥ १६०

हे "इन्द्र!" "त्वं" "यस्य" सोमस्य "मदे" पानेन जनिते हर्षे सति "शम्बरम्" असुरं(१) "दिवोदासाय" राज्ञे "रन्धयन्" [रध हिंसा-संराद्ध्योः (दि०प०)] हन्ता भवसि [त्यदिति क्रिया विशेषणं(२)] तत् प्रसिद्धं यथा भवति तथा हे "इन्द्र!" "सः" "अयं" "सोमः" "ते" त्वदर्थं "सुतः" अभिषुतः। अत एव(३)॥ २॥ १६०

---

I, II, III, IV दैवोदासानि चत्वारि।

(१)—"शम्बरम्"-इति निघण्टौ मेघ-नामसु (१,१०)—उदक-नामसु (१,१२)—बल-नामसु च (२,९) पठितम्। असुरमित्यपि मेघ-नामसु(१,१०) दृश्यते तत्रैव।

(२)—'त्यच्छब्दस्तच्छब्द पर्यायः * * * तं शम्बरम'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

नृमेधऋषिः।

१ २ ३ १ २
एन्द्रनोगधिप्रिय*सत्राजिदगोह्य†।

३ २उ ३ १२ ३१र २र३ २
गिरिर्नविश्वतःपृथुः‡पतिर्दिवः॥ ३॥ १६१

४र ५ ५ २ १ २ १ र २ १र
I एन्द्रनाः। गधिप्रा२३या। सात्राजित्। अगो-

२ ३ २ ३ २ १ १ १
ह्या२३या३४। गिरा३४इर्नवाइ। श्वताःपार्थूइः। पा।

२ ५र र ३ ५
२ता२३४औहोवा। दो२३४वाः॥ २५॥

४ ४ १ र २ १ १र
II एन्द्रनो५गधिप्राया। सात्राजित्। अगोहायौ।

---

* "प्रियः"-इति,
† "दगोह्यः"-इति,
‡ "विश्वतस्पृथुः"-इति च,
} ऋग्वेदीयाः पाठाः।

---

१६१ उत्तरार्चिकस्य ५,१,१९,१ = ऋग्वेदस्य ६,७,१,४ = ऊहे ५,१२।

I,II साम्बर्त्ते द्वे।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

पर्वतऋषिः।

१२ ३१ २३ १२ ३१२
यद्इन्द्रसोमपातमोमदःशविष्ठचेतति।

३२ ३२ऽ ३२३ १२
येनाहꣳसिन्याऽ३त्त्रिण*न्तमीमहे॥ ४ ॥ १६२

२ १ २र २ १ १
होइवा। गिराइर्नवौ। होइवा। स्वताऽ३ः। पाऽ२-

३ ५र ५ १२३२
थूऽ२३४ओहोवा। पतिर्दिवा१ः॥ २६ ॥ १६१ ॥

हे "प्रिय!" सर्वेषां प्रियतम! हे "सत्राजित्" महतां शत्रूणां जेतः! हे "अगोह्य" तिरस्कर्त्तुमशक्य इन्द्र! "गिरिर्न" पर्वत इव "विश्वतः" सर्वतः "पृथुः" पृथुतमः "दिवः" स्वर्गस्य "पतिः" ईश्वरस्य त्वं "नो" ऽस्मान् "आगधि"(१) आगच्छ। ॥ ३ ॥ १६१

---

* "न्यऽ३त्त्रिणं"-इति ऋग्वेदीयः पाठः।

---

१६२ ऋग्वेदस्य ६,१,१,१।

(१)—"अङ्गितश्च (६,४,१०३)"-इति दीर्घः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ १ २ ४ ५ २ १ २ १ २ र
I यइन्द्रसो। मापाइतामाः। मदाःशवाइ। श्चे-

१ २ ४ ५ २ १ २ ४र ५
तताइ। याइनाइहाꣳसी। नियत्रिणाम्। ताइमीम।

३ १ १ १ १
हार२३४५इ ॥ २७ ॥ १६२ ॥

हे "इन्द्र !" "यः" त्वं "सोमपातमः" अतिशयेन सोमस्य पाता हे "शविष्ठ" बलवत्तम ! [शव इति बलनाम (नै०२,९,३) तस्माद्बिन्नन्ता(१) दातिशयनिक इष्टन्(५,३,५५) विन्मतोर्लुक् टि-लोपः (६,४,१५५)] हे ईदृशेन्द्र ! तस्य तव सोम-पान-जनितो यो "मदः" "चेतति" सम्यग् जानाति [वृत्रवधादीनि कार्य्याणि कर्त्तुं। य इत्यस्य चेततीत्यनेन सम्बन्धाद् "यद्वृत्तान्नित्यम्(८,१,६६)" -इति न निहन्यते। अथवैतदेक मेव वाक्यम्—हे बलवत्तमेन्द्र ! सोमपातमः सोमस्य पातृतमो यस्त्वं मदः सोमैर्मादयितव्यस्तर्पयि-तव्यः सन् चेतति। पुरुष-व्यत्ययः(३,१,८५) चेतसि सम्यग् जाना-सि। "मदोनुपसर्गे (३,३,६६)"-इति मदेः कर्मण्यप् प्रत्ययः] "येन" सोम-पान-जनितेन मदेन "अत्रिणम्" अत्तारं राक्षसादिकं "निहंसि" निहिनस्सि निकृष्टां हिंसां प्रापयसि "तं" मदं तादृङ्-

---

I आचारम्।

(१)—पाश्वमिक(५,२,१२२)-बहुल-वचनान्मत्वर्थे विनिः।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

इरिमिठ* ऋषिः।

२ १र २र२ १उ ३ १ २ ३१ २ ३ १ २
तुचेतुनाय†तत्सुनोद्राघीयआयुर्जीवसे।

१ २ ३ १ २
आदित्यासःसमहसः‡कृणोतन ॥ ५ ॥ १६३

४ ३र४ ५र ३ २ ३ ५ २ ३ ५
I तुचेतुना। यताइ२त्सुर२३४नाः। द्राघीयार२३४यूः।

महोपेतं त्वां वा "ईमहे" [याञ्चा-कर्माय(नि०३,१९,१] याचामहे [यद्वा। ई गतौ दैवादिकः(प०)। छान्दसो विकरणस्य लुक् (२,४,७३)। ईयामहे उपगच्छामः स्तुतिभिः सम्भजामहे इत्यर्थः ॥ ४ ॥ १६२

---

* 'इतिमिठि'-इति वि० पाठः।

† "तुचे तनाय" } इमौ ऋग्वेदीयौ पाठौ।
‡ "सुमहसः" }

---

१६३ ऋग्वेदस्य ६,१,२८,२।

I दीर्घायुष्यम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ८ १ १ १ १ २ १ ३
जीवासा२इ। आदीत्यासा२ः। समहसा२ः। कृ-
२ ४ ३ १ १ १ १
णोइताउ। नाइ३४५॥ २८॥ १६३॥

हे "सुमहसः" शोभन-तेजस्काः(१) हे "आदित्यासः" अदितेः पुत्राः! "नो" ऽस्माकं "तुचे" पुत्राय(२) "तुनाय" [तनोतेर्लुक्(३)। तनोति कुलमिति तुनः पौत्रः। उकारोपजनश्छान्दसः(४)। अत एव बह्वृचा "तनाय"-इति पठन्ति। तस्मै तुनाय] पौत्राय च(५) "जीवसे(६)" जीवनाय "द्राघीयो" दीर्घतमं तत् प्रसिद्धम् "आयुः" जीवितं "सु" सुष्ठु "कृणोतन" कुरुत॥ ५॥ १६३

---

(१)—विवरण-नये महस इति मह पूजायामित्यस्य रूपम्। अतएवोक्तं तत्र 'सुमहसः सुपूजाः कृणोत कुरुतेत्यर्थः'-इति।

(२)—"तुक्"-इत्यपत्य नामसु प्रथमं नैघण्टुकम् (२,२)।

(३)—लुकि कित्वे "तनिपत्योश्छन्दसि (६,४,९९)"-इति उपधा-लोपः फलम अनन्तरञ्च तत्र उकारोपजनः।

(४)—उपजनोऽत्र वर्ण-वृद्धिः, आगम इति भावः। तत्र च व्यत्ययवचनं शरणम्।

(५)—'तनायेति धन-नाम (नै०२,१०,१९)। तस्मादियं तादर्थ्ये चतुर्थी, धनस्य चार्थायेत्यर्थः'-इति वि०।

(६)—'जीवसे" इति "तुमर्थे सेऽसे (३,४,९)" नित्यादिना सिद्धम।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

विश्वमना ऋषिः।

३ १र २र ३ १२ ३१२
वेत्थाहिनिर्ऋतीनांवज्रहस्तपरिवृजम्।
१ २ ३ १ २३१२
अहरहःशुन्ध्युःपरिपदामिव ॥ ६ ॥ १६४

४र५र ४ ५ र ४ १ २ १
I वेत्थाहिनिर्ऋतीनाम्। वाज्रहस्तपरिवृ। जाम्।
२ १ २ १ २ १२ ४
अहर। हाः। शुन्ध्युःपरि। पदा३मापुइ्पूना ६५६

॥ २८ ॥ १६४

इदानी मृषिरिन्द्रं सम्बोध्याह—हे "वज्रहस्त" वज्रयुक्त-हस्तेन्द्र! निर्ऋतीनाम्" उपद्रवकारिणां रक्षसां(१) परिवर्जनं (हिरवधारणे) त्वमेव "वेत्थ" जानीषे। तत्र दृष्टान्तः—अह-रहरित्यादिः। "शुन्ध्युः" (अस्मिन्नुदिते सति ब्राह्मणा आत्मीयं कर्म्म कृत्वा शुद्धा भवन्तीति शोधन-हेतुत्वाच्छुध्युरादित्यः) आ-दित्यः "परिपदामिव" परितः पद्यमानानां यजमानानां [यद्वा।

१६४ ऋग्वेदस्य ६,२,१९,२।

I शुन्ध्युः साम।

(१)—'निर्ऋतिर्मृत्यु-देवता, तस्याः सम्भूतानां प्रवृत्तीनां मारणात्मिकानाम्'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

इरिमिठऋषिः ।

१र २र ३ २ ३ २ ३ १ २　३ २
अपामीवामपस्रिधमपसेधतदुर्मतिम् ।
१ २　३ १ २ ३ १　२
आदित्यासोयुयोतनानोअंहसः ॥ ७ ॥ १६५

४ र ५र र ४　१　र २ १
I अपामीवामपा । स्त्रिधाम् । अपसेधतदुर्मा२३-
२　१　१　१र र　२ १　५
तीम् । आदी रित्यासा २ः । युयोतन।नओवा३ओ२३४वा ।
४　५
हापुसोईहाइ ॥ ३० ॥ १६५ ॥

परितः पततां पक्षिणां वर्जनं स्व-स्थान-त्यागम्] "अहरहः" प्रतिदिनं यथा वेति ।

उदिते सूर्ये पक्षिणः स्वस्थानं परित्यज्य सर्वतो गच्छन्ति खलु। एवं त्वयोन्द्रे स्ववलेन प्रकाशमाने सति शत्रवः स्वपुराणि त्यक्त्वा पलायन्त इत्यर्थः ॥ ६ ॥ १६४

हे "आदित्यासः" आदित्याः! "अमीवां" रोगम् "अपसेधत" अस्मत्तोपगमयत। "स्त्रिधं" बाधकं शत्रुं च अपसेधत।

---

१६५ ऋग्वेदस्य ६,१,२६,५।

I अपामीवम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

वसिष्ठऋषिः।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
पिबासोममिन्द्रमन्दतुत्वायन्ते सुषावहर्यश्वाद्रिः।

२ २ ३ १ २ १ २ ३ १ २
सोतुर्बाहुभ्याꣳसुयतोनार्वा॥ ८॥ १६६

॥ प्रथम-दशति॥

५ ४ १र १र २
I पिबा। सोममिन्द्रमन्दतुत्वा२। यन्तेसुषावह-

२ १ २ १र २ २
रिया। श्वा२३द्रीः। सो२३तूः। बाहूभी३या३म्।

१ २ ५र र २ १र १ १ १ १
सुयो२ता२३४औहोवा। ए३। नावा२३४५॥ ३१॥

"दुर्मतिम्" अस्माकं दुःखस्य मन्तारञ्च अपसेधत। अपिच हे आदित्याः! "नो" ऽस्मान् "अंहसः" पापात् "युयोतन"(१) पृथक्कुरुत॥ ७॥ १६५

---

१६६ उत्तरार्चिकस्य ३,१,१३,१ ऋग्वेदस्य ५,३,५,१= आरण्ये १,२,२० —११,३१ —३,२५= ऊहे २२,२,१ —३= ऊह्ये १,१० —५,२,३।

I वैराजम्।

(१) —"तप्तनप्तनथनाश्च (७,१,४५)" इति तस्य तनादेशे रूपम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४　५　१　२　१　२
II हाउपिबा । सोममिन्द्र । मा । दतुवाइ ।

१　२　१र　र　२
दतुवा । यन्ते सुषावहरिया । श्वा१द्रो२ः । श्वाद्री२ः ।

र　१　र　२　१　२　१　३
सोतुर्बाहूभ्याम् । सुयताइः । सुयताइः । नार्वा२३४

५र　र　३१११
औहोवा । ई२३४५ ॥ ३२ ॥ १६६ ॥

हे "इन्द्र !" "सोमं" "पिब" । सोमः त्वां "मन्दतु" मादयतु हे "हर्यश्व !" "ते" त्वदर्थं "सोतुः" अभिषवकर्त्तुः "बाहुभ्याम् अर्वा न" रश्मिभ्यामश्वइव "सुयतः" -सुष्ठु परिगृहीतः(१) "अद्रिः"(२) ग्रावायं "सोमं" "सुषाव" ॥ ८ ॥ १६६

इति श्रीसायणाचार्य्य-विरचिते माधवीये-सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य पञ्चम-खण्डः ॥ ५॥

---

## II सहोदैर्घतमसम् ।

(१)—'कथं पिबामि ? उच्यते—सुयतः सुबद्धः'-इति वि० ।

(२)—'अद्रिः प्रथमैकवचनमिदं तृतीयैकवचनस्य स्थाने द्रष्टव्यम्, अद्रिभिः अभिषावभिरित्यर्थः'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठे खण्डे—

सैषा प्रथमा।

सौभरिर्ऋषिः।

२ २ ३ १र २र ३ १० ३ १ २
अभ्रातृव्योअनात्वमनापिरिन्द्रजनुषासनादसि।

३ १२ ३ १ २
युधेदापित्वमिच्छसे॥ १॥ १६७

४ र र ४ ३ १र ३ १
I अभ्रातृव्योऽ२ऽ अनातुवाम्। अनापिराइन्द्रा २।

१ ३ २ २ ५ १ १र,र
ज। नुषा२। सना३४पुत्। आ२३४सी। युधेदा२-

१ २र ३ २
पित्वमिच्छसे। युधा१॥ २३॥ १६७॥

हे "इन्द्र!" त्वं "जनुषा" जन्मनैव "अभ्रातृव्यः" ["व्यन् सपत्ने (४,१,१४५)"-इति व्यन् प्रत्ययः) सपत्न-रहितः "अना" अनेतृकः ["ऋतश्छन्दसि (५,४,१५८)"-इति कपः प्रतिषेधः] अनियन्तृक इत्यर्थः। "अनापि" बन्धु-वर्जितश्च "सनादसि" चिरादेव भ्रातृव्यादि-वर्जितोऽसि। यत्र त्वम् "आपित्वं" बान्धवम्(१) "इच्छसे"

---

१६७ उत्तरार्चिकस्य६,२,४,१ = ऋग्वेदस्य ६,२,३,४ = आरण्ये २,१६ = ऊहे७,१०।

I अभ्रातृव्यम्।

(१)—'भ्रातित्वम्'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

सौभरिर्ऋषिः।

१ २ ३ १ २ ३ १ २ २ २ ३ २ ३ १ २
योनइदमिदंपुराप्रवस्यआनिनायतमुवस्तुषे।
१ २ ३ १ २ ३ १ २
सखायइन्द्रमूतये॥ २॥ १६८

४ २ ५ २ १ २ १
I योनोहाउ। इदाम्। इदंपुरा२३हाउ। प्रवा।
२ १ २ २
प्रवस्यआ२३हाइ। निना। निनायतमुवा२३हाउ।
१ २ २ १ २ २
स्तुषाइ। सखायआ२३हाइ। द्रमूता२३या३४३इ।
१
ओ२३४५इ। डा॥ ३४॥

५ २ ४ २ ३ ४ ५ १ २ २ २ २ १
II योना३इदमिदंपुरा। योनइदमिदा१०पू३रा। प्र-
२ २ ४ २ ३ ५ १ २ ४
वस्यआनिना। यता३मू३वस्तूषाइ। निना। यता३मू-

इच्छसि तत्र "युधेत्"-युद्धेनैव(२) युद्धं कुर्वन्नेव स्तोतॄणामर्थाय सखा भवसीति॥ १॥ १६७

---

१६८ ऋग्वेदस्य ६,२,२,४।

I,II ग्रार्करे द्वे।

(२)—इच्छन्द इव एवार्थः।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

सौभरिर्ऋषिः।

१ २ ३ १ २ ३ १ २ ३ १ २

आगन्तामारिषण्यतप्रस्थावानोमापस्थात*समन्यवः।

२ १ २

दृढाचिद्यमयिष्णवः† ॥ ३ ॥ १६९

२ १ ५ २ १ १ २ ४

इवस्तुषाइ। सखाया २ः। आ२३इ। इमूइताप्रयाइ-

पुईइ ॥ २५ ॥ * १६८

"सखायः" समान-ख्याना हे ऋत्विग्यजमानाः! "यः" इन्द्रः "पुरा" पूर्वम् "इदम् इदम्" दर्शनीयतया विद्यमानं "वस्यः" वसीयः (वसोरीयसुनीकारलोपश्छान्दसः) प्रशस्तं वसुनोऽस्मान् "प्राणिनाय" प्रकर्षेणानीतवान्। "तमु" तमेव धनरनामानेतारम् इन्द्रं "वो" युष्माकं धन-लाभार्थम् "ऊतये" रक्षणाय च "स्तुषे" सौभरि रहं स्तौमि ॥ २ ॥ १६८

---

* "स्थाता"-इति, †"स्थिराचिन्नमयिष्णवः"-इति च ऋ०।

---

१६९ ऋग्वेदस्य ६,१,२६,१।

---

* ॥ इति ग्रामे गेये दशमः प्रपाठकः ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४२ ५ ४　　२र　१　　२　१ र
I ओम् ॥ आगन्ता । मारिषण्या२३ता । प्रास्था-

२र र १र　२र　१ ७　　　१ २　२　　४ ५
वानोमापस्थात् । सामन्यावा२ः । दृढाचीद्या३ । मयोवा ।

४　　५
ष्णापुवोईहाइ ॥ १ ॥ १६९

हे "प्रस्थावानः" प्रस्थातारः प्रगन्तारो(१) "मरुतः" ! "आगन्त" अस्मानागच्छन्त । "मारिषण्यत"(२) अनागमनेन नोऽस्मान्मा हिंसिषत । हे "समन्यवः" समान-तेजस्काः समान क्रोधाः ! वा "दृढ़ाचित्(३)" दृढ़ान्यपि पर्वतादीनि हे "यमयिष्णवः" नियमयितृत्वशीलाः ! नियमयितारः ! "मापस्थात" अस्मत्तोन्यत्र मातिष्ठत अस्मास्वेवावतिष्ठध्व-मित्यर्थः ॥ २ ॥ १६९

---

I बृहत्कम् ।

(१)—'मरुतामुपरि युद्धार्थं गन्तार इत्यर्थः'-इति वि० ।

(२)—"दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति (७,४,३६)"-इति सिद्धम् ।

(३)—इह चिच्छब्दोऽप्यर्थः । "चिदित्येषोऽनेककर्मा"-इत्यादि नै०१,४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

सौभरिर्ऋषिः।

१ २ ३२उ ३१ २ ३१२३१२
आयाह्ययमिन्दवे*श्वपते गोपत उर्वरापते।

१ २
सोमꣳसोमपते पिब ॥ ४ ॥ १७०

४र ५र ४ २१ र २ १
I आयाही। अयमिन्दवे। श्वपा२३ताइ। गोप-

२ १ २ ३र २ २र
तउ। र्वरा१पाता२३४इ। सोमा३म्। सोमा२३।

१ २ ५र र २ ५
पार्ता२३४ओहोवा। पी२३४बा ॥ २ ॥

४र ५र ४ २ १ २ २ १ २र१र
II आयाहिया। या३माइन्दा३वे। आश्वपतेगो-

२र १ ७ १ २ २ १
पते। ऊ। र्वरा२३हा३इ। पा३ताइ। सो२३४मꣳ

---

* "याहीमइन्दवो"-इति ऋग्वेदीय-पाठः।

---

१७० ऋग्वेदस्य ६,२,१,३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

सौभरिर्ऋषिः*।

१ २　　३ २ ३१र २र३ १ २
त्वया ह स्विद्युजा वयं प्रति श्वसन्तं वृषभ ब्रुवीमहि।

५　　१　　२ २　　१　　६　　५र
हाइ। सो। म। पते३हा३इ। पार३४इवा। एहि-

५　　४
याईहा। होपुइ। डा॥ ३॥

५र र　　५　　२ १ २　　र
III आया३ह्ययमिन्दाईवाइ। अश्वापा१ता२इ। गो

२　　१ ३　　४　　१　　२　　२
पाताऊ३। वंरार२पार३४ताइ। सोम९सोमा३१। प-

१　　२ १　　५ २　　५　४ ५
ताइ। पिबा३ओर२३४वा। ऊर२३४पा। ऊपा॥ ४॥ १७०

"अश्वपते" अश्वानां स्वामिन्! "गोपते" गवां पालयितः "उर्व-रापते" सर्व-शस्याढ्या भूमिरुर्वरा तस्याः पते हे इन्द्र! "इन्दवे" सोमाय तुभ्यम् (अयं सोमोभिषुत इति शेषः) तस्माद् "आयाहि" सोमं प्रत्यागच्छ, आगत्य "सोमपते" हे इन्द्र! "सोमं" "पिब"॥ ४॥ १७०

---

* "प्रयोगोनाम ऋषिः"-इति वि०।

---

I,II,III सौधवसानि त्रीणि।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १र २र ३ १ २
सꣳस्थेजनस्यगोमतः ॥ ५ ॥ १७१

५ र १र २ १ ०
I त्वयाहस्वीत्। यूजावयम्। प्रातिश्वासा २।

१ २ १ २ ३ २ १ २
तंवृषभ। ब्रूवो१माहा२३४इ। सꣳस्था२इ। जानस्य-

१ ५ ३ ५
गोर२३४वा। मार२३४ताः ॥५ ॥१७१

"वृषभ" वर्षितः! हे इन्द्र! "गोमतः" गवादि-युक्तस्य जनस्य "संस्थे" स्थाने युद्धे(१) "श्वसन्तम्" अस्मान् प्रति क्रोधातिशयेन श्वास-कारिणं शत्रुं "युजा"(२) सहायेन "त्वया ह स्वित्" त्वयैव खलु(३) वयं "प्रति ब्रुवीमहि" प्रतिवचनं कुर्मः निराकरिष्यामइत्यर्थः ॥ ५ ॥ १७१

---

१७१ ऋग्वेदस्य ६,२,३,१ = यजुर्वेदस्य २१,६।

I धेनुसाम।

(१)—'सन्तिष्ठन्ते यत्र योद्धारः स संस्थः सङ्ग्रामः, तस्मिन् संस्थे'-इति वि०।

(२)—युज्यत इति युक्‌ सहायः, तेन युजा।

(३)—स्विदर्थः खल्विति। 'स्विदिति पदपूरणः' इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी* ।

१ २ क३२र ३१३ १२
गावश्चिद्घासमन्यवः सजात्येनमरुतः*सबन्धवः ।

३१२ ३१२ ३२
रिहतेःकुभोमिथः ॥ ६ ॥ १७२

५र र ५ २र १र
I गावश्चिद्घासाईमन्यवाः । सजात्येनमरुतःसबन्ध-

१ २१र २ २ १ २ ४५
वार३होइ । रिहतेकाकू३भो । मिथा । औ३होवा ।

४
होपुइ । डा ॥ ६ ॥ १७२

"समन्यवः" समान-तेजस्काः समान-क्रोधा वा हे मरुतः ! "गावश्चित्" गावश्च युष्मन्मातृभूताः(१) "सजात्येन" समान-जाति-

---

* 'मारुतीयम्गण् । सौभरेरार्षम्'-इति वि० ।

† "मरुतः"-इति । ‡ "रिहते"-इति च ऋग्वेदे स्वरभेदेन पठ्यते ।

---

१७२ ऋग्वेदस्य ६,१,४०,१ ।

I सवेशीयम् ।

(१)—'गो शब्देनात्र आदित्यरश्मय उच्यन्ते । चिच्छब्द उपमायाम् । आदित्यरश्मयइव, * * *,आदित्यरश्मय इव सर्वे सदीप्ताइत्यर्थः'-इति वि० । "गावः"-इति रश्मिनामसु तृतीयं नैघण्टुकम् (१,५) ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

द्वयोर्नृमेधऋषिः।

१ २०३१ २३१२ ३१ २
त्वन्नइन्द्राभरओजो*नृम्णꣳशतक्रतोविचर्षणे।

त्वेन एकस्माद्व्रजत इति(२) एवं "सबन्धवः" समान-बन्धुकाः सत्यः "ककुभो" दिशः(३) प्राच्यादि-दिग्भागान् प्राप्य "मिथः" परस्परं "रिहते" लिहन्ति (घेति पूरकः ॥ ६ ॥ १७२

---

* "नृमेधस आर्षम्"-इति वि०।

† "भरँओजो"-इति ऋग्वेदीय-पाठः, सायणीयोत्तर-भाष्ये च।

---

(२)—'सर्वेषां कथं समानजातित्वम्? एकस्मात् पृश्नेः सकाशाज्जायमानत्वात्'-इति वि०।

(३)—'ककुभः प्रधानभूताः, आदित्यरश्मयः, * *, अथवा ककुभो दिशः, दिक्-शब्देनात्र दिग्वासिनो यजमानालक्ष्यन्ते, तान् आस्वादयन्ति उपजीवन्तीत्यर्थः। कथमुपजीवन्ति? उच्यते—मिथः सहभूताइत्यर्थः। अथवा गाव एव समन्यवो दोग्ध्राः, सजात्यः सपत्नाः पुत्र-पौत्र-भ्रात्रादि-सहिताः'-इति वि०।

(४)—अत्र विवरणकृत्—'आ-इत्युपसर्गश्रुते भरेत्याख्यात मनुषज्यते, आभर। वीरं पुत्रम्। कीदृशं पुत्रम्? पृतनासहं पृतना इति सङ्ग्राम-नाम, तस्मिन् शत्रूणा मभिभवितार मित्यर्थः'-इति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ १ २ ३ १ २
आवीरंपृतनासहम्* ॥ ७ ॥ १७३

४ ५ ४ २ १र २ १ र २ १
I त्वन्नई । द्रआभार२३रा । ओजोनृम्णम् । शत-

२ १ २ ३ ५ १ र २ २ २
क्रता२३उ । वीचर्षा२३४णाइ । आवीरंपा२हा२ । ता२-

२ ५र र २ ५
ना२३४औहोवा । सा२३४हाम् ॥ ७ ॥

४ ५ ४ १र २ १ र २ १
II त्वन्नइन्द्रा । आभार२३रा । ओजोनृम्णम् । शत-

२ १ २ ३ ५ २र १र २ ३ र
क्रता२३उ । वीचर्षा२३४णाइ । आवीरा२३म्पा । तना-

२ १ ४ ५ ४
सहाम् । औ२३होवा । होपुइ । डा ॥ ८ ॥ १७३

हे "शतक्रतो" बहु-कर्मन् ! "विचर्षणे" विविध-द्रष्टरिन्द्र ! "त्वं" "नो" ऽस्मभ्यम् "ओजो" बलं "नृम्णं" धनञ्च "आ भर"

---

* "पृतनाषहम्"--इति ऋग्वेदीयः पाठः ।

---

१७३ उत्तरार्चिकस्य ४,२,१३,१ = ऋग्वेदस्य ६,७,२,४ = ऊहे ४,१८ ।

I,II आभरे द्वे ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

क २र ३ १ २३ १ २३१२ ३ १२
अधाह्यीन्द्रगिर्वणउपत्वाकामईमहेसहृग्महे*।

३२३१ २ ३१ २
उद्देवग्मन्त† उद्भिः ॥ ८॥ १७४

४ ५र ४ २ १ २ १ २र र २र
I अधाह्यिया। द्रगिर्वा२३णाः। उपत्वाका। मई-

२ १ २ १ १ २
मा२३हाइ। सहृग्मा२२हाइ। ऊदे२। वग्मा२३ताः।

१ २ ४ ४
उदा२३भाइः। इडा५भीः। ह्योंपुइ। डा ॥ ८॥

५र र ५ १ ५र र १ २
II अधाह्यीन्द्रगिर्वा६णाः। ऊपत्वाका। माई१मा-

आहर। "वीरं" वीर्योपेतं "पृतनासहं" सेनानामभिभवितारं त्वाम् "आ" ह्वयामह इति शेषः(४) ॥ ७ ॥ १७३

---

* "कामान्महःसमृज्महे"-इति ऋग्वेदीय-पाठः।

† "उदेवयन्त"-इति ऋग्वेदीय-सायणीयोत्तरभाष्ये च।

---

१७४ उत्तरार्चिकस्य १,१,२३,१ = ऋग्वेदस्य ६,७,२,१ = जहे१,१७,=१०,२,८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हा२इ । साह्मग्भाहा२इ । ऊदे१वाग्मा२३ । तञ्ओवा । दा५भोई्हाइ ॥ १० ॥

III अधाहीन्द्रगिर्वणाइ्ए । उपत्वाका । माई१मा-हा३इ । साह्मग्मा२३४हाइ । उदौ३हो३ । वा३हा३ । ग्मा२ । तऊ३४औहोवा । दभी३रे२३४५ ॥ ११ ॥१७४

हे "गीर्वणः" गोर्भिर्वननीयेन्द्र ! "अधा हि"(१) सम्प्रति "त्वा" त्वां "कामो" काम्ये निमित्ते । [यद्वा । काम इति सुपां सु(७,१,३९) कामान्(२)] "ईमहे" याचामहे(३) । किञ्च । याचमानाः सन्तः "उपसस्मृग्महे" उप सृजामः स्तुतिभि स्त्वां संयोजयाम इत्यर्थः ॥ तत्र दृष्टान्तमाह—"उदेव" यथो-

---

I.II,III ऐषिराणि त्रीणि ।

(१)—'अध इत्ययं पदपूरणः । हीत्ययं हेतौ'-इति वि० ।

(२)—'कामः-प्रथमैकवचन मिदं द्वितीयैकवचनस्य स्थाने द्रष्टव्यम्, कामं— कामशब्देनात्र काम्यमानत्वात् धनमुच्यते कामं धनम्'—इति वि० ।

(३)—"ईमहे"-इति याञ्चा-कर्मसु प्रथमं नैघण्टुकम् ३,१९ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

द्वयोः सौभरिः।

१ २ ३ २३ २ ३ १ २ ३ १ २ ३ २ ३ १ २
स्सीदन्तस्ते वयोयथा*गोश्रीते मधौमदिरे विवक्षणे।

३ १र २र
अभित्वामिन्द्रनोनुमः॥ ६॥ १७५

२ ५ र ४ ५र ५ २र १ २र १
I स्सा३४इ। दन्तस्तेव। योयाई था। गोश्राइतेम।

२र १ २ ४ ५ ३ १ १ १ १ २ १ र
धौमदिराइ। वा३इवक्ष। णा२३४५इ। अभित्वामा-

२ ४ २ ३ १ १ १ १
इन्द्रा३नो३। नू३४५। मा२३४५ः॥ १२॥

दकेन "स्मन्तो"(४) गच्छतः पुरुषाः "उदभिः" अञ्जलिना उत्-
क्षिप्योदकैः समीपस्थान् क्रीडार्थं संसृजन्ति तद्वदित्यर्थः।
"संसृजमहे"-इति बह्वृचाः पठन्ति॥८॥ १७४

---

* "यथा"-इति ऋग्वेदीयः; स्वरे भेदः।

---

१७५ ऋग्वेदस्य ६,२,१,५।

(४)—"छन्दस्युभयथा (३,४,११७)"-इति सिद्धम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३र ४ ५ र ४ ५　३ २　१　र ५ र४ ५र
II सीदन्तस्तेवयः । यथा३ । गो२३४ । औतेमधौम-

४ ५ ५　३ २　२　१　५　२ २
दिराइ । विवा३ । हा३ । चा२३४णाइ । अभी३ ।

२　१　५　३ २　१　ऽ　५
हो३इ । त्वा२३४मौ । इनो३ । नू२३४माः । उ-

५
हुवाईहाउ । वा ॥ १२ ॥ १७५

हे "इन्द्र !" "गोश्रोते" (श्रीञ् पाके । गोर्विकारो दधि पयश्च गोशब्देनोच्यते । तेन) दध्ना पयसा च श्रीते मिश्रिते "मदिरे" मदकरे "विवक्षणे"(१) स्वर्ग-प्रापण-शीले त्वदीये "मधौ" सोमे "सीदन्तो" निवसन्तः । सदने दृष्टान्तः—"वयो-यथा पक्षिणो यथा एकत्र सङ्घीभूय तिष्ठन्ति तद्वत् सीदन्तो वयं "त्वाम्" "अभि" आभिमुख्येन "नोनुमः" पुनः पुनः भृशं वा स्तुमः ॥ ८ ॥ १७५

I,II सोदन्तीये द्वे ।

(१)—'वक्तमिच्छतें'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

३ २ ३ १ २ २ २उ ३ १ २ ३ १ २
वयमुत्वामपूर्व्य स्थूरंनकच्चिद्भरन्तोवस्यवः।

१ २ ३ १ २
वज्रिंश्चित्रᳪ* हवामहे॥ १० ॥१७६

॥ द्वितीय-दशति ॥

५ ३ २र ३ ४र ५ २र १ ७
I वयमुत्वामपूर्विया। स्थूरन्नकच्चिद्भरन्तआवस्यावा

५ ३ २ १ ४ २
२३४:। वज्रिन्। चित्रा३म्। हा२३वा३। मा३४५

५
होईहाइ॥ १४ ॥

५ ४ ५ ४र ५ र र ४ ५ ४ ५ २
II वयमुत्वामपूर्व्यस्थूरन्नकच्चिद्भरन्तः। ओवा। हाइ-

१ ३ १ १ १ १ १ १ २ २ ३ २ १ १
हाइ। अवस्यावा२३४५:। हा३हाइ। वज्रिंश्चित्रार-

---

* "वाजेचित्रं"--इति ऋ० सायणीयोत्तर-भाष्ये च।

---

१७६ उत्तरार्चिकस्य १,१,२२,१ = ऋग्वेदस्य ६,२,१,१ =ऊहे १,१९-२१,१०।

I पक्थसाम। II सोभरम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ १ १　　२ — २　　३ र　　१　　५
३४५म्। हाउहाइ। हवा३। मा२३४हाइ। उहू-
५
वाईहाउ। वा॥ १५ ॥१७६

हे "वज्रिन्" वज्र-युक्त! "अपूर्व्य" त्रिषु सवनेषु प्रादुर्भूतत्वादभिनव! "भरन्तः" सोम-लक्षणै रन्नैस्त्वां पोषयन्तो वयं "चित्र" चायनीयं विविधरूपं वा "त्वामु" त्वामेव "अवस्यवः" अवो रक्षणमात्मनइच्छन्तः सन्तः "हवामहे" त्वामाह्वयामः तत्र दृष्टान्तः—"स्थूरं न"(१) यथा भरन्तो व्रीह्यादिभिर्गृहं पूरयन्तो जनाः "स्थूरं" स्थूलं गुणाधिकं "कञ्चित्" कञ्चिन्मानवं यथा ह्वयन्ति तद्वत्॥ १०॥ १७६

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य षष्ठः खण्डः॥ ६॥

॥ इत्यौष्णिहं काकुभम्॥

---

स्वादोरष्टादशस्वृक्षु चरमा नतमित्यसौ।
उपरिष्टाद्बृहत्याम्नाताः सप्तदश पङ्क्तयः(क)॥

---

(१)—'स्थूरच्छब्दर्द्दृश्वरवचनः'-इति विवरणकारः। अत्र मते "स्थूरन्न"-इति पाठः।

(क)—"स्वादोरित्था"-इति तृतीयदशतादारभ्य "नतमंहो"-इति चतुर्थदशत्यन्तिमान्ता अष्टादश ऋचः, तत्र "नतम्"-इति असौ अन्तिमा ऋक् उपरिष्टाद्बृहती-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



चन्द्रमानतमित्येते वैश्वदेव्यौ(ख) प्रतीत्यसौ।

आश्विनी(ग) तिस्रआग्नेय्यआतेअग्नइधीमहि॥

आग्नीं नाग्नोन्तमित्येता(घ)महेनोअद्य चौषसी।

सौमी भद्रन्नइत्येषा(च) शिष्टाऐन्द्राउदीरिताः(छ)॥

तत्र सप्तमे खण्डे—

सैषा प्रथमा।

आदितोगोतमोनामऋषिः सम्परिकीर्त्तितः।

३ २ २ १ २ ३ २३ १ २ क २र

स्वादोरित्थाविषूवतोमधोः*पिबन्तिगौर्यः।

---

* "मध्वः" इति ऋग्वेदीय-पाठः।

---

छन्दस्का। अपराः सप्तदश ऋचः पँक्तयः पँक्ति-च्छन्दस्काः। इति छन्दः-सङ्केतः।

(ख)—"चन्द्रमा"-इति नवमी, "नतम्"-इति अष्टादशी एते ऋचौ वैश्वदेव्यौ-अनयोः विश्वेदेवा देवताः।

(ग)—"प्रतिप्रियतमं"—असौ दशमी ऋक् आश्विनी अश्वि-देवताका।

(घ)—"आतेअग्नइधीमहि"-इति एकादशी, "अग्निं न"-इति द्वादशी, "अग्निं-न्तम्"-इति सप्तदशी एताः तिस्र ऋचः आग्नेय्यः।

(ङ)—"महेनो अद्य"-इति त्रयोदशी ऋक् औषसी उषोदेवताका।

(च)—"भद्रं नो"-इति चतुर्द्दशी इयमृक् सौमी सोम-देवताका।

(छ)—शिष्टाः दश ऋचः ऐन्द्राः इन्द्र-देवताकाः उदीरिताः मन्त्रदृष्टिभिरित्यर्थः।

-इति दैवत-सङ्केतः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३र २र ३ १ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
याइन्द्रेणसयावरीवृष्णामदन्तिशोभथा*वस्वीरनुस्वराज्य-
म् ॥ १ ॥ १७७

४र ३र ४ २र ४५र ३२ १ ५र
I स्वादोरित्थाविषू । वताइः । मा२३४ । धोःपि-

र ४ ५ १र र २ १र २ १२र
बन्तिगौ । रियाः । याइन्द्रेण सयावा२३रीः । वृष्णा-

१२ १र २ १ २ १ र २
मद । तिशोभा२३था । वस्वाइरा१नू२ । स्वाराजियम् ।

१ २ १
इडा२३भा३४३ । ओ२३४५इ । डा ॥ १६ ॥ १७७

"स्वादोः" स्वादुभूतस्य रस-युक्तस्य "इत्था विषूवतः" इत्थमनेन प्रकारेण सर्वेषु यज्ञेषु व्याप्तियुक्तस्य(१) "मधोः" मधुर-रसस्य सोमस्य ("क्रियाग्रहणं कर्त्तव्यमिति" कर्मणः सम्प्रदानत्वाच्चतुर्थ्यर्थे षष्ठी) एवं विधं सोमं "गौर्यो" गौरवर्णा गावः

---

* "शोभसे"-इति च ऋ० ।

---

१७७ उत्तरार्चिकस्य ३,२,१५,१ = ऋग्वेदस्य १,६,६,५ = आरण्ये १,२,२१—२,९,१०—३,१५—१७-१८ ।

I याममु ।

(१)--विषुवत इति विप्लृ व्याप्ताविल्यस्य (स्वा० उ०) ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ २उ ३ २उ ३ १ २ ३ २ ३ १ २
इत्थाहिसोमइन्मदोब्रह्म*चकारवर्द्धनम्।

१ २ ३ १ २ ३ १र २र३ २ ३ २ ३ १ २ २
शविष्ठवज्रिन्नोजसापृथिव्यानिःशशाअहिमर्चन्ननुस्व-

१ २
राज्यम्॥ २॥ १७८

५ र २ १ २ १ २ १र २१
I इत्थाहिसो। मइन्मा२३दाः। ब्रह्मचका। रवर्द्धा-

२ १ २ १र २ १र
२३नाम्। शविष्ठव। ज्रिन्नोजा२३सा। पृथिव्यानिः-

"पिबन्ति"। या गावः "वृष्णा" कामाभिवर्षकेणेन्द्रेण "सया-
वरीः" सह गच्छन्त्यः सत्यः "मदन्ति" हृष्टा भवन्ति। ताः
"इन्द्रपीतस्य" सोमस्यावशेषं पिबन्तीत्यर्थः। "शोभथाः" [वचन-
व्यत्ययः (३,१,८५)] इन्द्रेण सह शोभन्ते। "वस्वीः" पयः-प्रदानेन
निवास-कारिण्यः(१) ता गावः "स्वराज्य" स्वस्य स्वकीयस्येन्द्रस्य
यद्राज्यं राजत्वन्तद् "अनु" लक्ष्य अवस्थिता इत्यर्थः॥ १॥ १७७

* "मदेब्रह्मा"-इति ऋ०।

१७८ उत्तरार्चिकस्य १,५,२८,१।

(१)—'वस्विति धन-नाम (नि०२,१०,१५) धनवन्त्यः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ८ १　　१ २　　१　　१
शग्धाश्चहिम् । अर्चानाश्नू२ । खरौहो२ । जियमो-
२३४५इ । डा ॥ १७ ॥

४ ८　　४　　१ २ १८　　१ १
II इत्थाहिसोऽमइमदाः । ब्रह्मचका । रवद्ध२३-
२　　३　　५　　२　२　　५　　२ १८
नाम् । शविष्ठार२३४वा । जिन्नोजार२३४सा । पृथिव्या-
२ ८ १ २　　१ २　१　　०　१　　८ २
निःशग्धाश्चहिम् । अर्चा३श्नोइ । अनू२३हो । स्वाराजि-
१　　२　　१
यम् । इडार३भा३४३ । ओर३४५ई । डा ॥ १८ ॥१७८

हे "शविष्ठ" प्रतिशयेन बलवन् ! "वज्रिन्" वज्रवन्निन्द्र ! "इत्था हि" इत्थम् एव अनेन शास्त्रोक्तप्रकारेणैव(१) "सोमे" त्वया गृहीते सति "मदः" [मदेः स्तुति-कर्मणः(२)] स्तोता(३) "वर्द्धनं" तव वृद्धिकरं 'ब्रह्म" स्तोत्रं(४) "चकार" । अनेन स्तुतवान् (इदित्येतत् पद-पूरणम्) अतस्त्वम् "ओजसा" बलेन "पृथिव्याः

I,II गृत्समदस्य मदौहौ ।

(१—'हि' शब्दो यस्मादर्थे । 'इत्था सत्यम्' इति वि० । "इत्था"-इति सत्यनामसु पञ्चमं नैघण्टुकम् (३,१०) ।

(२)—"मदति"-इति अर्चति-कर्मसु ऊनचत्वारिंशत्तमं नैघण्टुकम्(३,१४) ।

(३)—"मदे सप्तमी चेयं "यस्य च भावेन भावलक्षणमिति, *** सोमे उपकल्पिते'-इति वि० ।

(४)—'ब्रह्म शब्दो ब्राह्मण-शब्दनर्थ्यायः । गौतमस्य परोक्ष-रूपेण आत्मानं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया* ।

१ २ १ २ ३ १२ ३ १र २र
इन्द्रो मदाय वावृधे शवसे वृत्रहा नृभिः ।
२उ ३ २ ३ २ ३१र २र ३१र २र३ १ २
तमिन्महत्स्वाजिषूति†मर्भे हवामहे स वाजेषु प्र नो-
विषत् ॥ ३ ॥ १७९

सकाशात्(५) "अहिम्" आगत्य हन्तारं वृत्रं(६) "निःशशाः" निःशेषेण शशाः(७) मा बधस्वेति शासनं कृत्वा पृथिव्याः सकाशान्निरगमयदित्यर्थः। किं कुर्वन् ? "स्वराज्य" स्वस्य राज्यं राजत्वम् "अनु" लक्ष्य "अर्चन्" पूजयन् स्व-स्वामित्वं प्रकटयन्नित्यर्थः ॥ २ ॥ १७८

---

* 'गौतमस्यार्षम्'-इति वि० ।

† "षूते"--इति ऋग्वेदीयः पाठः, उत्तराग्रन्थीय-सायणधृतश्च ।

---

१७९ उत्तरार्चिकस्य ३,२,१४,१—ऋग्वेदस्य १,६,१,१= आरण्यके ३,१९=ऊहे १९,२,४=ऊह्ये १,१२—१३ ।

निर्हिमति—गोतम-नामा ब्राह्मणः चकार करोति; किं? सामर्थ्यात् स्तोत्रम्'-इति वि० ।

(५)—'पृथिवीत्यन्तरिक्ष-नाम, अन्तरिक्षात्'-इति वि० । "पृथिवी"-इति अन्तरिक्ष-नामसु नवमं नैघण्टुकम् (१,३) ।

(६)—'अहिम् मेघम्, वृष्टिमित्यर्थः'-इति सप्तम् वि० । "अहिः"-इति मेघ-नामसु एकविंशतितमं नैघण्टुकम् (१,१०)।

(७)—'शश प्लुतगतौ (भ्वा० प०)'-इत्यस्य रूपम्, अन्तर्णीतश्च ण्यर्थः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ र र  ४ ५  १ र
I इन्द्रोमदायवा३ । वा३ई । शवसेवृत्रहा३ ।
४ २  ४ ५  १र र
नृभीः । तमिन्महत्स्ववा३ । जाइषू । ऊतिमर्भेहवा३ ।
४ ५  ४ ५  १ २१  ५  ४ ५
मा३हाइ । सावा । जाइषुप्रनो२३४वा । वा५इषो६हाइ
॥ १९ ॥

४र र४  १ २र  १ २
II इन्द्रोमदा५यवावृधाइ । शवसेवृ । त्रहानृभी-
५  २ ३ ५  ५  ४ ५
३४: । ताम् । इन्मोहा२३४त्सवा६ । हाउ । जाइषू ।
१र र २  २ ४र  ५  १ २१
ऊतिमर्भेहवा१ । मा३हाइ । सावा । जाइषुप्रनो२३-
५ ४ ५
४वा । वा५इषो६हाइ ॥ २० ॥

४र र४  १ २र  १ २
III इन्द्रोमहा५यवावृधाइ । शवसेवृ । त्रहा२नृभिः ।
१ २ २  र १ ११११  २ ११११  २ १
आ३औ३हो । औहोवा२३४५ । ह९२३४५ । तमिन्म-

---

I,II आभीके द्वे ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १२ १ २ २ २र १ ११११
हः। त्सुवा२जिषु। आऔ३हो। औहोवा२३४५।

३ ११११ २र१ २र १२र १ २ २
हु९२३४५। ऊतिमर्भे। हवा२महे। आऔ३हो।

र १ ११११ ३ ११११ २र१र २ ४ २
औहोवा२३४५। हु९२३४५। सवाजेषूप्रा३नो३। वा-

५
३४५इषो६हाइ॥ २१॥

४ ५र ४ ५र र र४ ५ र४ १ १ २ १
IV इन्द्रोमदायवावृधेशवसेवृ। त्रहान्१भी२ः। तामि-

२ १ २ २ १२ २ ५ २ १
न्मह। त्सुआ१जिषू३। ऊतीमा२३४भाइ। हवा२मा-

र र २ ४ २ ५
हाइ। सवाजेषूप्रा३नो३। वा३४५इषो६हाइ॥ २२॥

२२ १र र ३
V इन्द्रो३१२३४। मदा। यवावृधेशवा२सा२३४-

५ २५ २र २ ५ २ ३ ५
इः। त्रहा३। औहोवा। आ३। औहो२३४वा।

४ १ र र २ ५ २र
नृभाइः। तमिन्महन्स्वाजिषूतिमा२३भाइ। हवा३। औ

III,IV आभीशवे द्वे।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



होइवा । आइ । औहोर३४वा । महाइ । सवाजेषु
प्रनाइ । औहोइवा । आइ । औहोर३४वा । वाप्ऽइ
षो६हाइ ॥ २३ ॥

VI इन्द्रो३४ । मदाय । वावाई६ढोइ । शवसे वृ ।
त्रहानृभीइः । हाउहौ । होवा । तामिन्मह । त्सू-
आ१जिषू३ । हाउहौ । होवा । ऊतिमर्भे । हवा-
माहे३ । हाउहौ । होवा । सवाजेषूप्राइनो३ । वा३४-
पूइषो६हाइ ॥ २४ ॥

VII ओहाइ । इन्द्रो२४ । मदाय । वावाई६ढोइ ।
शवसे वृ । त्रहानृभीइः । आउहौ । होवा । तामि-

---

V,VI,VII बार्हद्गिराणि त्रीणि ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ २ ४र ३र ३र २ र १
न्मह। त्सुआ१जिषू३। आउहौ। होवा। ऊतिम

२र ऽ २ १ १र र १ २
र्भाइ। हवौ। हो३वा। माहा २इ। सवाजेषूप्रा३नो

२ ४ ५ ४
विषात्। औ२३होवा। होपुइ। डा ॥ २५ ॥ १७९

"वृत्रहा" वृत्रस्यावरकस्य वृष्टिनिरोधकस्य मेघस्यासुरस्य वा हन्ता(१) [यद्वा। आवरकाणां(२) शत्रूणां हन्ता इन्द्रः "मदाय" हर्षार्थं "शवसे" बलार्थञ्च "नृभिः" यज्ञस्य नेतृभिः ऋत्विग्भिः "वावृधे" स्तोत्र-शस्त्र-रूपाभिः स्तुतिभिः प्रवर्द्धितो बभूव स्तुत्या हि देवता प्राप्तबला सती प्रवर्द्धते। "तमित्" तमेव इन्द्रं "महत्सु" प्रभूतेषु "आजिषु" सङ्ग्रामेषु "ऊतीम्" अस्माकं रक्षकम्(३) "हवामहे" आह्वयामहे। तथा "तम्" इन्द्रम् "अर्भे" अल्पे सङ्ग्रामे "हवामहे"। अस्माभिराहूतः "स" चेन्द्रः "वाजेषु" सङ्ग्रामेषु "नो" ऽस्मान् "प्राविषत्"(४) प्रावतु प्रकर्षेण रक्षतु ॥२॥ १७९

---

(१)—"वृत्रो मेघ-इति नैरुक्ताः, त्वाष्ट्रोऽसुर इत्यैतिहासिकाः ; अपां च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति"-इति यास्कः (नि० २,१६)।

(२)—"विल्लं भरं भवति बिभर्तेः इदं वं जघ्निवानपववार। तद् वृत्रो वृणोतेर्वा वर्त्तते वा वर्धते वा। यदवृणोत् तद् वृत्रस्य वृत्रत्वमिति विज्ञायते"-(नि०२,१७) इति यास्कोक्ति-वैविध्यात्।

(३)—'ऊतिम्, द्वितीयैकवचनमिदं चतुर्थ्येकवचनस्य स्थाने द्रष्टव्यम्; ऊतये पालनाय'-इति वि०।

(४)—अवतेर्लेटि रूपम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी* ।

२ ३ २ ३ १ २ ३ १ २ क २र
इन्द्रतुभ्यमिदद्रिवोनुत्तंवज्रिन्वीर्यम् ।
२र ३२र ३ १ २ ३ २ ३उ ३ २ ३ १र २र ३ २ ३ १ २ ३
यद्धत्यंमायिनंमृगन्तवत्यन्मायया वधीरर्चन्ननुस्व-
१ २
राज्यम् ॥४॥ १८०

५ ५ १ २ र १
I इन्द्रतुभ्यमिदद्रिवा६ए । आनुत्तंवज्रिन्वीरियम् ।

२ १ २ १ २
यद्धात्या१म्मा२ । याइनंमृगम् । तवात्या१न्मा२ ।

१ र २र १ १ १ र २ १
यायावधीः । अर्चाना१नू२ । स्वाराजियम् । इडा२-

२ १
३भा३४३ । ओ२३४५इ । डा ॥ २६ ॥ १८०

---

* 'गौतमस्यार्षम्'-इति वि० ।

"मृगंतमुत्वमायया"-इति ऋ० ।

---

१८० ऋग्वेदस्य१,५,३०,२ ।

I स्वाराज्यम् ।

१०६क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी*।

३ १ २ ३ २उ ३१२ १ २
प्रेह्यभीहिधृष्णुहिनतेवज्रोनियंसते।

[अद्रिरिति मेघनाम (नै०१,१०,१)]। हे "अद्रिवन्" वाहन-रूप-मेघ-युक्त(१) "वज्रिन्" वज्रवन्निन्द्र! "तुभ्यमित्" तवैव [षष्ठ्यर्थे चतुर्थी(२)] "वीर्य्यं" सामर्थ्यम् "अनुत्तं" शत्रुभिरतिरस्कृतम्। "यद्ध"(३) येन वीर्य्येण खलु "मायिनं" मायाविनं "मृगं" मृग-रूपमापन्नं(४) "त्यं" तं "वृत्रम्" असुरं(५) त्वमपि माययैव "अवधीः" हतवानसि। अतः कारणात् तव वीर्य्यं "यत्" तत् प्रसिद्धं भवति। "अर्चन्ननु स्वराज्यमिति" पादो व्याख्यातः(६) ॥ ४ ॥ १८०

---

* 'गौतमस्यार्षम्'-इति वि०।

---

(१)—'अद्रयः आभिषवाः ग्रावाणः, तैः तद्वान्; अथवा अद्रिर्मेघः, तेन हन्तव्येन तद्वान्; अथवा अद्रिर्वज्रस्तेन तद्वान्'-इति वि०।

(२)—"षष्ठ्यर्थे चतुर्थीति वाच्यम्(२,३,६२)"-इति कात्यायनीयोक्तेरिति भावः।

(३)—द्वितीया चात्र तृतीयार्थे द्रष्टव्या, व्यत्ययेन (३,१,८५)।

(४)—"मृगो मार्ष्टेर्गतिकर्मणो"-इति यास्कः(१,२०)। अतएव विवरणे मार्गणीयं वेत्युक्तम्।

(५)—असुरइत्यपि मेघ-नामसु नैघण्टुकं दृश्यते १,१०,२९।

(६)—अथर्चित-पूर्वसामर्चीति भावः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २३१२उ　३ २ ३　१ २　३ १२　२२ ३ २　३　१ २ ३　१
इन्द्र नृम्णꣳ हि ते शवो हनो वृत्रं जया अपोऽर्चन्ननु स्वरा-
२
ज्यम् ॥ ५ ॥ १८१

१　१२　२ २　१
I प्राइन्द्री२। अभीहिधृष्णुहाओ३हो। नाता२इ।

१२　२ २　१　१ २
वज्रोनियꣳसयाओ३हो। आइन्द्रा२। नृम्णꣳहिते-

२ २　१　१ २　२ २ २
शवाओ३हो। हाना२ः। वृत्रंजयाअपाओ३हो। आ-

१　२ २ १　२　२　२
र्चा२न्नानू२। स्वाराजियम्। इडा२३भा३४३। ओ२३४-

५इ। डा ॥ २७ ॥ १८१

हे "इन्द्र !" "प्रेहि" प्रकर्षेण गच्छ। "अभीहि" हन्तव्यान् शत्रून् आभिमुख्येन प्राप्नुहि। प्राप्य च "धृष्णुहि" तान् शत्रून् अभिभवति तव "वज्रो" "न नियंसते" शत्रुभिः न नियम्यते अप्रतिहतगतिरित्यर्थः। तथा "ते" तव "शवः" त्वदीयं बलं "नृम्णं" नृणां पुरुषाणां नामकम् अभिभावकम्।

---

१८१ ऋग्वेदस्य १,५,२८,३।

I सवेशीयम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी*।

३ १ २ ३ १२ ३ १ २ ३ १२
यदुदीरत आजयो धृष्णवे धीयते धनम्†।

३ १ २ ३ २ २ ३ २ ३ ३ १ २ २ ३ १ २ ३ १ २
युङ्क्ष्वा‡ मदच्युता हरी कं हनः कं वसौ दधो ऽस्माँ इन्द्र वसौ-

दधः ॥ ६ ॥ १८२

४ र र ४ २ १ ५र र १ २
I यदुदीरा पूत आजयाः। धृष्णवे २धी। यताद्धा १

"हि" यस्मादेवं तस्मात् "वृत्रम्" असुरं मेघं वा "हन" जहि। तदनन्तरं तेन निरुद्धा "अपः" उदकानि "जयाः" जय, वृत्रं हत्वा तेनावृत मुदकं लभस्वेत्यर्थः(१)। शिष्टं स्पष्टम् ॥ ५ ॥ १८१

---

* 'गौतमस्यार्षम्'-इति वि०।

† "धना"--इति, ‡ "युक्ष्वा"-इति च ऋग्वेदीयौ।

---

१८२ उत्तरार्च्चिकस्य ३,२,१४,३ = ऋग्वेदस्य १,६,१,२ =ऊहे १९,२,४ ऊह्ये १,१,१—१२,२,—१३,२।

I सर्वेग्रीयम्।

(१)—केचिदिदानीन्तना ऋग्वेषा पूर्वतनानां चेत्र-जल-हरणाय समुद्यतेत्यनुमीयन्ते। वस्तु तस्तदसत्, "अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्ष कर्म जायते, तत्रोपमार्थेन युद्धवर्णा भवन्ति (नि० २,१६)"-इत्यादिना एवमादीनां कल्पितार्थत्वस्य स्पष्टत्वात्; "असदृत्तान्तान्वाख्यानम्"-इत्यादि मीमांसा-सिद्धान्ताच्चेति दिक्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र २ ४ ५ २ १ २
ना२म् । युक्ष्वामदच्युता३ । हारी । कउहनःकंवसा-

४ ५ २ १र २ १र २
३उ । दाधाः । अस्माउआ२३इन्द्रा । वसौदा२३धा३-

१
४३: । ओ२३४५इ । डा ॥ २८ ॥ १८२

अत्रेदमाख्यानम्-रहूगण-पुत्रो गोतमः कुरु-सृञ्जयानां राज्ञां पुरोहित आसीत् । तेषां राज्ञाम्परैः सह युद्धे सति स ऋषिरनेन इन्द्रं स्तुत्वा स्वकीयानां जयं प्रार्थयामासेति । तस्य च तत् पुरोहितत्वं वाजसनेयिभिराम्नातम्—"गोतमो ह वै राहूगणः उभयेषां कुरु-सृञ्जयानां पुरोहित आसीत्"-इति ।

"यद्" यदा "आजयः" सङ्ग्रामाः "उदीरते" उद्गच्छन्ति उत्पद्यन्ते तदानीं "धनं" "धृष्णवे" यो धृष्णुः धर्षयिता शत्रूणां जेता भवति तस्मै धीयते निधीयते । जयतो धनं भवतीत्यर्थः । हे "इन्द्र !" त्वां तादृशेषु युद्धेषु प्रवृत्तेषु "मदच्युता" शत्रूणां "मदस्य" गर्वस्य च्यावयितारौ "हरी" त्वदीयावश्वौ(१) "युक्ष्व" रथे त्वदीये योजय । योजयित्वा च "कं" चिद्राजानं तव परिचरणमकुर्वन्तं "हनः" हन्याः । "कं" चन त्वां परिचरन्तं "वसौ" धने "दधः" स्थापयसि (अतो जयाजयौ त्वमेव कारयितासि । तस्मात् हे इन्द्र ! अस्मान् अस्मदीयान् राज्ञः वसौ धने "दधः" स्थापय ॥ ६ ॥ १८२

(१)—'हरी इन्द्रस्य'-इति नैघण्टुकम् १,१५,१ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



[ अथ सप्तमी*।

२ ३ १ २ ३ १ २ ३१ २
अक्षन्नमीमदन्त ह्यवप्रिया अधूषत।

१ २ २ ३ २३ १ २ ३२उ क २र २
अस्तोषत स्वभानवो विप्रा नविष्ठया मती योजान्विन्द्र-

१ र
ते हरी॥७॥ १८३

३ ४ ३ ४र ५ ३ २ १ ५ ४र ५ र
I अक्षन्नमीमद। तह्ही३। आ२३४। वप्रियाअधू।

४ ५ १ २र १ २र १ र २ १ र
षता। अस्तोषतस्वभानवः। विप्रानार३वी। ष्ठाया-

२ र १र २ २ १ २ ५ र र
मती। योजानूइवा३इ। इ२ता२३औहोवा।

३ ५
हा२३४री॥ २८॥ १८३

हे "इन्द्र!" त्वया दत्तान्यन्नानि "अक्षन्" यजमाना भुक्तवन्तः भुक्त्वा च "अमीमदन्त हि" हृष्टा आसन् खलु। "प्रियाः" तनूः "अवाधूत" अकम्पयन् अतिशयित-रसास्वादेन वक्तुमशक्नुवन्तः शरीराण्यकम्पयन्। तदनन्तरं "स्वभानवः" स्वायत्तदीप्तयः

---

* 'गौतमस्यार्षम्'-इति वि०।

---

१८३ ऋग्वेदस्य १,६,२,२।

1 यामम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी*।

३ १ २ ३ २उ ३ १ २ ३ १ २
उपोषुशृणुहीगिरोमघवन्मातथाइव।

३ १ २ ३ १ २ ३ २ ३ २ ३ १ १र ३ २उ क २र ३
कदा†नःसूनृतावतःकरइदर्थ‡यासईद्योजान्विन्द्रते

१ २
हरी॥ ८॥ १८४

३ ४र३ ४ ३र ४ ५ २ २ ४ १
I उपोषुशृणुहीगिरः। ए३। औ३होपुवा२। मा-

"विप्राः" मेधाविनः ऋत्विजः "नविष्ठया" अतिशयेन नूतनया "मती"(१) मत्या स्तुत्या "अस्तोषत" अस्तुवन्। अतः हे "इन्द्र!" ते त्वदीयौ "हरी" एतत्सञ्ज्ञावश्वौ "नु" क्षिप्रं(२) "योज" रथे योजय॥ ७॥ १८३

* 'गौतमस्यार्षम्'-इति वि०।

† "यदा"-इति, ‡ "आदर्थं"-इति च ऋग्वेदीय-पाठौ।

१८४ ऋग्वेदस्य १,६,२,२।

(१)—मतिः-इति 'मन्यते'-इति स्तुति-कर्मसु पठितस्य रूपम् (३,१४,३८ नै०)। तृतीयायास्तु "सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः"-इति (७,१,३९) पाणिनीय-वचना दीकारः।

(२)—"नु"-इति क्षिप्र-नामसु पाठ्यं नैघण्टुकम् (२,१५)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १र २ ३ २ २ २ १ र
घवन्मा। तथाआ१इवा२३४। कदा३४नःइ। नार्त्ती-

२ १ २ १ २ ३र २ ३ २
वत। करइद। थाया१साई२३४त्। योजा२४नुवा

१ २ ५र र ३ ५
३इ। द्रा२ता२३४औहोवा। हा२३४री॥ २०॥ १८४

हे "मघवन्" धनवन्निन्द्र! "गिरः" अस्मदीयाः स्तुतीः "उपो" उपैव "सुश्रृणुहि" उपगम्य सम्यक् श्रृणु। "तथाइव"(१) पूर्वं यथाविधस्त्वं तद्विपरीतो माभूः (अस्मासु पूर्वं यथा अनुग्रह-बुद्धि-युक्त तथाविधएव भवेत्यर्थः) अपिच "नो" ऽस्मान् "सूनृता-वतः" (प्रियसत्यात्मिकावाक् सूनृता) तया स्तुति-रूपया वाचा-युक्तान् "करः" करोषि। त्वमपि "अर्थयासइत्" अर्थयास एव नतदास्मे। अस्माभिः प्रयुक्ताः स्तुतीस्त्वमपिस्वीकरोषीत्यर्थः। अतो हे "इन्द्र"! "ते" "हरी" त्वदीयावश्वौ "नु" क्षिप्रं "योज" रथे योजय। "कदा" यदेतिकर इत्यर्थः।

"करइदर्थ"-इति, "करआदर्थ"-इति च पाठौ॥ ८॥ १८४

---

(१)—'तथा, "तनु विस्तारे (त०,प०)"-इत्यस्येदं रूपम्, मा विस्तारं कार्षीः, मा विलम्बिष्ठाः, शीघ्रमागच्छेत्यर्थः। इवेत्ययमुपमार्थः, यस्तु उपमार्थस्य सम्प्रत्यर्थे प्रयोग इति पदपूरणः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी ।

त्रितऋषिः ।

३ १ २ ३ २ ३ १२ २र३ १ २ ३ ०
चन्द्रमाअप्स्वा३न्तरा*सुपर्णोधावतेदिवि ।
१ २ ३ १ २ ३ १ २ ३ १
नवो हिरण्यनेमयःपदंविन्दन्तिविद्युतोवित्तंमेअस्य
२
रोदसी ॥ ९ ॥ १८५

२ १ र २ १ २ १र २
I चन्द्रमाआउवा । प्सवान्तााराउवा । सुपर्णोधाउ-
१र र २ १ २
वा । वतेदिवि । नवोहिराउवा । ण्यनाइमायाउवा ।
१ २ १ २ १र
पदंविन्दाउवा । तिविद्युताः । वित्तम्माआउवा । स्यरोदा-
२ १
२३सा३४३इ । औ२३४५इ । डा ॥ ३१ ॥
४ ५ र ४ २ १ २ २ १ २र र
II चन्द्रमाआ । प्सु३आन्ता३रा । सुपर्णोधाव ।

---

* "अप्स्वं१तरा"--इति ऋग्वेदीय-पाठः ।

---

१८५ ऋग्वेदस्य १,७,२०,१ ।
१०७क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३२ १ ५र १ २र १ २
तार२३इ। दिविया। नवो ।२ह्रिरण्यनेमयःपदंविन्द।
१ ५ २१ १ २
तिविद्यूतो२३४वाइ। वित्तꣳहोइ। मस्यार२३हो। स्य-
१र २ १
रोदा२३सा२३सा३४३इ। ओ२३४५इ। डा॥ ३२॥

III चन्द्रमा३अप्सुवन्तरा। सुपर्णोधा। वताइ-
२ १ ५र २ २र १ २
दा१इवो२। नवो२ह्रिरण्यनेमयः पदं विन्द। तिवि-
१ २१ २ २१र २
द्यूता२३ः। वित्तंहोइ। मस्यार२३हो। स्यरोदा२३सा-
१
३४३इ। ओ२३४५इ। डा॥ ३३॥

५ ४ ५र ४ १ र र २१र
IV चन्द्रमाअप्सुवा। तरा। सुपर्णोधावतेदा२३इ-
२ १ १ २र १ २
वो। नवा२३होइ। ह्रिरण्यनेमयःपदंविन्द। तिवि-
१ २१ १ २१
द्यूता२३ः। वित्तꣳहोइ। मस्या२३इहो। स्यरो२३।
१ ३ ५र र २ ५
दा२सा२३४औहोवा। ऊ३२३४पा॥ ३४॥

---

I,II,III त्रैतानि त्रीणि।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४र ५र र ४ ५४र ५ ५ २ १र र र
V चन्द्रोहोमाप्स्वन्तरा। ओ६वा। सुपर्णोधावते-

२ १ २ १ ३ २ १ १ १ १र
दाइवाये३। होवा३होरइ। ऊवा३४५इ। नवोहाइरण्य-

१ २ १ ३ २ १ १ १ २ १
नाइमायार३ः। होवा३होरइ। ऊवा३४५इ। पदं-

१ २ १ ३ २ १ १ १
विन्दन्तिवाइद्यु तार३ः। होवा३होरइ। ऊवा३४५इ।

२ १ र १र १ २ १ ३ २ ४
वित्तंमे अस्यरोदासायेइ। होवा३होरइ। ऊवा३ओ

२ ५
५वा६५६। ऊ३२३४पा॥ ३५॥१८५

"अप्सु" आन्तरिक्ष्यासु(१) उदकमये मण्डले "अन्तर" मध्ये वर्त्तमानः "सुपर्णः" शोभन-पतनः [यद्वा। सुपर्णइति रश्मि-नाम(नै० १,५,१५)]सुषुम्णाख्येन सूर्यरश्मिना युक्तः "चन्द्रमाः(२)" "दिवि" द्युलोके "आधावते" आसमर्यादायाम्। एकेनैव प्रकारेण धावतेशीघ्रं गच्छति। तादृशस्य चन्द्रमसः सम्बधिनः। हे

---

IV,V सौपर्णे द्वे।

(१)—"आपः"-इति अन्तरीच-नामसु अष्टमं नैघण्टुकम् (१,३)॥

(२)—"चन्द्रमाश्चायन्द्रमति चन्द्रो माता चान्द्रं मानमस्येति वा। चन्द्रयन्दतेः कान्तिकर्मणश्चन्दनमित्यप्यस्य भवति चारु द्रमति चिरं द्रमति चमेर्वा पूर्वम्। चारु रुचे र्विपरीतस्य"-इति नि० दै० ५,५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

अवस्युर्ऋषिः।

१ २ ३ १ २ २ २ ३ १ २ ३ १ २
प्रतिप्रियतमꣳरथंवृषणंवसुवाहनम्।
३ १ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २ ३
स्तोतावामश्विनावृषिस्तोमेभिर्भूषति*प्रतिमाध्वीममश्रुतꣳ
१ २
हवम्॥ १० ॥१८६

## ॥ तृतीय-दशति ॥

"हिरण्यनेमयः" सुवर्ण-सदृश-पर्यन्ताः ! [यद्वा। हित-रमणीय-(३) प्रान्ताः] "विद्युतो" विद्योतमानाः रश्मयः "वो" युष्माकं "पदं" पदस्थानीयम् "अग्र" "विन्दन्ति" मदीयानीन्द्रियाणि कूपेनावृतत्वात् न लभते। अतइदं नोचितं तस्मात् कूपात् मामुत्तारयतेत्यर्थः। अपिच हे "रोदसी" द्यावापृथिव्यौ ! "मे" मदीयं "अस्य"(४) इदं स्तोत्रं "वित्तं" जानीतम्॥ ८॥१८५

---

* "स्तोमेनप्रतिभूषति"-इति ऋग्वेदीय-पाठः।

---

१८६ उत्तरार्चिकस्य ८,२,१२,१ = ऋग्वेदस्य ४,४,१५,१ = ऊहे ११,१,२६ = ऊह्ये ४,१८।

(३)—"हिरण्यं कस्मात् ह्रियत आयम्यमानमिति वा ह्रियते जनाज्जनमिति वा हित-रमणं भवतीति वा हृदय-रमणं भवतीति वा हर्यतेर्वा स्यात् प्रेप्सा कर्मणः"-इति नि० २,९।

(४)—'द्वितीयार्थे षष्ठी'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१　　५ ४ ५　　४ ५　　१ २
I प्रा२३४। तिप्रियतमम्। राथोम्। वार्षणव।

१र　२　　१र　२　२　　१　१　५
सुवाहा२३नाम्। स्तोतावा३मा३। श्विना२वा२३४षीः।

१र　२　२　　१　२ ३　५　　१र　२
स्तोमाइभो३र्भू३। षातिप्रा२३४ती। माध्वाइमा३-

२　१　४　　२　५
मा३। अ२३ताम्। हा३४५वो६हाइ ॥ ३६ ॥ १८६*

हे "अश्विनौ !" (१)(एकः प्रति-शब्दोऽनुवादः) "वां" युवयोः "प्रियतमं" "रथं" "स्तोता" "ऋषिः"(२) "स्तोमेभिः" स्तोमैः

---

I त्वौभम्।

(१)—"अश्विनौ यद् व्यश्नुवाते सर्वं रसेनान्यो ज्योतिषान्यः। अश्वैरश्विनावित्यौर्णवाभः। तत्कावश्विनौ द्यावापृथिव्यावित्येकेऽहोरात्रावित्येके सूर्याचन्द्रमसावित्येके राजानौ पुण्यकृतावित्यैतिहासिकाः। तयोः काल ऊर्ध्वमर्धरात्रात् प्रकाशीभावस्यानुविष्टम्भमनु तमोभागो हि मध्यमो ज्योतिर्भाग आदित्यः"-इति नि० दै० ६, १।

(२)—'ऋषिः अवस्युर्नाम, आत्मानमेव परोक्षरूपेण प्रथमपुरुषेण निर्दिशति'-इति वि०।

---

*॥ इति अष्टमः प्रपाठकः ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"प्रतिभूषति" अलङ्करोति। कीदृशं रथं? "वृषणं" फलानां वर्षितारं। "वसुवाहनं"(३) धनानां वाहकं (ईदृशं रथमागमनाय स्तोतोत्यर्थः) तस्मात् हे "माध्वी"! मधुविद्या-वेदितारौ(४) "श्रुतं" शृणुतम् ॥ १० ॥ १८६

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने

चतुर्थस्याध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

अथाष्टमे खण्डे—

सैषा प्रथमा।

वसुश्रुतऋषिः*।

१ २ ३ १२ ३ १ २
आतेअग्नइधीमहिद्युमन्तंदेवाजरम्।
२ ३ ३१ २ ३ २ ३ १२३१र २र ३ २३
यद्धस्यातेपनीयसीसमिद्दीदयतिद्यवीषꣳस्तोतृभ्य-
१ २
आभर ॥ १ ॥१८७

---

* 'वत्सस्यार्षम्'-इति वि०।

---

१८७ उत्तरार्च्चिकस्य ३,२,२१,२ = ऋग्वेदस्य ३,८,२२,४ = ऊहे ३,१६—१७,६।

(३)—'वसु धनम् उह्यते प्राप्यते नीयते येन स वसुवाहनस्तं वसुवाहनं धनस्य नेतारम्'इति वि०।

(४)—'मधुपूर्णौ'-इति वि०। 'इकारोमत्वर्थीयः'-इति च वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१　　　र५　र　४ ५　　२
I ओम् ॥ आ२३४ । तेअग्नइधी । माहाइ । द्युमन्तं

र　　१　　२ ३ २　१　२　२　१　३
देवा३ । आ२३ । जरमा । यद्धास्या३ता३इ । पानी२या-

५　　२ १ ऽर १　　　　　० ३ २　　१
२३४सी । समिद्दी२दय । ता१३इ । द्यविया । इषा-ऌ

२　२　　१　　४　　२　　　५
स्तो३तृ३ । भ्या२३आ३ । भा३४५रो६हाइ ॥ १ ॥

३र ४र५　र　२　४　　५　२ ४र५ ४ ५
II आतेअग्नइधी । मा३हाइ । द्युमन्ता३देवअजरम् ।

३ ४ ३र ४र ३ ४र ५ र　　४ ३ ४र३ ४ ५　　२ऽ　२
यद्वस्यातेपनीयसी । समिद्दीदयताइ । ऊ३म्हुम् ।

३　　५　　१　र　२　२　　ऽ　२
द्या२३४वी । इषऌस्तोतृभ्या३आ । हुं३म्हं ३४३म् ।

२　　५
भा३४५रो६हाइ ॥ २ ॥ १८७

हे "अग्ने" देव ! "द्युमन्तम्" दीप्तिमन्तम् "अजरम्" अजीर्णम् "ते" "आ" सर्वतः "इधीमहि"(१) दीपयामः । "यद्ध" खलु

---

I,II सञ्जये द्वे ।

(१)—'ञिइन्धी दीप्तौ'-इत्यस्य रूपम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

विमद ऋषिः।

१र २र ३ १ २
अग्निंनस्ववृक्तिभिर्होतारंत्वावृणीमहे।

३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ १ २ २
शोरम्पावकशोचिषंविवोमदेयज्ञेषुस्तीर्णबर्हिषं

१ २
विवक्षसे*॥ २ ॥ १८८

२ ३ ५ १र २ ३ १ १
I हाउ। औहो२३४वा। अग्निंनस्ववृक्तिभी२३-

११ २ २ ५ १२१र र र ३
४५ः। हाउ। औहो२३४वा। होतारन्त्वावृणीमहे-

"ते" त्वदीया "स्या" सा "पनीयसी" स्तुत्यर्हा(२) "समिद्" दीप्तिः "दीदयति" दीप्यते "द्यवि" द्युलोके। किञ्च। "स्तोतृभ्यो" ऽस्मभ्यं "इषम्" अन्नम्(३) "आभर" आहर॥ १ ॥ १८७

---

* "यज्ञायस्तीर्णबर्हिषेविवोमदेशीरम्पावकशोचिषं विवक्षसे"-इति ऋग्वेदीय-पाठः।

---

१८८ ऋग्वेदस्य ७,७,४,१ ॥

I उत्सेधम्।

(२)—"पणते"-इति अर्चति-कर्मणो रूपम् (नै० ३,१४,२१)।

(३)—"इषम्"-इत्यन्न-नामसु चतुर्दशतमं पदम् (नै० २,७,)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ १ १ १　२　३　५　२र १ २र १ २र
२३४५ । हाउ । औहो३३४वा । शीरंपावकशोचि-

३ २ ३　५　२　३　५
षम् । विवोमार२३४दाइ । हाउ । औहोर३४वा ।

२ १ २र १ २ ३ १ १ १ १　२　३　५
यज्ञाइषुस्तीर्णबर्हिषार२३४५म् । हाउ । औहोर३४वा ।

१ २ ३ १ १ १ १
विवक्षसे२३४५ ॥ ३ ॥

५ र　र　१र २र र र
II अग्निन्नस्ववृक्तिभिर्हइहाहाइ । होतारंत्वावृणीम-

१ २ १ २　२　र १ २र १ २र　१ २ १ २
हइहइहा३ । हाइ । शीरंपावकशोचिषमिहइहा२ ।

२　३ २ ३　५　२ १ २ र १ २　१ २ १
हाइ । विवोमार२३४दाइ । यज्ञाइषुस्तीर्णबर्हिषमिहइ-

२　२　१ ३　५ र र　३ ५
हा३ । हाइइ । वार्इवार३४औहोवा । हार२३४से

॥ ४ ॥ १८८

हे अग्ने ! तव स्वभूते "विमदे"(१) एतदाख्ये ऋषौ मयि "इयं" स्तुतिः प्रवृत्तास्ति (नेति सम्प्रत्यर्थे) न आतीवयमिदानीं "स्वष्ट-

---

II निषधम् ।

(१)—अस्य हि भाष्यकृतोमते 'विमदे'-इत्येव पाठः अथवा वः इत्यस्य व्याख्यानं न कृतम् । विवरण-कृन्मते तु 'विवोमदे' इत्येव पाठः, तथाच—तत्र 'विवः',-'मदे'-इति च पृथक् व्याख्यातम् ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

सत्यश्रवा ऋषिः।

३ १२ २ १२ ३ १ २ ३ २ ३ १ २
महेनो अद्यबोधयोषोरायेदिवित्मती।

१ २ २ १ २ ३ १ २ ३ १र २र ३ १ २
यथाचिन्नो अबोधयः सत्यश्रवसिवाय्ये सुजाते अश्व-

सूनृते॥ ३ ॥१८९

क्तिभिः" स्वयङ्कृताभिः दोष-वर्जिताभिः स्तुतिभिः "होतारं" देवानामाह्वातारं होम-निष्पादकं वा "अग्निं" "त्वा" त्वाम् "आवृ-णीमहे" आभिमुख्येन सम्भजामहे। कीदृशं? "यज्ञेषु" यागेषु "स्तीर्णबर्हिषम्" आसादितबर्हिष्कम्। "शीरम्" ओषध्यादिषु सर्वत्रानुशायिनम्(१)। "पावकशोचिषं" शोधक-दीप्तिं(२)। "विवक्षसे" (महन्नामैतत्) हे अग्ने! त्वमपि महान् भवसि। [यद्वा। "विमदे" यज्ञस्य सम्बन्धिनः सोमस्य पान-जन्य-विविध-मदार्थं "त्वामावृणीमहे" इति योज्यम्]॥

"शीरम्पावकशोचिषंविवोमदेयज्ञेषुस्तीर्णबर्हिषंविवक्ष-से"-इति छन्दोगाः। "यज्ञार्थंस्तीर्णबर्हिषोविवोमदेशीरम्पा-वकशोचिषंविवक्षसे"-इति बह्वृचाः॥ २॥ १८८

---

१८९ उत्तरार्चिकस्य ८,२,११,१=ऋग्वेदस्य ४,४,२१,१ =ऊह्ये ४,१७।

(१)—"अनुशायिनमिति वा शिनमिति वा"-इति नि० १०,१४।

(२)—"पावक-दीप्तिम्"-इति नि० १०,१४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ १ २५र ४ ५र ५ १ २र
I मद्दा३४इ। मद्देनोअद्य। बोधा६या। उषो-
र र १ २ १ २ १ १ २ ३
राये। दिवित्मा२३ती। यथाचौ३न्नाइः। आबोधा-
५ १ २ २ १ ३ ५ १
२३४याः। सत्याश्राश्वा३। सिवा२या२३४याइ। सु-
२ २ १ ४ २ ५
जाता३आ३। श्वा२३सु२। ना३४५ऋतौ६हाइ। ५॥१८८

"अद्य" अस्मिन्यागदिने हे "उषः" उषोदेवि !(१) "दिवित्मती" दीप्तिमती(२) त्वं "नो" ऽस्मान् "महे" महते "राये" धनप्राप्तये "बोधय" प्रज्ञापय प्रकाशयेत्यर्थः। सति प्रकाशे क्रतु-द्वारा द्रव्यस्योपार्जयितुं शक्यत्वात्। "यथाचित्" यथैव पूर्वं नोऽस्मान्बोधयः, अतीतेषु यथा बोधितवती तद्वदद्यापीत्यर्थः। हे "सुजाते"(३) शोभनं जातं जन्माविर्भावोयस्यास्तद्दृश्य ! हे "अश्वसूनृते",

---

I सत्यश्रवसश्च वाय्यस्य साम।

(१)—अश्विनोः परस्तात्, उदयात् पुरस्ताच्च यः कालः, तदात्मिका देवी उषाः देवी, सूर्येत्यपीत्युच्यते सूर्या-दुहितेत्यपि वर्ण्यते ( नैरुक्तं द्रष्टव्यम् )।

(२)—'दिवो दुहिता'-इति वि०।

(३)—अत हि अर्द्धमेकारोच्चारणं पारिषत्श्रुतिः श्रूयते। तथाचोक्तं भगवता पतञ्जलिना प्रथमाध्यायीय-प्रथमपाद-द्वितीयाह्निके—"ननु च भोश्छन्दोगानां सात्यमुग्रिराणायनीया अर्द्धमेकारमर्द्धमोकारञ्चाधीयते—सुजातेश्वसूनृते"-इत्यादि, "पारिषद्कृतिरेषा"-इत्यादि च। क्वचि "सुजाते अश्व"-इत्यत्र हि सन्ध्यभावस्तु "प्रकृत्यान्तःपादमव्यपरे (६,१,११५)"-इति सिद्धम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

विमद ऋषिः।

२ ३र ३ १ २ ३ २ ३ १ २ ३ १र २र

भद्रन्नोअपिवातयमनोदक्षमुतक्रतुम्।

१ २ ३ १र २र ३ २ ३ २ ७ २ ३ २ ३ १र २र ३ १ २

अथातेसख्येअन्धसोविवोमदेरणागावोनयव*सेविव-

क्षसे॥ ४॥ १९०

२ १ ४ ५र १ ५र १ २

I भद्रन्नो२३अपिवातया। मनो२द। क्षाम्। ऊत-

३ ५ १ २र र १ २र ३ २ १ ३

क्रा२३४तूम्। आथाते। सा। ख्येअन्धसा३:। वि-

२ ३ ५ १ ५र १र ५र १ २ १

वोमा२३४दाइ। रणा२गावा२नय। वसाये३। वा२-

३ ५र र २ ५

इवा२३४औहोवा। क्षा२३४से। ६॥ १९०

प्रियसत्यात्मिका स्तुतिवाग्यस्याः सा हे तादृशि देवि!(४) "वाय्ये" वय-पुत्रे "सत्यश्रवसि" मयि(५) अनुग्रहार्थः॥ ३॥ १८९

हे सोम! त्वं "नोऽस्मदीयं "मनः" "भद्रं" कल्याणं "प्राप" शुभ-सङ्कल्प-लक्षणं "वातय" गमय (अस्माकं परः शुभसङ्कल्पं

---

* "रणन्गानयव"--इति ऋग्वेदीयः पाठः।

---

१९० ऋग्वेदस्य ७,७,२,१।

I पौषम्।

(४)—'अश्वसूनृते-आदित्यभार्य'-इति वि०।

(५)—'सत्यश्रवोनाम राजा वाय्यः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी ।

गोतमऋषिः ।

१ २ ३१ २ ३२३१र २र ३ १२

ऋत्वामहाँऽअनुष्वधंभीमआवावृते*शवः ।

३ २ ३ १२३ २३ २ ३१र २र ३१ २३ १२

श्रियऋष्वउपाकयोर्निशिप्रीहरिवांदधेहस्तयोर्वज्र-

३ २

मायसम् ॥ ५ ॥१९१

कुर्वित्यर्थः) तथा "दक्ष" वृद्धमपि सर्वव्यापिनमन्तरात्मानमपि(१) "भद्र" शुभ-कारित्व-लक्षणं प्रापय (अस्माकमन्तरात्मानं शुभ-कारिणं कुर्वित्यर्थः) "उता" अपिच "क्रतु" प्रज्ञानं भद्रं "शुभा-ध्यवसाय" लक्षणं प्रापय(शुभाध्यवसायिनं कुर्वित्यर्थः) "अथ" अनन्तरं स्तोतारः "ते" तव "सख्ये" स्तुत्यस्तोतृत्वे(२)ज्य-यष्टृत्व-लक्षणे सखि-कर्मणि रमतामिति शेषः ॥ तत्र दृष्टान्तः—"यवसे" घासे "रणाः"प्रीति-युक्ता गावो "न" गावइव (ता यथा प्रीतिं कुर्वते तद्वत् । कस्मिन् सति ? "अन्धसः" सोमाख्यस्यान्नस्य सम्ब-धिनि वस्तुनि "विमदे"(२) विविध-सोम-जन्य-मद-निमित्ते सति । कस्मादेवं ? यस्माद् "विवक्षसे" महान् भवसि ॥ ४ ॥ १९०

---

* "वावृधे"--इति ऋग्वेदस्य ।

---

१९१ ऋग्वेदस्य १,६,१,४ ।

(१)—'दक्षं शीघ्रम्'-इति वि० ।

(२)—'विवोमदे' इत्यंशस्यास्य 'विमदे'-इति व्याख्यातम्, 'वो'-इत्यस्य व्याख्यानं क्वापि नोपलभ्यते ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



1 क्त्वामहाँ॒अनुष्वधाईमे। भीमआवावृ३ताइश्रा-
१वा२ः। श्रियऋष्वाइः। ऊपाका२३४योः। निशिप्री-
हरीइवांदा१धा२इ। हस्तायोइवाँइ। जूमोर३४वा।
यापुसो६हाइ। ७॥ १९१॥

"क्त्वा" कर्मणा प्रज्ञया वा "महान्" सर्वाधिकः "भीमः" शत्रूणां भयङ्कर इन्द्रः "अनुष्वधं" "स्वधेत्यन्न-नाम (नै० २,७, १७)। स्वधायां [विभक्त्यर्थेऽव्ययीभावः(१) ] सोम लक्षणस्यान्नस्य पाने सतीत्यर्थः। "शवः" आत्मीयं बलं "आवावृते" आभिमुख्येन प्रावर्त्तयत्। तदनन्तरम् "ऋष्वो" दर्शनीयः(२) "शिप्री" हनुमान्। नासिकावान्वा(३)। "हरिवान्" हरिभ्यामश्वाभ्यमुपेतः इन्द्रः "उपाकयोः" समीप-वर्त्तिनोर्हस्तयो

---

I औषसम्।

(१)—"अव्ययं विभक्ति-समीप-समृद्धि-व्यृद्ध्यर्थाभावात्ययासम्प्रति-शब्द-प्रादुर्भाव-पश्चाद्-यथानुपूर्व्य-यौगपद्य-सादृश्य-सम्पत्ति-साकल्यान्त वचनेषु"-इति ( पा०२,१,६) अनेनैवेति भावः।

(२)—"ऋष्वः"-इति महन्नामसु तृतीयं नैघण्टुकम् (३,२)।

(३)—"शिप्रे हनू नासिके वा" इति नै० १२,१७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

गोतम* ऋषिः।

२ १र २र३ २३१२ ३ १२
सघातंवृषणꣳरथमधितिष्ठातिगोविदम्।
१र २र ३२३१२ ३ १२ ३२क २र
यःपात्रꣳहारियोजनम्पूर्णमिन्द्राचिकेततियोजान्वि-
३१२
न्द्रतेहरी॥ ६ ॥१९२

३४र३ ४५ ३२ ३र४र५ १ २र
I सघातंवृषणम्। रथा३४औहोवा। आधितिष्ठा।
१२ १र२ १ ० ३
तिगोवा१इदा२म्। यःपात्रꣳहा। रीयो२जा२२४-

र्बाह्वोः(४) "आयसं" अयोमयं वज्रं "श्रिये" सम्पदर्थं "निदधे" निदधाति स्थापयति (सोम-पानेन हृष्टः प्रबलइन्द्रः शत्रूणां हननाय हस्तेवज्रं गृह्णातीत्यर्थः॥ ५ ॥ १९१

---

* 'गौतम'-इति वि० पाठः।

---

१९२ ऋग्वेदस्य ६,२,४।

I लौशम्।

(४)—"उपाके"-इति अन्तिक-नामसु सप्तमं पदम् (२,१६)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

वसुश्रुतऋषिः।

३ १र २र ३ २उ ३ २१र१र २र ३१२
अग्निंमन्येयोवसुरस्तययन्तिधेनवः।
३ १२ २ २३ ३ १ ३ २३१२ ३ २ ३
अस्तमर्वन्तआशवोस्तंनित्यासोवाजिनइषंस्तोतृभ्य
१ २
आभर॥७॥१९३

५ २र१ २ २ ५ १र २
नाम्। पूर्णमि। द्रा। चीकेता२३४ती। योजानू३-
२ १ ३ ५र र ३ ५
वा३इ। द्रा२ता२३४औहोवा। ह्वा३३४री।८॥१९२॥

"सधा"(१) स खल्विन्द्रः "वृषणं" कामाभिवर्षकं "गोविदं" गवां लम्भयितारं(२) "रथम्" "अधितिष्ठाति" ईदृशे रथेअधितिष्ठतु आरूढो भवतु। हे इन्द्र! "यो" रथः "हारियोजनं" एतत्सञ्ज्ञं धाना-मिश्रितं "पूर्णं" सोमेन पूर्णं "पात्र" "चिकेतति" ज्ञापयति (तं रथमधितिष्ठेति पूर्वत्रान्वयः) अधितिष्ठाय "ते" त्वदीयौ "हरी" अश्वौ "नु" क्षिप्रं "योज" रथे योजय॥६॥१९२

---

१९३ उत्तरार्चिकस्य ८,२,१०,१ = ऋग्वेदस्य ३,८,२२,१ = ऊहे ४,१६।

(१)—'धा'-इति दीर्घपाठः। तत्र "निपातस्य च (६,३,१३६)"-इति दीर्घः।
(२)—'गोविदं गाः येन लभ्यन्ते'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



I अग्निन्ता३म्मन्येयोवह्रः । अस्तंयंया३ । तीधेना-२३४वाः । अस्तमर्वा३ । ताआ२आ२३४वाः । अस्तन्नि-त्या३ । सोवा२जा२३४इनाः । इषा९स्तोइस्तृ३४ । द्या-द्यो२३४द्दा । भ्या२३आ३ । भा३४पुरो६द्दाइ ॥ ८ ॥१९३

"तम्" अग्निं "मन्ये" स्तौमि । "यः" अग्निः "वसुः" वासकः । "यम्" "अस्तं" सर्वेषां गृहवदाश्रयभूतं(१) "धेनवः" गावः "यन्ति" गच्छन्ति प्रीणयितुम् । "अस्तम्" उक्तलक्षणम् "अर्वन्तः" अरणवन्तोऽश्वाः "आशवः"(२) शीघ्रगामिनः यन्ति । तथा "नित्यासः" नित्यप्रवृत्ताः "वाजिनः"(३) हविर्लक्षणान्न-वन्तो यजमानाः "यमस्तं" 'यन्ति' तम् मन्ये । "इषम्" अन्नं "स्तोतृभ्यः" अस्मभ्यम् "आभर" आहर इति ॥ ७ ॥ १९३

---

I निषेधः साम ।

(१)—"अस्तम्"-इति गृहनामसु पञ्चमं नैघण्टुकम् (३,४) ।

(२)—"आशुः","आशु"-इति द्विलिङ्गमेव पदं पाठभेदेन निघण्टौ दृश्यते(२,१५,१६)

(३)—'वेगवन्तः'-इति वि० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी ।

अंहोमुग्वामदेव्य ऋषिः ।

२उ ३ १२० १२ २२ ३ १ २
नतमꣳहोनदुरितंदेवासोअष्टमर्त्यम् ।

३ १ २ १ २ ३ २ ३१२ २२ २ ३ १ २ ३ १ २
सजोषसोयमर्यमामित्रोनयति*वरुणोअतिद्विषः ॥८॥ १९४

॥ चतुर्थ-दशति ॥

४ ५र४५ ४ ५ ४ ५ १ ५र २
I नतमꣳहोनदुरितम् । ईयइयाहाइ । दाइवा२सो-

१ २ १ २ १र २ १ २ १र २र १ २ १र २
अष्टमर्त्तियमी । यइया२३हाइ । सजोषसोयमर्यमाई ।

२ १ २ १ २ १ २
यइया२३हाइ । माइत्रोनायाꣳ३ । तिवा२रू२३४५णा-

१ २ १ २ १ १ १ १
ई५६ः । अतिद्विषा२३४५ः ॥ १० ॥ १९४

हे "देवासः" देवाः! [आज्जसेरसुक् (७,१,५०)] "तं" मर्त्य

---

* "नयन्ति"--इति ऋग्वेदीयपाठः ।

---

१९४ ऋग्वेदस्य ८,७,१३,१ ।

I गोराङ्गिरसस्य साम ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मनुष्यम् "अंहः" पापं दुरितं तत्फलरूपं दुर्गमनश्च "नाष्ट"(१) न प्राप्नोति (अश्नोतेर्लङि, झलोझलीति सिचोलोपः, अड्भावश्छान्दसः) "अर्यमा" अरीन् नियच्छति इति एतत्सञ्ज्ञकोदेवः। (नयन्ति शत्रून् एते) "मित्रः" (प्रमीतेः) त्राता देवश्च नयति। "वरुणः" पापानां निवारको देवः "यं" "नयति"। एते त्रयो देवाः "सजोषसः" सङ्गताः समानाः प्रीयमाणा वा भवन्तः "द्विषः" द्वेष्टॄन् अतिक्रम्य "यं" स्तोतारं नयन्ति (प्रत्येकविवक्षया एकवचनम्) तन्नाष्टेत्यन्वयः ॥ ८ ॥ १९४

इति श्रीसायणाचार्य्यविरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्याष्टमः खण्डः ॥ ८ ॥

॥ इति पाङ्क्तम् ॥

---

परिप्रधन्वप्रभृतिऋचस्त्रिंशद्भवन्ति(क) हि।
एतासान्तु ऋषिच्छन्दोदेवतास्तु पृथक् पृथक्।
वक्ष्यन्ते सायणार्येण(ख) तत्र तत्र परिस्फुटम् ॥

---

(१)—"नाष्टः", "नाष्ठः", "नाष्ट"—इति वा निघण्टौ याज्ञिकनामसु प्रथमं पदं पाठभेदेन पठ्यते (२,१८)।

(क)—तत्र, "परिप्रधन्वेन्द्रायेत्यादि दशर्चं प्रथमं दशत्, "विश्वतोदावन्विश्वतो" इत्यादि दशर्चं द्वितीयम्, "अचेत्यग्निः"-इत्यादि "इन्द्रोविश्वस्यराजतीत्यन्तं दशर्चं तृतीयमिति विवेकः।

(ख)—एषा पूर्वाचार्य-लेख-शैली यदात्मनाम परोक्षेण निर्दिशति सायणाचार्येणेति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## अथ नवमखण्डे—

सैषा प्रथमा।

आद्यानां षण्णां ऋच-न्त्रसदस्यू सहिताहृषी,

पवमानो देवता। तत्रादिर्द्विपदा(०)।

२ ३ २ १ २ २ १ ३ १ २ ३ १२ १२
परिप्रधन्वेन्द्रायसोमस्वादुर्मित्रायपूष्णेभगाय ॥१॥ १९५

४ ५ ४ ३ ७ १२ २ २ ५
I परिप्रधन्वा। इन्द्रायसोमास्वा१दू२३४:। वाइ।

२ १२ २२१२ ५ १ ५ ५
मित्राया। पूष्णेभा२३४वाइ। गा२३४यो६वाइ ॥ ११ ॥

४ ५ ४ ५ ४ १२ २ ऽ २ ऽ २
II परिप्रधन्वा। इन्द्रायसोमा। ओ२वा। ओ२वा।

---

१९५ उत्तरार्चिकस्य ६,१,८,१ = ऋग्वेदस्य ७,५,२०,१ = ऊहे ६,२०—१,५,१,५,१,९,२,१०—१०,९—१२,७—१४,५ १७,२,६—२१,१९ = ऊह्ये ३,२,१४।

I,II इन्द्रस्य सङ्क्रमे द्वे।

(०)—"पङ्क्तिः पञ्चिनी पञ्चपदा"-इति दैवतब्राह्मणानुशासनम् (३,१२)। "पङ्क्तिः पञ्चपदा"-इति नैरुक्तम् (७,१२)। सर्वं ह्येतत् अष्टाक्षरपदाभिप्रायेण, गायत्र्यास्तथैव दर्शनात्। वस्तुतस्तु "गायत्र्यावसवः, चत्वारि क्रमात् वर्द्धन्ते"-इति पिङ्गलानुशासनात् चत्वारिंशदक्षरा पङ्क्तिः, दशाक्षरं च तस्याः पादमेकम्। सा च छन्दःशास्त्रानुशासनात् (६अ०) विविधा। प्रस्तारपङ्क्तिः, विष्टारपङ्क्तिः, संस्तारपङ्क्तिः, अक्षरपङ्क्तिः, पदपङ्क्तिरिति नामलक्षणयोर्भेदात्। सेयं द्विपदा, पदपङ्क्तौ गण्यते।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ र ६ २ ६ १२ ३र २ ५र र
स्वादुर्मित्राया । ओ३हा । ओ३हा । पूष्णा३४औहोवा ।

२ १ १ १ १ १
भगा३या२२४५ ॥ १२ ॥

३ २ १ ३ ५ ३ २ १
III परी३होइ । प्रधा२३४न्वा । इन्द्रा३हो । य-

३ ५ २र २ १ ३ ५ ३र २ १
सो२३४मा । स्वादु३होइ । मित्रा२३४या । पूष्णो३होइ ।

३ ५ ४र ३र ४र ५ ३र २ १
भगा२३४या । पूष्णोभगाय । पूष्णो३४३ । हो३४३इ ।

२ ४ २ १ २ ३ १ १ १ १
भा३गा५याई५६ । ए३ । सुवर्वते२३४५ ॥ १३ ॥

२ २ १ २ ३ ५ २
IV हा३हाइ । परिप्रा३धान्वा । ए२३४हिया । हा-

२ २ र १ २ ३ ५
३हाइ । हा३हाइ । इन्द्राया३सोमा । ए२३४हिया ।

२ २ २ २ र १ २ २ ५
हा३हाइ । हा३हाइ । स्वादुर्मी३त्राया । ए२३४हिया ।

---

III स्वर्निधनं सौहविषम् ।

IV सौहविषम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ २ २ २र १ २ २
हाउहाइ। हाउहाइ। पूष्णेभाइगाया। ए२३४-

५ २ १ १
हिया। हाउहाउ४३इ। ओ२३४५इ। डा॥१४॥

४ ५ २१ २ १ र
V प। येंपारो। पूधन्वा। होवाउहोइ। इन्द्रा-

र २ १ २र१ र २ १
यसोमा। होवाउहोइ। स्वादुर्मित्राया। होवाउहो-

२ र१ ३ ५ ४
येउ। पूष्णैवाओ२३४वा। भगापूयाउ। वा॥१५॥१९५

हे "सोम!" "स्वादुः" स्वादुरसस्त्वं "इन्द्राय" "पूष्णे"(१) "भगाय"(२) एतेभ्यो देवेभ्यः "परिप्रधन्व" परितः पात्रेषु प्रचर॥१॥१९५

---

V वाङ्निधनᳰसौहविषम्।

(१)—"पूषा"-इति निघण्टावन्तरीचदेवतासु सूर्यात् परं गणितम् (५,६)। व्याख्यातश्चैवं यास्कः—"यद्रश्मिपोषं पुष्यति तत् पूषा भवति"-इति।

(२)—"भगमादित्यः"-इति नै०३,१६। "भगोव्याख्यातः (३,१६) तस्य कालः प्रागुत्सर्पणात्'-इति च नै०१२.१३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

त्रिपदा अनुष्टुप्पिपीलिकमध्या(°) ।

३ १२ २२ ३१ २　　३ १२ ३ १ १ २१ २
पर्युषुप्रधन्ववाजसातयपरिवृत्राणिसक्षणिः ।
३ २ ३ १ २　　३ १ २
द्विषस्तरध्याऋणयानईरसे ॥ २ ॥ १९६

२र　र र　१　२　१　२
I पर्यूषुप्रधन्वावाजा३सा । तायाइ । ओइ । पारी ।
१　२र　१　७　१
ओइ । वृत्राणि । सक्षणिः । द्वाइषस्तारा२ । धि-
१　१र　१
या२इ । अर्णाया२ः । ना२ः । ईरासा२३इ । ओ-
२　१　१
ये३ । रसा३४३इ । ओ२३४५इ । डा ॥ १६ ॥

५　२ १ र २　१ २ ३　५
II पर्यूषु । प्रधन्वावा३ । जासाता२३४याइ ।
२ र　१ २ २　१र २ २
परिवृत्राणिसक्षणिः । द्विषास्ता३रा । धियाऋणया१ना-
२　१　२　५
३ई । हुम् । रा३४४सो६हाइ ॥ १७ ॥

---

१९६ उत्तरार्चिकस्य ६,१,७,१ = ऋग्वेदस्य ७,५,२२,१ = ऊहे ३,१,७ ।

(°)—"पिपीलिका—पेलतेर्गतिकर्मणः, पिपीलिकमध्येत्यौपमिकम्"-इति दैवत-ब्राह्मण-तृतीयखण्डे । एतदेव पाठभेदेन निरुक्तावपि, तद्यथा "पिपीलिकमध्ये-त्यौपमिकं, पिपीलिका—पेलतेर्गतिकर्मणः"-इति (दै० १,१३) ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ १र र र र र र
III प। यैंपारो। ऊषुपृधन्वावाजसातयेपरिवृत्रा-

२ १ १ १ र र
णिसत्तणिर्वा२३इषाः। ता२३रा। धियाऋणयानवो-

२ १ ५ ४ ५
वा३आ२३४वा॥ रापुसोइहाइ॥ १८ ॥१९६॥

हे "सोम!" सुष्ठु "वाजसातये" अस्मभ्यमन्नदानायैव "परि-प्रधन्व" परितः प्रगच्छ। [यद्वा। "वाजसातये" अन्नलाभाय(१) सङ्ग्रामं प्रगच्छ।] किञ्च। "सक्षणिः" सहनशीलस्त्वं "वृत्राणि" शत्रून् "परि" गच्छ। तदेवोच्यते—"नः" अस्माकं "ऋणया"(२) "ऋणानां यापयिता विनाशयिता त्वं "द्विषः" शत्रून् "तरध्यै"(३) तरीतुं हन्तुम् "ईरसे"(४) परिगच्छसि।

"ईरसे"—"ईयसे"-इति पाठौ॥ २॥ १९६

---

I,II,III वाकानि त्रीणि।

(१)—'अन्नसम्भजनाय'-इति वि०।

(२)—'ऋणया'-इति तु "सुपां सुलुगित्यादिना (७,१,३९) सुपोऽयाचि साधितुं लघु सुकरं यथा कौमुद्यां दर्शितं च सम्यगेति।

(३)—'तरध्यै'-इति "तुमर्थे से सेनऽसेन्"-इत्यादिना (३,४,९) सिद्धम्।

(४)—"ईरसे'-इति, निघण्टौ (२,१४)गति-कर्मसु पठितस्य "ईर्त्ते"-इत्यस्य लेटि (३,४,७) अडागमे (३,४,९४) रूपसिद्धम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

द्विपदा(०)।

१ २ ३१ २ ३ २ ३२ ३ २ ३ २ ३ १२ २२
पवस्व सोम महान्त्समुद्रः पिता देवानां विश्वाभि धाम ॥३॥ १९७

४ ५ २ ४ १ २२ १ २ १२ ३२ १२
I पवस्वसोमा। माहांत्समुद्राः। पितादे२वाना-
१ ३ ५२ २ २ १२ १ १ १ १
२३म्। वा२इश्वा२३४औहोवा। भिधामा२३४५॥ १९॥

५२ ५ २२ ५ २ १ ३ ५२
II औहो३वा। औहो३वा। औहो२वा२३४औ-
५ १ २ २ १२ २ १ २ १२ ३ २ १२ ३२
होऽवा। पवस्वसोम। महांत्समुद्रः। पितादे२वाना-
१ २२ १ २ ५२ ५ २२ २
२म्। विश्वाभिधामा२३४। औहोऽवा। औहो३वा।
२ १ ३ ५२ ५ २ १ १ १ १ १
औहो२वा२३४औहोऽवा। ए३। धर्मा२३४५॥२०॥१९७

१९७ उत्तरार्चिकस्य ५,१,१७,१ = ऋग्वेदस्य ७,२,२०,
४ = ऊहे ५,१,९—२१,२,८।

I धाम साम। II धर्म साम।

(०)—द्विपदा, पङ्क्तिरिति शेषः, विंशत्यक्षरदर्शनात्।

११०क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

१ २ ३ २उ ३ २ २ ३ २ ३ २ ३ १र २र
पवस्वसोममहेदक्षायाश्वोननिक्तोवाजीधनाय ॥ ४ ॥ १९८

५र ५ २र २ १र ५ १ २ र
I औहोइवा। औहोइवा। औहोइवा। पवस्वसो-

१र २र १ २र १ २ १ ५र १र ५र ३
म। महेदक्षाय। अश्वोननिक्तः। वा२जीधना२या-

हे "सोम!" "महान्" देवेभ्यो दीयमानत्वेन महत्वयुक्तः। "समुद्रः" समुन्दनः यस्मात् समुद्द्रवन्ति रसास्तादृशः([१])। "पिता" सर्वेषां पालयिता([२]) त्वं "देवानां" "विश्वा"([३]) विश्वानि सर्वाणि "धाम"([४]) धामानि शरीराण्यभिलक्ष्य "परि पवस्व" परिचर ॥ ३ ॥ १९७

---

१९८ उत्तरार्चिकस्य ५,२,१९,१ = ऋग्वेदस्य ७,५,२०, १० = ऊहे ६,१,४।

(१)—"समुद्रः—इत्येतत् पार्थिवेन समुद्रेण सन्दिह्यते। समुद्रः—कस्मात्? समुद्द्रवन्त्यवन्त्यस्मादापः, समभिद्रवन्त्येनमापः, सम्मोदन्तेऽस्मिन् भूतानि, समुदको भवति समुनत्तीति वा"-इति नि०२,१०।

(२)—"पिता—पाता वा पालयिता वा"-इति नि०४,२१।

(३)—आर्षे रूपम् (७,१,३९)।

(४)—सुपि रूपम् (७,१;३९)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र　१　१र　२　र १ २　५र
२३४। औहोईवा। औहो३वा। औहोरवा२३४उहोई-

५　१　१ २३ ११११
वा। ए३। विधर्म२३४५॥ २१॥

४५ र ४　र र　१　१र
II पवस्वसोमा। महेदा३क्षाया२। अश्वोननिक्तो-

र २　५रर　२　११११
२३। वाजा४। औहोवा। धना३या२३४५॥ २२॥ १९८

हे "सोम!" "अश्वोन" अश्वः(१) इव "नक्तः" वसतीवरीभिरद्भिर्विनिर्णिक्तः। "वाजी" वेगवान्(२) त्वं "महे" महते "दक्षाय" बलाय(३) "धनाय" धनार्थञ्च "पवस्व" चर।

'महे"—"क्रत्वे"-इति पाठौ॥ ४॥ १९८

---

I, विधर्म साम।　　II धनसाम।

(१)—"अश्वः—कस्मात्? अश्नुतेऽध्वानं महाशनो भवतीति वा"-इत्यादि नै० २,२७।

(२)—'वेगवान् अन्नवान् वा'-इति वि०।

(३)—"दक्षः"-इति बलनामसु चयोदशं नैघण्टुकम् (२,९)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी ।

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ २र
इन्दुःपविष्टचारुर्मदायापामुपस्थेकविर्भगाय ॥ ५ ॥ १९९

४ ५ ४ १ २ २ १ १ २ १
I इन्दुःपविष्टा । चा२३रुः । मदाया । अपामुपा-

२ १ २ ५२ २ २ १ १ १ १ १
२३स्थाइइ । का२वा२३४औहोवा । भगा३या२३४५ ।

॥२३॥ १९९

"चारुः" कल्याणरूपः "कविः" क्रान्तप्रज्ञः(१) "इन्दुः" सोमः । "अपाम्" उदकानाम् "उपस्थे" उपस्थाने अन्तरिक्षे पवित्रे वा "मदाय" मदार्थम् । "भगाय" भजनीयाय(२) धनार्थञ्च "पविष्ट" पवते(३) ॥ ५ ॥ १९९

---

१९९ ऋग्वेदस्य ७,५,२१,३ ।

I भागम् ।

(१)—'कविः मेधावी'-इति वि० । "कविः"-इति निघण्टौ च मेधावि-नामसु दशमं पदम् (३,१५) । "मेधावी—कस्मात्? मेधया तद्वान् भवति"-इति, "मेधा? मतौ धीयते"-इति नैरुक्तम् (३,१९) । इत्यत्रापि प्रतिपन्नं कविः क्रान्तप्रज्ञइति ।

(२)—"भगोभजतेः"-इति नि०१,७ । निघण्टौ धननामसु च दृश्यते भगइति (२,१०,१०) ।

(३)—'पविष्ट जातः'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी ।

त्रिपदा अनुष्टुप् । पिपीलिकमध्या ।

ऋषिर्देवते पूर्ववत ।

२ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अनुहित्वासुतꣳसोममदामसिमहेसमर्यराज्ये ।

१ २ ३ १ २ ३ १ २
वाजाꣳअभिपवमानप्रगाहसे ॥ ६ ॥ २००

४ ५ ४ १ २र १ २र १२र२
I अनु । अनू । हाइत्वासुतꣳसोममदामसि । म-

र २१ २ २ २ ५ १२र२र १र
दामसायि३ । महा३४३इ । सा३४मा । यंराज्ये । वा-

२र १ २र१ २र १ २र १ २ ४
जाꣳअभिपवमान । पवमाना । प्रागाहसा । औइहो-

५ ४
वा । हो५इ । ४ डा ॥ २४ ॥ २००

हे "सोम !" "सुतम्" अभिषुतं "त्वा" त्वां वयम् "अनुमदा-मसि(१)हि" अनुमदामः अनुक्रमेणाभिष्टुमः खलु । हे "पव-

---

२०० उत्तरार्चिकस्य ६,१,७,२=ऋग्वेदस्य ७,५,२२,२ ऊहे ६,१,१८—१८—८,२,८=ऊह्ये ३,१,७ ।

I वाजिनाꣳसाम ।

(१)—"इदन्तोमसि (७,१,४६)"-इति मस इगागमे रूपम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

वासिष्ठी। द्विपदा। मारुती।

२ क २र ३ २ ३ १ २ ३ २ ३ २ ३ २ ३ १ २
कई व्यक्ता नरः सनीडा* रुद्रस्य मर्या अथा† स्वश्वाः॥ ७॥ २०१

४ ५र ४ ४ २ १ १
I कई व्या५क्ताः। नरःसा३नाइडा२ः। रुद्रस्यमर्या-

१ ३ ५र र २ १ १ १ १ १
२३ः। आ२था२३४औहोवा। सुवा३श्वा२३४५ः॥२५॥

मान" पूयमान साम! स त्वं "महे" महति "समर्थ्यराज्ये"(२) महत् समनुष्यं त्वदीयं राज्यमनुपालयितुं "वाजान्"(३) अन्नु-बलान्यभिलक्ष्य "प्रगाहसे" प्रगच्छसि॥ ६॥ २००

---

* "सनीका"--इति, † "अधा"-इति च ऋग्वेदीय-पाठौ।

---

२०१ ऋग्वेदस्य ५,४,२३,१।

I ह्निकं साम।

(२)—'समर्थ्यराज्ये विप्रराज्ये यज्ञे'-इति वि०।

(३)—'वाजान् अन्नानि'-इति वि०। वाजइत्यन्ननामसु (२,७,२) बलनामसु च पाठभेदेन (२,९,२) दृश्यते निघण्टौ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ १ २ ५र २ २ २ ३र ५र २ १
II कई३ ४३वियक्ताः । नरा३४३:सनीडाः । रुद्र-

७ १ २ ५र र २ १ १११
स्यमर्या२३ः । आ२र्था२३४औहोवा । सुवा३स्वा२३४५ः

॥ २६ ॥

४ ५ १ १२ ४ ५
III काईम् । विया२३ । औवा३ । आक्ताः ।

४ ५ १ १२ ४ ५ ४ ५ १
नाराः । सना२३ । औवा३ । आइडाः । रुद्रा । स्य

११ ४ ५ ४ ५ १ १ २
मा२३ । औवा३ । आर्याः । आथा । सुवा२३ । औवा३ ।

४ ५ ४
आश्वाः । होऽ५इ । डा ॥ २७ ॥ २०१

"व्यक्ताः" कान्तियुक्ताः "नरः" नेतारः "सनीड़ाः" समानाभ्यो-नौकसः "रुद्रस्य" रोदनशीलस्य(१) एतन्नामकस्य "मर्य्याः" मर्य्य-

---

II विकं साम । III निकं साम ।

(१)—"रुद्रो रौतीति सतो रोरूयमाणो द्रवतीति वा रोदयतेर्वा । यदरुदत् तद्रुद्रस्य रुद्रत्वमिति काठकम् । यदरोदीत् तद्रुद्रस्य रुद्रत्वमिति हारिद्रविकम्"-इत्यादि नि० दै०४,६ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी ।

पद्पङ्क्तिः(१) । आग्नेयी । वामदेवऋषिः ।

३ २ ३ ३ ३ २उ ३ २ ३ २ ३ २ ३ ३ १ २
अग्नेतमद्याश्वनस्तोमैःक्रतुन्नभद्रꣳहृदिस्पृशम् ।

३ १ २ ३ १ २
ऋध्यामातओहैः ॥ ८ ॥ २०२

५ र ४ ५ २ १र २ १
I अग्नेतमाद्या । अश्वन्नस्तोमाइः । क्रतुन्नाइभा-

१ २ १ २ १ ३ ५र र
द्रारम् । हार्दिस्पृशाम् । ऋद्ध्यार्मार्मार्२३४औहोवा ।

२१र २ १ १ १ १
तओवार्२३४५इः ॥ २८ ॥

नृभ्यो हिताः(२) । अथापि च "स्वश्वाः" शोभनवाहाः "इमम्" एवम्भूताः(३) "के" भवन्ति ? रूपातिशयात् ऋषिः(४) आश्चर्य्यं वाहेति ॥ ७ ॥ २०१

---

२०२ उत्तरार्चिकस्य ८,१,५,१ = ऋग्वेदस्य ३,५,१०,१ यजुर्वेदस्य १५,४४—१७,७७ = ऊहे २१,२,७॥

(१)—गायत्रीपादसदृशाक्षरैरस्यास्त्रयः पादाः श्रूयन्तेऽतः पद्पङ्क्ती गण्यते ।

(२)—"मर्या—इति मनुष्यनाम, मर्यादाभिधानं स्यात्"-इति नि० ४,२ ।

(३)—"मिताक्षरेष्वनर्थकाः कमीमिद्विति"-इति (१,९) निरुक्तवचनादयम् इमि अनर्थकम् विवरणमतम् ।

(४)—"ऋषिर्दर्शनात्"-इति नि० २,११ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ८　２　２३५　२　१८
II अग्ने। द्यो३४३इ। तमद्य। अश्वन्नस्तोमाइः।

२　१　१२१　२　१
क्रतुन्ना२भाद्रा२म्। ह्वार्दी३ओइ। स्पृशम्। ऋध्यारे२-

३　५८ ८　२२८ ३ १११
मा२३४औहोवा। तओहा२३४५॥ २९॥ २०२

हे "अग्ने!" "अद्य" अस्मिन्नहनि, वयमृत्विगादयः "ओहैः"(१) इन्द्रादि-प्रापकैः "स्तोमैः" स्तोत्र-समूहैः(२) "तं" प्रसिद्धं त्वाम् "ऋध्याम"(३) समर्द्धयामः। कीदृशं त्वाम्? "अश्वं न" वोढारमश्वमिव तथा "हविषः" वाहकम्। "क्रतुं न" कर्त्तारमिव उपकारिणमित्यर्थः। तथा "भद्रं" भजनीयम्(४)। "हृदिस्पृशं" हृदयङ्गमम्(५) अतिशयेन प्रियमित्यर्थः॥ ८॥ २०२

---

I,II आश्वे द्वे।

(१)—ओहैरिति श्रुतेः ऊहगानीयैरित्यर्थस्तु सुलभः, परं नास्य भाष्यकृतः सम्मतः, एतग्रन्थे ऊहगानस्य योनिगानमूलकत्वेनामादित्वाभावात्।

(२)—वहिष्यवमानादिभिरित्यर्थः।

(३)—निघण्टौ परिचरण-कर्मसु पठितस्य ऋध्नोतीत्यस्य रूपम् (३,५,७)।

(४)—'भद्रं दीप्तम्'-इति वि०।

(५)—'हृदयं स्पृशति, हृदयेन वा स्पृश्यते'-इति वि०।

१११क,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

पुरउष्णिक्। वाजिनां स्तुतिः।

३ १ २ ३ १र १ ३ १ २ १र ३ १ २ ३ २ ३ २
आविर्मर्या आवाजं वाजिनो अग्मन्देवस्य सवितुः सवम्।

३ १ २
स्वर्गं अर्वन्तो जयत॥ ९॥ २०३

२र १ ५ १र र र र
I आविर्म्मा२३४र्य्याः। आवाजंवाजिनोअग्मान्।

२र १ २ २र १ ५ १ ०
देवस्यस। वितुःसा२३४वाम्। स्वर्गाअर्वा२३४५न्ता-

१ १ १ १ १
६५६ः। जयता२३४५॥ ३०॥ २०३

"मर्य्याः" मनुष्येभ्यो हिताः "आविः" प्रकाशमानाः "वाजिनः" देव-विशेषाः(१) वाजिन-भाजः(२) "सवितुः" प्रेरकस्य देवस्य(३) "सवम्" अभिषोतव्यं "वाजम्" अन्नरूपं सोमं "ग्मन्" अगमन्। ततो हे यजमानाः! "स्वर्गं" "जयत" तथा "अर्वन्तः" अर्वतोऽश्वान् जयत॥ ९॥ २०३

---

I वाजिनां साम।

(१)—वाजिन इति निघण्टौ द्यु-दैवत-विभागे विंशत्तमो देवगणः (५, ६,) "वेजनवान्" इति च तत्रैवोक्तम् (२, २८। १०, ३१)।

(२)—तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा, आमिक्षा-निःसृतं च जलं वाजिनम्।

(३)—"सविता सर्वस्य प्रसविता"-इत्यादि च नै० १०, ३१-३१।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी ।

ऐश्वरयोर्धिंष्ण्या ऋषयः । द्विपदा ॥

१२　　३ १ २ ३ २ ३ १र　　२र ३　　१ २ ३ २
पवस्वसोमद्युम्नीसुधारोमहाॅ अवीना*मनुपूर्व्यः ॥१०॥ २०४

॥ पञ्चम-दशति ॥†

४ ५　र ४　　३ २　　२ ३र ५　　१ २र　१ र
I पवस्वसोमा । द्युम्ना३४२सुधारः । माहाॅ अवी

१　२र　　३ २
नाम् । अनुप । र्व्यो२३४५इ । डा ॥ ३१ ॥ २०४

हे "सोम!" "द्युम्नी" [द्युम्नं द्योततेः, यशो वान्नं वेति यास्कः (नि० नै०५,५)] अन्नवान् यशस्वी वा। "सुधारः" शोभन-धारा-युक्तः "पूर्व्यः" पुरातनः "महान्" त्वम् "अवीनां" "रोम्णां" रोमभ्यः सकाशात् "अनु" क्रमेण "पवस्व" क्षर ॥ १० ॥ २०४

इति श्रीसायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य नवमः खण्डः ॥ ९ ॥

---

* "महामवीना"-इति ऋग्वेदीयपाठः ।

---

२०४ ऋग्वेदस्य ७,५,२० ।

I पवित्रम् ।

---

† ॥ इति पञ्चमस्यार्द्धः प्रपाठकः ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमे खण्डे—

सैषा प्रथमा।

ऐन्द्री।

१ २ ३ १ २ ३ १ १ ३ २ ३ १ २ ३ १ २
विश्वतोदावन्विश्वतोनआभरयंत्वाशविष्ठमीमहे ॥ १ ॥ २०५

५ र २र १ २ २ २
I विश्वतोहाउ। दावन्विश्वतोना:। ओ३। हा।

३ ५ २र २ र १ २ १ २र १
ओ२३४हायि। आ। भरा। भा२३रा। पीत्वाशवि-

२१ १ १र ३र ५ २र र ३र २
ष्ठमायि। माहा। औहो२३४वा। ऐहीयैहीऽ१ ॥ ३२॥

४ ५ र र ४ ५र ४ २ र १ २
II विश्वतोदावन्विश्वतोनआ। भरा। भार२३रा।

१ २८ १ २ १ १ १ २ ४ ५
यांत्वाशविष्ठमायिम। हा। औ३होवा। होऽ५इ।

डा ॥ ३३ ॥ २०५

हे "विश्वतोदावन्" सर्वतश्छेदनवन्(१) सर्वत्र दानवन् वा(२) इन्द्र! स त्वं "विश्वतः" सर्वतः "नः" अस्मभ्यम् अभीष्टम् "आभर"

---

I,II आभरे हे।

(१)—दावन्निति 'दो अवखण्डने'-इत्यस्य रूपमिति स्वीकृते इति भावः।

(२)—दावन्निति ददातेरिति स्वीकारे इति भावः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

ऐन्द्री।

३ २३ २उ　३ २ ३ २ ३ १ २ ३ २ ३ २
एषब्रह्मायऋत्वियइन्द्रोनामश्रुतो गृणे॥ २॥ २०६

४ ५　१ र २　२　२ ३ २
I एषाः। ब्राह्मायआ२१उवा२३। ए३। त्वियआ।
१　२　१ २　२　२ ३ २
आ२३यिद्राः। नामश्रुता३१उवा२३। ए३। गृणआ
॥ ३४॥

४ ५ ४ ५　१　१　२ १　२
II एषाएषाः। ब्राह्मा२ब्राह्मा२। यऋत्वियोवा।
१ २　१　१　१र　२　१ २
ओवा। आयिन्द्रा२आयिन्द्रा२ः। नामश्रुतोवा। ओवा।
२ १　२　४ ५　४
गृणा। औ३होवा। हो५इ। डा॥ ३५॥

आहर। किञ्च। "प्रविष्ठम्" अतिशयेन बलवन्तं "यं" त्वाम्" "ईमहे" अभीष्टं याचामहे(३)॥ १॥ २०५

---

२०६ उत्तरार्चिकस्य ६,१,१,१=ऊहे २१,१,८।

I,II वासुमन्दे द्वे।

(३)—"ईमहे"-इति याच्ञा-कर्मसु प्रथमं नैघण्टुकम् (३,१९)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ ४ ४ ५ १ २र १ ७
III एषाः। ओ। ओवा। ब्रह्मायाः। क्षत्त्रिया २ः।
१ २ २ २ २ १ २ २ १
आयिन्द्रो३हा३यि। ना३मा। शू२३तो। गृणा।
२ ४ ५ ७
औ३होवा। हो५ड़। डा॥ ३६॥

४ २ २ ५ २र १ २ २
IV ओ३हा३४३। ओ३४हा। एषाब्राह्मा३४३। या-
५ ४ ३ २ २ ५ २१ २
३४ः। क्षत्त्रियाः। ओ३हा३४३। ओ३४हा। इन्द्रोनामा
२ ५८ ४ ३ २ २
३४३शू३४। तोगृणायि। ओ३हा३४३। ओ३४५हा६५६।
२ १ २ ३ १ १ १ १
ए३। सुवर्व्वर्त २३४५॥ ३७॥

२८ १र २र १ २र १रर
V एषब्रह्मौहो। याक्षत्त्रियाः। इन्द्रोनामौहो।
२र१र २ २ २
शूतोगृणा३१उवा२३। ऊ३४पा॥ ३८॥ * २०६

---

III,IV,V काव्यश्याणि त्रीणि।

---

*॥ इति ग्रामे गेये एकादश-प्रपाठकः॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

त्रसदस्युऋषिः।

३ १ ३ १ २ ३ १ २ ३ १र २र ३ १ २ ३ १ ३ १ २

ब्रह्माणइन्द्रंमहयन्तोअर्कैरवर्द्धयन्नहयेहन्तवाउ ॥३॥ २०७

५ र २ १ १

I ओम् ॥ हाउस्वरता। ब्रह्माणा२ः। इन्द्रम्। आ-

१ २ १ १ २ २ र २

महयार्न्तो२३४कैः। अवा२र्द्धयान्। अहयेह। तवा२३-

५ १र १ १११

४पुयि। ऊ६५६। श्लोकयता२३४५॥ १॥

५र ५ २१८

II हाउ। अभी। स्वरता। ब्रह्माणआयिन्द्रा२म्।

"ऋत्वियः" ऋतौ वसन्तादि-समये भवः "यः" इन्द्रः "नाम-श्रुतः" विश्रुतः "एषः" "ब्रह्मा" स्तोतॄणामभीष्टस्य वर्द्धयिता(१) तमहं "गृणे" स्तौमि ॥ २ ॥ २०६

---

२०७ ऋग्वेदस्य ४,१,२८,४।

I,II श्लोके द्वे।

(१)—ब्रह्मेति वृद्धि-वृद्धावित्यस्य रूपमित्यभिप्रेत्योक्तमेवम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

ऐन्द्री।

१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अनवस्तेरथमश्वायतक्षुस्त्वष्टावज्रम्पुरुहूतंद्युमन्तम्॥४॥ २०८

२ १ ३ ५ २ १ २ र १
मह्वया २न्तो२३४। कैः। अवर्द्धया२न्। अह्वयेहन्तवा२-

४ ५
३४५ऊ६५६। ओ२३४का:॥ २ ॥ २०७

"अहये" वृत्राय(१) [क्रियाग्रहणं कर्त्तव्यमिति कर्मणः सम्प्रदानत्वात् हनन-क्रियायां वृत्रस्य सम्प्रदानसंज्ञा] "हन्तवै" [तुमर्थे सेऽसेनिति (३,४,९) तवै(२) प्रत्ययः] हन्तुम् "अर्कैः" अर्चनीयैः स्तोत्रैः मन्त्रैः हविर्लक्षणैरन्नैर्वा "महयन्तः" पूजयन्तः(४) "ब्रह्माणः" ब्राह्मणाः "इन्द्रम्" अवर्द्धयन्" वर्द्धयन्ति प्रीतं कुर्व्वन्तीत्यर्थः॥ ३ ॥ २०७

---

* "तत्तं त्व"-इति ऋग्वेदस्य।

---

(१)—'अहये—दानवाय'-इति वि०। निघण्टौ मेघ-नामसु अहिरिति एकविंशतिसमं पदम्, वृत्रइति तु अष्टाविंशतितमम् (१,१०)।

(२)—ऋचि "तवै', 'उ'-इति छेदः।

(३)—"अर्कोदेवोभवति यदेनमर्चन्ति। अर्को मन्त्रो भवति यदनेनार्चन्ति अर्कमन्नं भवत्यर्चति भूतानि। अर्को वृक्षोभवति स वृत्तः कटुकिम्ना"-इति नि० ५, ४।

(४)—"महयति"-इत्यर्चति-कर्मसु पठितिः त्रयस्त्रिंशत्तमं नैघण्टुकम् (३ १४)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र　　२ ऽ　१　　२　　१ २ र
I हाउस्वरता। स्वरतस्वरा२३ता। आनवस्ते-
१ २　　२र १ २　　५र　　२ऽ १
रथम्। स्वायाताऽ१च्च२३४ः। हाउस्वरता। स्वरतस्वरा
२　१२र १२ १ २　१　　५र
२३ता। त्वष्टावज्रं पुरुहू। ताद्युमान्ता२३४म्। हा-
२ ऽ १　　२　५रर　　२
उस्वरता। स्वरतस्व। रा२ता२३४औहोवा। स्वराऽ३ता
११११
२३४५॥ ३ ॥ २०८

हे इन्द्र! "अनवः" मनुष्याः(१) "ऋभवः"(२) "ते" त्वत्सम्बन्धिने "अश्वाय" वाहनाय(३) तदर्थं "रथं"(४) "ततक्षुः" कृतवन्तः(५)

---

I आनुष्टोकम्।

(१)—अनवः-इति मनुष्य-नामसु पञ्चविंशतितमं नैघण्टुकम् (२,३)।

(२)—"ऋभुर्विभ्वावाज इति सुधन्वन आङ्गिरसस्य त्रयः पुत्रा बभूवुस्तेषां प्रथमोत्तमाभ्यां बहुवन्निगमा भवन्ति न मध्यमेन। तदेतदृभोश्च बहुवचनेन चमसस्य च संस्तवेन इवि इमतयीषु सूक्तानि भवन्ति। आदित्यरश्मयोऽप्यृभव उच्यन्ते"-इति नि० ११, १६।

(३)—"अश्वोवोढा (ऋ, ९म, ७अनु, ९सू, ४ऋक्)" इत्यादिश्रुतेरश्वस्य वाहनत्वम्।

(४)—"रथो रंहतेर्गतिकर्मणः स्थिरतेर्वा स्याद्विपरीतस्य रममाणोऽस्मिंस्तिष्ठतीति वा, रपतेर्वा, रसतेर्वा" इति नि० ९,११।

(५)—"तक्षतेर्वा स्यात् करोति-कर्मणः"-इति नि० ८, १२। सार्वकालिक-लिडि रूपम् (२,४,१)।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

ऐन्द्री।

२ ३ २ ३ १ २ ३ २ ३ १ २र ३ १ २ ३ २ २
शग्ध्यदंमघवन्रयीषिणेनकाममव्रतोहिनोतिनस्पृश-

३ २
द्रयिम् ॥ ५ ॥ २०९

३८ २ ३ ४ ५ २ १ २
I औहोयि। शग्ध्यदाम्। मघवन्रया॥१२३४यि।

५ १र र र २ २ ४
षिणायि। नकाममव्रतोहिनोतिनस्पृशत्। रयिमो२३४५

डा ॥ ४ ॥ २०८

हे "पुरुहुत" बहुभिराहुतेन्द्र! "त्वष्टा" विश्वकर्मा च(१) त्वदीयं "वज्रं" "द्युमन्तं" दीप्तिमन्तमकरोत् ॥ ४ ॥ २०८

---

I आनुस्तोकम्।

(१)—"विश्वकर्मा सर्वस्य कर्त्ता इति नि० १०,२५। तथाच ऋग्वेदीया श्रुतिः—

"य इमे द्यावापृथिवी जनित्री रूपैरपिंशद् भुवनानि विश्वा।
तमद्य होतरिषितो यजीयान् देवं त्वष्टारमिह यक्षि विद्वान्॥"
(ऋ० १० म० १० अनु० ९सू० ९ऋक्)



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

इयं वैश्वदेवी।

२ ३ २ ३ १ २ १ ३ १ २ ३ १ २ ३ १ २ ३ १ २
सदागावःशुचयोविश्वधायसःसदादेवाअरेपसः ॥६॥ २१०

४ ५ १र २ २१र २ २
I सादा। गावःशुचयोविश्वधायार२३साः। सार-
५ १ र २ १ ५ ६ ५
३४दा। दायिवाअरोर३४वा। पार३४साः॥ ५ ॥ २१०

"रयीषिणः" रयिं धनं हविर्लक्षणं प्रेषयन्तो जनाः "शं" सुखं "पदं"(१) स्थानं "मघं" धनं च लभन्ते इति शेषः। "अव्रतः" इन्द्र-विषय-यागादि-कर्म-रहितः(२) पुरुषः शं सुखादिकं "न हिनोति" न प्राप्नोति, दातुं समर्थो न भवतीत्यर्थः। स्वयमपि "कामम्" अभीष्टं "रयिं" रमणीयं धनं "न स्पृशत्"(३) न स्पृशति ॥ ५ ॥ २०९

"गावः" गन्तारः स्तोतारो वा(१) "सदा" इन्द्रं पर-रणादिभि-

I, वाचः साम।

(१)—'शं सुखं, तस्य पदम्,-सम्पदम्' इति वि०।
(२)—व्रतमिति कर्म-नामसु पठितं नैघण्टुकम् (२,१)।
(३)—स्पृशदिति लेटोरूपम्।

(१)—गच्छन्ति, गातेर्वा कारीनामकरणः"-इत्यादि द्विविध-नैरुक्त-दर्शनादित्यभि-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

सम्पातऋषिः।

द्विपात्। उषस्या।

१ २ ३१ २ ३१ २र ३ १र २र
आयाह्विवनसासद्द्गावःसचन्तवर्त्तनिंयदूधभिः ॥ ७ ॥ २११

३र २ ४ ५ १ १र
I औहोऽयि। आयाहीं। वना२सासहा।

१ २ १ ० १ १ ६ २ ३
गावःसच। तावर्त्तानी२म्। यात्। ऊ२। धभिरो२३-

४५६। डा ॥ ६ ॥ २११

रुपगच्छन्ति ते "शुचयः" निर्मलाः "सदा" सर्वदा "विश्वधा-यसः" विश्वं धारयन्ति पुष्णन्तीति विश्वधायसः बहन्नाः भवन्तीत्यर्थः! "सदा" सर्वदा "देवाः" दानादि-गुण-युक्ताः "अरेपसः" पाप-रहिताश्च(२) भवन्ति ॥ ६ ॥ २१०

---

२११ ऋग्वेदस्य ८,८,३०,१।

I वाचः साम।

प्रायः २,५। अथवा गावः आदित्य-रश्मयः (नै० १, ५, ३) अमेध्येऽपि पतमानाः शुद्धाः। अथवा गावः आपः, भूमि-गताः (नै० १,१,१,) अथवा गावः वाचः (नै०१,११,४)।—'ऋग्यजुः'सामलक्षणाः'-इति वि०।

(२)—'अरेपसः- अ-लेपिताः अ-पापाः; रेपइति पाप-नाम' इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

१ २ ३ १र २र ३ २ ३ १ २ ३ २ ३ १ २
उपप्रत्नेमधुमतिक्षियन्तःपुष्येम*रयिन्धीमहेतइन्द्र ॥८॥ २१२

४ ४ ५ ४र ५ ४ ५ ४ १
I औवा। उपप्रत्नेमधुमतिक्षियन्तः। औवाऔयि।

१र र र २ १ २ १ २ १
पुष्येमरयिन्धामहेतआर३यिन्द्रा। औ। वाऔवा। औ।

२र २ ५
वाहा३१उवार३। ऊ३४पा ॥ ७ ॥ २१२

हे "उषः!" "वनसा" वननीयेन तेजसा "सह" सार्द्धम् "आयाहि" आगच्छ। उषसो वाहनभूताः "गावः"(१) "वर्त्तनीं" रथं "सचन्त" सेवन्त(२) अनश्वेन रथेनायाहीत्यर्थः। "यत्" याः गावः "ऊधभिः" उपलक्षिताः प्रभूताः पीना इत्यर्थः। ताः गावः इति सम्बन्धः ॥ ७ ॥ २११

---

* "पुष्यन्तो"-इति ऋग्वेदीयपाठः।

---

२१२ उत्तरार्चिकस्य ४,१,२,४।

I माधुच्छन्दसम्।

(१)—अत्र गावइति रश्मय इत्यर्थः ( नै० १,५,२ ) उषसउदयात्पुरैव तदुपांशुत्वाद् वाहनत्वेनोपचर्यते।

(२)—"षच सेचने सेवने च ( धा० पा० )"।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

१ २ ३२ ३१२ ३१र २र ३२उ ३ १ २र
अर्चन्त्यर्कं मरुतःस्वर्काआस्तोभति श्रुतोयुवासइन्द्रः॥९॥२१३

४ ५ ४ १ २१ २ १ २र १
I अर्चन्तिया। कम्मरुतःसुवा२३र्काः। आस्तोभता-

२१र र ऽ २ २ ५
यि। श्रुतोयुवासआ। येन्द्रा२३उवा३। ऊ३४पा॥ ८ ॥२१३

"हे इन्द्र" परमैश्वर्ययुक्त! (१) त्वं "मधुमति" माधुर्योपेते "प्रचे" राज-कर्त्तृक-न्यग्रोध-चमसे "ते" त्वदीये "क्षीयन्तः" समीपे स्थिताः वयं "रयिं" रमणीयमन्नं "पुष्येम" पोषयेम। किञ्च। त्वां "धीमहे" वयमनुध्यायेम॥ ८॥ ११२

"स्वर्काः" शोभन-स्तोत्राः(१) शोभनान्नावा(२) "मरुतः"(३)

---

२१३ उत्तरार्च्चिकस्य ४,१,२४ = ऊहे ३,२,१९।

I मारुतम्।

(१)—"इन्दतेर्वैश्वर्य्यकर्म्मणः"-इत्यादि नि ४,८। "समस्ततेजः परमेश्वरत्व-निमित्तेन्द्र-शब्द-वाच्यः इति मीमांसा-भाष्ये शबरः।

(१)—"अर्को मन्त्रो भवति, यदनेनार्च्चन्ति" इति नि० नै० ५, ४।

(२)—"अर्कमन्नं भवति, अर्चति भूतानि" इति नि० नै० ५,४।

(३)—"अथातोमध्यस्थाना देवगणाः——तेषां मरुतः प्रथमागामिनो भवन्ति" इत्यादि नि०११,१३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी ।

२ ३ १ २　३ १ २　३ १ २　३ १ २　३ २ ३ १
प्रवइन्द्रायवृत्रहन्तमायविप्रायगाथंगायतयंजुजो-

२
षते* ॥१०॥ २१४

॥ प्रथम-दशति ॥

१४　१　२　७　२　१
I प्रवाः । आयिन्द्रायवृत्रहान्तमा२३या । वायि-

२　२　२　२　२　१　२　२　१
प्रायगाथंगा॒१याऽता । याञ्जजोवा३ । उप् । षा॒२तो४५-

२
हायि ॥ ९ ॥ २१४

"अर्कम्" अर्चनीय(४)मिन्द्रम् "अर्चन्ति" स्तोत्रैर्हविर्भिः । "युवा" नित्य-तरुणः "श्रुतः" विख्यातः "इन्द्रः" "आस्तोभति" तेषां सम्बन्धीनि शत्रुजातान्याभिमुख्येन हिनस्ति(५) ॥ ९ ॥ २१३

---

* 'जुजोषत'-इति वि० पाठः ।

---

२१४ उत्तरार्च्चिकस्य ४,१,२५=ऊहे २,२,२० ।

I उद्वांशं साम ।

(४)—"अर्कोदेवोभवति यदेनमर्चन्ति" इति नि० नै० ५, ४ ।

(५)—विवरणकृता लेषान्यथैव व्याख्याता । तद्यथा—"अर्चन्ति । पूजयन्ति । 'अर्क' देवम्, 'मरुतं' ऋत्विजः, 'अर्काः' शोभनमन्त्राः । 'आस्तोभति' स्तौति ; 'श्रुतः' आख्यातः । 'युवा' तरुणः । कोऽसौ ? इन्द्रः"-इति ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थखण्डे—

सैषा प्रथमा।

१ २ ३ १ २र ३ २उ ३ १ २
अचेत्यग्निश्चिकितिः*हव्यवाड्न सुं†मद्रथः ॥१॥२१५

हे "विप्राः" मेधाविनः! (१) "वृत्रहन्तमाय" अतिशयेन वृत्रस्य हन्तमः, तस्मै इन्द्राय "तं" "गाथं" स्तोत्रं(४) "प्रगायत" प्रकर्षेण पठत। हे उद्गातारः! स इन्द्रः "यं" स्तोत्रं "जुजोषते" सेवते। १०॥ २१४

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ प्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्य दशमः खण्डः ॥ १० ॥

* "श्चिकितु"-इति
† "हव्यवाट् स सु"-इति } इति ऋग्वेदीयपाठौ।

२१५ ऋग्वेदस्य ६,४,२७,५!

(१)—"विप्रः" इति मेधावि-नामसु प्रथमं नैघण्टुकम् (३,१५)।
(२)—"गाथा" इति वाङ्नामसु अष्टत्रिंशत्तमं नैघण्टुकम् (१,११)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५र ४ २ १ १ २ १ २
I अचेती । अग्निः । चिका२३यितीः३ः । हा२३व्या

१ ३ ५र र २ २ ११११
३ । वा२डा२३४औहोवा । सुमद्र्था२३४५ुः ॥ १० ॥

४५र ४ १ १र
II अचेतिया । आयिस्राङ्कायिती२३ः । हौ । होयि

२ ११११ १ १ ३ ५र र
औ३हो२३४५ । हव्या२३ । वा२डा२३४औहोवा ।

२ २ २ ११११
ए३ । सुमद्र्था२३४५ुः ॥ ११ ॥ २१५

"हव्यवाट्" हविषां वोढारं "चिकितिः" विशिष्ट-प्रज्ञः(१) "सुमद्रतः" सुष्ठु-हविर्युक्त-रथोऽग्निः "अचेति" चेत्यते सर्वैर्ज्ञायते । यद्वा । [व्यत्ययेन कर्त्तरि प्रत्ययः (३,१,८५)] हविःप्रदातारं यजमानं जानाति ॥ १ ॥ २१५

---

I,II ग्राम्ये द्वे ।

(१)—"चिकयत्" इति पश्यति-कर्मसु प्रथमं नैघण्टुके, तस्य रूपं चिकितिरिति, अथवा प्रज्ञा-नामसु पठितं "केतः"-इति तस्यैवेति ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

वन्धुर्ऋषिः। आग्नेयी।

२ ३ २ ३ १ २ ३ १ ३ १ २ १ २ ३ क २र
अग्नेत्वन्नोअन्तमउतत्राताशिवोभुवो*वरूथ्यः ॥२॥ २१९

४ १ २ १ २ ५
I ओग्नायि। त्वन्नोर२३आ। ऊम्मा२३। ता२३४माः।

२ १ २र १र २ १र २ २र ४ ५ ४
उतत्रात्ताशिवोभुवः। शिवोभुवा२३ः। वरोवा। था॒५

५
योईहायि ॥ १२ ॥

४ र ५ ४र ५ २र १ २
II अग्नौ। होयि। त्वौहोयि। नोअन्तमा ३१ उवा

३ ५ २र २ ३ ५
२३। ऊ२३४ता। त्राता ओ २३४ वा।

२ १र २ ३ १ १ १ १
शिवोभुवा २३४५॥ १३॥

---

* "भवा"-इति ऋग्वेदीयपाठः।

---

२१९ उत्तरार्चिकस्य ४,१,२२,१ = ऋग्वेदस्य ४,१,१९,१ = यजुर्वेदस्य ३,२५—१५,४८ = ऊहे ३,२,१८—१२,२,१५।

I गूढम्। II अत्यर्दः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र २  ४ ५र ४  ५   २ १२र १र २ १र २
III अग्नेतू३ वन्नोअन्तमाः। उतत्राताशिवोभुवः।
१  ७र र २   ५  ४
वरा २ ३। औहोहा २ ३४ वा। था ऽ ५ यो ६
५
हायि॥ १४॥

५ र  २  ४ ५र ४  ४ ५  २
IV अग्ने। हापि। त्वन्नोअ। तमाः। ऊता२।
२  ऽ २  १  २ २
हा२यि। औ३हो३१यि। त्राता२। शिवा ३४५।
२  ५
भू२३४वाः॥ १५॥ २१६

हे "अग्ने!" "वरूथ्यः" वरणीयः सम्भजनीयः। यद्वा। वरूथैः यज्ञगृहैर्वृतः(१) "त्वं" "नः" अस्माकम् "अन्तमः" अन्तिकतमः "भूवः" भव। "उत" अपिच "त्राता" रक्षकः "शिवः" सुखकरश्च भव(२)॥ २॥ २१६

---

III गूर्दः।    IV अत्यर्दः।

(१) वरूथमिति गृहनामसु सप्तदशं पदम् नि० ३, ४।

(२)—"शिवम्"-इति सुख-नामसुष्टादशं नैघण्टुकम् (३,३,) ततो मत्वर्थो याच् प्रत्यये रूपमिति भावः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

आग्नेयीयमृक् ।

२ ३ १ ३ २ ३ २ १ २ ३ १ २ ३ १ २
भगोनचित्रोअग्निर्महोनान्दधातिरत्नम् ॥ ३ ॥ २१७

४ ५ १ १ ३ १
I भागाः । नचित्रः । अग्निर्म्महोर२नाइम् । दा२-

२ ५र र २ १ २ १ १ १ १
धार२३४औहोवा । तिरत्नार२३४५म् ॥ १६ ॥

४ ५र ४ ५ ४ २ १ २ १ २
II भगोनचित्राः । अग्निर्महोर२नाइम् । दा१धा-

५र र २ १ १ ३ १ १ १ १
२३४औहोवा । ए३ । तिरत्नार३४५म् ॥ १७ ॥ २१७

"महोनां" महताम् मध्ये "भगोन" सूर्य्यइव(१) "चित्रः" चायनीयः(२) पूजनीयः "अग्निः" यज्वनां "रत्न" रमणीयं धनं "दधाति" धारयति । प्रयच्छतीत्यर्थः(३) ॥ ३ ॥ २१७

---

I,II सातनिके द्वे ।

(१)—"भगमादित्यः"-इति नै० ३,११ । "न-शब्दस्तु उपमार्थीयउपरिष्टात्" -इति नै० १,४ ।

(२)—चित्रन्देवानामितिमन्त्रव्याख्यानावसरे एषएवार्थोव्यवहृतो यास्केन (१२,१६) । तदेवात्र व्याख्याने मानम् ।

(३)—"दधि"-इत्यस्य निघण्टौ ( ३,१९ ) याच्ञा-कर्मसु दर्शनमेवैवमर्थे मानम् ।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

एषा ऐन्द्री ।

१ २ ३ १ २　३ १ ३ १र　१र ३ १ ३ १
विश्वस्यप्रस्तोभपुरोवासन्यदिवेह्नूनम् ॥ ४ ॥ २१८

५　२ १　२ र र　१ ३
I विश्वस्या । प्रस्तोभा२ । पुरोवासा३न् । यदिवे-

५　१　१ ३　५र र　३
३२३४हा । नू२३ । ना३मा२३४औहोवा । धा२३४--

५
नाम् ॥ १८ ॥

५र　२ १　२ र र
II औहोयि । विश्वस्या । प्रस्तोभा२ । पुरोहोवा३-

२　१　१ र　१　१ ३
हायि । वासा२न् । यदिवेहा । नू२३ । ना२मा२३४

५र र　३　५
औहोवा । धा२३४मो ॥ १९ ॥१२८

"विश्वस्य" सर्व्वस्य मनुजातस्य "प्रस्तोभ" प्रस्तोभति हिन-स्तोत्यर्थः । "यदिवा" "इह" यत्र "नूनं" "पुरो(१) वासन्" पूर्व्वस्मिन् देशे वसन् स्थितः स इह नूनं प्रस्तोभ ऋत्विग्भिः प्रकर्षेण स्तूयते [स्तोभतिस्तु स्तुति-कर्मा(२) ॥ ४ ॥ २१८

---

I धनसाम ।　　II धर्म्मसाम ।

(१)—'नूनमिति वितर्के'-इति वि० ।
(२)—स्तु ति-कर्मस्विदं चतुर्थं नैघण्टुकम् (३,१४) ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

सम्बर्त्त ऋषिः। उषोदेवता। द्विपदा।

३ २उ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २
उषाअपस्वसुष्टमः*संवर्त्तयतिवर्त्तनिंसुजातता ॥५॥ २१९

५ र १ २ ३ ५ ७ १ ७
I उषाअपा। स्वासुष्टा२३४माः। संवा२र्त्तया। तिवा

३ ५ १ ३ ५र र २ १ ३ १ १
२र्त्ता२३४नीम्। सू२जा२३४औहोवा। ए३। तता२३-

१ १
४५॥ २०॥ २१९

इयम् "उषाः" "स्वसुः" भगिन्याः रात्रेः(१) सम्बन्धि "तमः" "अन्धकारम्" "अप संवर्त्तयति" आत्मीयेन तेजसा अपगमयति। "सुजातता" सुजातत्वं आत्मनः सुप्रकाशत्वं च "वर्त्तनिं" वर्त्तयति रथं प्रापयति(२)॥ ५॥ २१९

---

* "स्वसुस्तमः"-इति ऋग्वेदीयपाठः।

---

२१९ ऋग्वेदस्य ८,८,२०,५।

I उषसः साम।

(१)—स्वसा स-असा, स्वेषु सीदतीति वा इति नि० ११ ३२।

(२)—'स्वसुः तमः, स्वसुः स्वसा भगिनीव अपसंवर्त्तयति वर्त्तनिं रात्रिं वरणीया-अनस्य सुजातता इति विवरणकृद्व्याख्यानम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

भौवनआत्यऋषिः।

३ २उ ३ १ २ ३ १ २ ३ १ २ ३ २
इमानुकम्भवनासीषधे*मेन्द्रश्चविश्वेचदेवाः॥ ६ ॥ २२०

५ ४र ५ ४ ४ २र १ ३ २ २
I इमानुकम्भूऽ५वना। सीषधार्रयिमाउवा३। ई३-

५ २ १ ३ ३ २ ५ ३ १ -१
४हा। इन्द्रश्चवार्रयिश्वाउवा३। ई३४हा। चदे३। वा

३ ५र र ३ ५
रयार३४औहोवा। वी२३४आः॥ २१ ॥ २२०

"इमाः"(१) इमानि परिदृश्यमानानि "भुवना"(२) भुवनानि "नु" क्षिप्रं(३) "सीषधेम" साधयामः वशीकुर्मः। कमिति पूरकः(४) यद्दी। इमानि सर्व्वाणि भूतजातानि अस्मभ्यं "कं" सुखं(५) सीषधेम साधयतु (पुरुष-व्यत्ययः) "इन्द्रश्च" "विश्वे" सर्वे देवाश्च स्तुत्या प्रीता इममर्थं साधयन्तु॥ ६॥ २२०

---

* "सीषधा"--इति ऋग्वेदस्य, सायणीयोत्तरभाष्य-धृतश्च।

---

२२० उत्तरस्य ४,१,२३,१ = ऋग्वेदस्य, ८,८,१५,१ आरण्यके ३,२१—२२ = ऊहे १,२०।

I भारद्वाजम्।

(१), (२)—सुपांसुलुगित्यालो रूपम् (७, १, ३९)।

(३)—"नु"-इति क्षिप्र-नामसु प्रथमं नैघण्टुकम् (२, १५)।

(४)—"मिताक्षरेष्वनर्थकाः कमीमिद्विति"-इति नै० १,९।

(५)—"कम्"-इति सुख-नामसु अन्तिमं नैघण्टुकम् (३, ६)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

कवषऐलूषऋषिः।

इयं वैश्वदेवी।

२ ३ १ २ ३ १ २ ३ ३ १ २ ३ २ ३ १ २ ३ १ २
विस्रुतयोयथापथाद्यइन्द्रत्वन्तुरातयः ॥ ७ ॥ २२१

४ ५ ४ ५ १ १ २ र १
I विस्रू विस्रू। ताया२स्तायार्२ः। यथापथाः।

१ १ २ १ ५ ४
आयिन्द्रा२ त्वाद्या २ ३। तुरी २ ३ ४ वाः। ता ऽ५योऽ-

५
६ हायि ॥ २२ ॥ २२१

हे "इन्द्र!" "त्वत्" त्वत्तः सकाशात् "रातयः" दानानि "वि यन्तु" विविधं गच्छन्तु। तत्र दृष्टान्तः—"पथः" राजमार्गात् क्षुद्रमार्गा यन्ति तद्वत्(१) ॥ ७ ॥ २२१

---

२२१ उत्तरार्च्चिकस्य ९,१,२,२=ऊहे २१,८।

I रातिसाम।

(१)—"विस्रुतय," विविधाः स्रुतयः सरणाः मार्गाः "इन्द्र!" "त्वत्" त्वत्समीपं "यन्त"; "रातयः" दानानि हविर्लक्षणानि 'अथवा'-इत्यादि वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी ।

भरद्वाजऋषिः । द्विपदा ।

३ १२ ३ २र ३ १ २ २
अया वाजं देवहितꣳ सनेम

१ २ ३ १ २ ३ १ २
मदेम शतहिमाः सुवीराः ॥८॥ २२२

५ र र १ २ ३ २ ५ २ र
I अयावाजाम् । दायिवहि । तꣳसनेमा । मदे-

१र २ १ १ ३ र र
मशाइताहिमा २ः । शता२३ । हा १यिमा२३४औहोवा ।

२ १ ११११
सुवीइरा२३४५ः ॥२३॥२२२

"अया" अनया स्तुत्या "देवहितं" देवेन द्योतमानेनेन्द्रेण दत्तम्(१) "वाजम्" अन्नं "सनेम" वयं सम्भजेम । अपिच "सुवीराः" शोभन-पुत्रोपेता वयं "शतहिमाः" शतं हेमन्तान् "मदेम" हृष्याम ॥ ८ ॥ २२२

---

२२२ ऋग्वेदस्य ४, ६, ३, ५ ।

I भारद्वाजम् ।

(१)—हितमिति "ओहाक् त्यागे"-इत्यस्य रूपमिति मत्वैव व्याख्यातम् दत्तमिति ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

आत्रेयऋषिः। इयं वैश्वदेवी।

२ २ ३ १र २र ३ २ ३
ऊर्जामित्रोवरुणःपिन्वतेडाः
१ २ ३ १ २ ३ १ २
पीवरीमिषंकृणुहीनइन्द्र॥ ९ ॥ २२३

४ ५ १ र २ १ १ २ १र र
I ऊर्ज्जा। मित्रोवरुणःपिन्वता२३यिडाः। पीवरी-
र ऽ २ २ ५
मिषङ्कृणुहीनआयिन्द्रा३उवा३। ऊ३४पा॥ २४ ॥ २२३

हे "इन्द्र!" "मित्र:", "वरुण:", त्वञ्च सर्वे यूयं "ऊर्जा" रसेन बलेन वा(१) सहिताः "इडा" अन्नानि(२) "पिन्वत" अस्मभ्यं सिञ्चत प्रयच्छतेत्यर्थः। [ पिन्व सेचने (भ्वा० प०) धातूनामनेकार्थत्वादत्र प्रयच्छ तेत्यर्थः ] किञ्च। "पीवरी" प्रवृद्धम्(३) "इषम्" अन्नं (४) "नः" अस्माकं "कृणुहि(५)" कुरु देहीत्यर्थः(६) ॥९॥ २२३

---

I ऐषम्।

(१)—'ऊर्ज्जा अन्नं रसेर्वा'-इति वि०।

(२)—"इरा, इला, इड़ा वा "-इति पाठभेदेनान्न-नामसु द्वादशतमं नैघण्टुकम् (?, ७।)

(३)—पीवरीं -स्थूलाम्'-इति वि०।

(४)—इषमिति अन्न-नामसु चतुर्दशं नैघण्टुकम् (२, ७)।

(५)—"वाच्छन्दसि (३, ४, ८८)"-इति हेरपित्व-वैकल्पिकम्।

(६)—"कृणुहि कुरु"-इत्येव वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी ।

इयमेकपदाष्टाक्षरा गायत्री । वसिष्ठऋषिः ।

२ २ २
इन्द्रोविश्वस्यराजति ॥ १० ॥ २२४

॥ इति द्वितीय-दशति ॥

२ २ १ ४ ५ र २ २
I इन्द्रो३४ । विश्वस्यरा । जतिहो२३४५इ । डा ॥२५॥

१ १ १ १ २
II इन्द्रा २हो ऽ१यि । वा२यिश्वा । स्यरा २जति ।

ऽ १
होवा२३हो२३४५इ । डा ॥ २६ ॥ २२४

यतः कारणात् "इन्द्रः" "विश्वस्य" भुवनस्य "राजति" ईश्वरो भवति, अतः कारणात् इन्द्रं प्राधान्येनाभिमुखीकृत्योच्यते-इति पूर्वेणान्वयः(१) ॥१०॥ २२४

इति श्रीसायणाचार्य्यविरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने चतुर्थस्याध्यायस्यैकादशः खण्डः ।

॥ इति द्वैपदमैन्द्रं समाप्तम् ॥

---

I,II वैराज द्वे ।

(१)-"इन्द्रः" परमेश्वरः "विश्वस्य" सर्वस्य "राजति" दीप्यते"-इत्येव वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



त्रिकद्रुकेषु मुख्याः स्यु॑र्दृश॑र्च्चाष्टिरादिमा।

जगत्ययंसहस्रेत्यथैन्द्रयाह्युपनस्तथा॥

अग्निंहोतारमित्येषा अस्तुश्रौषड्याह्वचा।

चतस्रोऽत्यष्टयोऽभित्यं तवत्यन्नर्यमित्यृचौ॥

इमे द्वे अतिशक्कर्यावष्टौ इत्येकऊचिरे।

प्रवोमहेऽतिजगती तमिन्द्रमिति तादृशी(क)॥

सौरी ह्ययंसहस्रेति पावमानी त्वयारुचा।

अस्तुश्रौषड्वैश्वदेवी मारुती तु प्रवोमहे॥

अभित्यमिति सावित्री स्यादाग्नेय्यग्निमित्यसौ।

ऐन्द्रोऽवशिष्टाद्रत्येवं छन्दोदैवतनिर्णयः(ख)॥

---

(क)—'त्रिकद्रुकेषु'-इति मुख्या प्रथमा यासु, तासु ऋक्षु, अत्र—आदिमा ऋक् 'त्रिकद्रुकेषु'-इति अष्टिः अष्टिच्छन्दस्का। 'अयंसहस्र'-इति द्वितीया ऋक् तु जगती। अथ अनन्तरम्; 'एन्द्रयाह्युपनः'-इति तृतीया ऋक् तथा 'अग्निंहोतारम्'-इति एषा नवमी ऋक्, 'अस्तुश्रौषट्' इति पञ्चमी ऋक्, 'अयारुचा'-इति सप्तमी ऋक्,-इति चतस्रः ऋचः अष्टयः अष्टिच्छन्दस्काः। 'अभित्यम्'-इति अष्टमी. 'तवत्यं नर्यम्'-इति दशमी च ऋचाविमे द्वे अतिशक्कर्यौ अतिशक्करीच्छन्दस्के; एके आचार्यास्तु अष्टौ अष्टिच्छन्दस्के एव इमे इत्यूचिरे। 'प्रवोमहे'-इति षष्ठी ऋक् अतिजगती अतिजगतीच्छन्दस्का; 'तमिन्द्रम्'-इति चतुर्थी ऋक् इयमपि तादृशी अतिजगत्येवेत्यर्थः।

(ख)—'अयंसहस्र'-इति द्वितीया ऋक्, सौरी सूर्य-देवताका। 'अयारुचा'-इति सप्तमी ऋक्, इयन्तु पावमानी पवमान-देवताका। "अस्तुश्रौषट्"-इति पञ्चमी ऋक्, वैश्वदेवी विश्वेदेवाः अस्याः देवताः। 'प्रवोमहे'-इति तु षष्ठी ऋक्, मारुती मरुतोऽस्याः देवताः। 'अभित्यम्'-इति अष्टमी ऋक्, सावित्री सवितृ-देवताका। 'अग्निम्'-इति नवमी ऋक्, असौ आग्नेयी अग्नि-देवताका। स्यादिति सर्व्वत्र सम्बध्यम्॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वादशखण्डे—

तत्र प्रथमा।

गृत्समद ऋषिः।

१ २ २ ३ १र २र ३ २
त्रिकद्रुकेषुमहिषोयवाशिरन्तुविशुष्म*

३ १र २र ३ १ २ २ १ २ ३ २
स्तृम्प†त्सोमममपिबद्विष्णुनासुतंयथावशम‡।

१ २ ३ २ ३ २ ३ १ २ ३ २ ३ १र
सईम्ममादमहिकर्मकर्त्तवेमहामुरुं

२र ३ २ ३ १र २र ३ १र १
सैनंसश्चद्देवोदेवंसत्यइन्दःसत्यमिन्द्रम¶ ॥१॥२२५

२ ३ ५ १ २ १ २ १ १२र ३ ५
I औयिचिक। द्रुकायि। षूर्महिषा। यवाशिरम्।

३ २ ३ ५ १ ३ ५ १र १ २
तुविशुष्मः। ओयितृम्पा२३४यात्। सोमाम्। अपिवा३

---

* "तुविशुष्म"-इति ऋग्वेदीय-स्वर-पाठः।

† "तृम्प"--इति ऋग्वेदीयः सायणीयोत्तरभाष्यधृतश्च।

‡ "यथावशत्"-इति ऋग्वेदीय-व चिह्नित-पाठः।

¶ "सत्यमिन्द्रं सत्यइन्दुः"--इति ऋग्वेदीयपाठः।

---

२२५ उत्तरार्चिकस्य ६,३,१८,१=ऋग्वेदस्य २,६,२८,१ =ऊह्ये २,२,१२—५,१,५—५,२,५।

I वाजजिन्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ १२८ १५ ३१८३५ २ ३ ५
द्वि। ष्णुनासुतम्। यथावशम्। ओयिसा२३४ई्म्।
१ २ १ २१ १२३५८ ३२८३ ५ २ ३
ममा। दा३महिक। मकत्तवे। महामुरुम्। ओयिसा
५ १ २८१८२८१ ४
२३४यिनाम्। सश्चात्। देवोदेवाम्। सत्यइन्दुःसत्याऽ-
५
पूमिन्द्राउ। वा॥ २७ ॥ २२५

"महिषः" महान्(१) पूज्यः "तुविशुष्मः" बहु-बलः(२) "तृम्पत्(३)" तृप्यन्निन्द्रः "त्रिकद्रुकेषु" ज्योतिर्गौरायुरित्येतन्नामकेषु अभिप्लविकेष्वहःसु(४) "सुतम्" अभिषुतं "यवाशिरं" यवमयैः सक्तुभिर्मिश्रितम् [आङ्-पूर्व्वस्य श्रीञ् धातोः क्विपि "आसृधेयामित्यादिना(५) श्रियः शिरइत्यादेशः] तं सोमं "विष्णुना" सह(६) "अपिबत्"। "यथावशं(७)" पूर्व्वं यथा तं सोम मकामयत तथा अपिबत् [वश कान्तौ (अ०, प०)। "बहुलं छन्दसीति (२,४,७३) शपोलुगभावः] "सः" पीतः सोमः "महाम्" महान्तम् "उरुम्"

---

(१)—"महिषः"-इति महन्नामसु अष्टमं नैघण्टुकम् (३,३)।

(२)—तुवीति बहु-नामसु द्वितीयं नैघण्टुकम् (२,१,)। शुष्ममिति बल-नामसु एकादशतमं नैघण्टुकम् (२,९)।

(३)—विकरण-व्यत्यये रूपम्। 'तृम्पत् तृप्तवान्'-इति वि०।

(४)—अष्टमन्तति पृष्ठास्थ-पञ्चमी टीप्पनी द्रष्टव्या (७८पृ० ५टी०)।

(५)—"अपस्पृधेथामानृचुरानृहुश्चिच्युषेतित्याजश्राताश्रितमाशीराशीर्त्ताः (६,१,३६)" -इति पा०।

(६)—विवरणे तु "विष्णुना" अध्वर्युणा अभिषुतमित्यन्वयः।

(७)—'यथावशं यथोत्साहम्'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

गौराङ्गिरसऋषिः ।

३२ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ ३ २ ३ १ २
अयꣳसहस्रमानवोदृशः कवीनाम्मतिर्ज्योतिर्विधर्म ।

३२ ३१ २ ३ २ ३ १ २ ३ २ ३ १ २ ३
ब्रध्नःसमीचीरुषसःसमैरयदरेपसःसचेतसः

१२ ३ १ २ ३ २
स्वसरेमन्युमन्तश्चितागोः ॥ २ ॥ २२६

विस्तीर्णम् "ईम्" एनम् "इन्द्रम्" "ममाद" अमादयत्(८)। किमर्थम्? "महि" महत् वृत्र-हननादि-लक्षणम् "कर्म्म" "कर्त्तवे" कर्त्तुम्(९)। "सत्यः" "इन्दुः"(१०) अभवत्। "देवः" दीप्यमानः "सः" सोमः "सत्यं" यथार्थभूतं "देवं" सोमं कामयमानम् "एनम्" "इन्द्रं" "सश्चत्" [ सश्चतिर्व्याप्ति-कर्मा(११) ] व्याप्नोतु ॥ १ ॥ २२५

---

(८)—"छन्दसि लिट् (३,२,१०५)"-इति भूतसामान्ये लिटि ममादेति भावः ।

(९)—"तुमर्थे सेऽसेन् सेन् क्से (३,४,९)"-इत्यादिना सिद्धम् ।

(१०)—इन्दुः सोमः ।

(११)—'उरुनाम दानवः; सः इन्द्रः, एनं दानवं सश्चत् । सश्चतिः हिंसार्थः, दानवं हिंसितवान् ।--अथवा सश्चतिः सेवार्थः सेवते'-इति वि० । निघण्टौ तु सश्चतिर्गतिकर्म्मसु दृश्यते (२,१४) न तु व्याप्ति-कर्म्मसु परं गतिरेव व्याप्तित्वेन पर्यवसतीत्यभिप्रायेणोक्तमित्यनुमीयते ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४ ५ ३२ ३ ५ २ १ १
I अय॒ंसद्धोहायि। स्वमानार३४वाः। दृशाःक-
२ १र र २ ३ ५ २१ २१ २र
वीनामतिज्र्यौ। तिर्विधार३४म्मा। अघ्नाःसमायि। ची-
१ २ २ १ २ ३२ १ २ ४
रूषसः। समायिराऽ१यार्त्। अरा३। हावा३। पा।
५ ४ ५र ३ २ १ २र २ १ २ ३२
सःसचे। तसा३ः। स्वासरे। मन्युमार३न्ताः। चिते।
३ ५र र ३ १११
यार३४औहोवा। गोर३४५ः॥ २८॥

५ र ५ २१ २र १ र
II अय॒ंसद्दस्वमानाईवाः। दृशाःकवीनाम्मतिज्र्यौ।
२ २१ २१ २र १२ २१ २
तिर्विधार३र्मा। अघ्नाःसमायिचीरूषसः। समायिराऽ१-
ऽ २ २र १२ १२र १ २र २
यार३त्। ओ३वा। अरेपसःसचेतसः। स्वासरे। म-
१ २ ऽ २ ३२ १ ३ ५र र
न्युमार३न्ताः। ओ३वा। चिता३। गोरेरा२३४औहो-
३ ११११
वा। वा२३४५॥ २९॥ २२६

---

I,II गोराङ्गिरसस्य सामनी द्वे।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"सहस्रमानवः" सहस्र-सङ्ख्याका मनुष्याः(१) यस्य सः, सहस्र-सङ्ख्याकैर्मनुष्यैरिवावस्थितै रश्मिभिर्युक्तः "दृशः" सर्वेषां दर्शनीयः(२) "कवीनां" मेधाविनां सर्वेषां "मतिः" स्तुत्यः मननीयोवा "विधर्म्म" विधातृ "ज्योतिः" तेजः "अयं" "ब्रध्नः" सूर्य्यः(३) "समीचीः" शुद्धाः निर्म्मलाः(४) "अरेपसः" तमः-पाप-रहिताः। "सचेतसः" समान-चित्ताः इमाः "उषसः" "समैरयत्" सम्यक् प्रेरयति। ततः "स्वसरे" [दिवसनामैतत् (नि, नै० १,९)] दिवसे "मन्युमन्तः" मन्युः प्रकाश(५)स्तद्वन्तः तेजस्विनश्चन्द्रमः-"प्रभृतयः" गोः आदित्यस्य तेजसा "चितः" अपचिताः भवन्त्विति विगत-तेजस्का भवन्तीत्यर्थः। ["आदित्योऽपि गौरुच्यते (२,६)" -इति निरुक्तम्॥ २॥ २२६

---

(१)—"मानवः" इति मनुष्यनामसु ऊनविंशं नैघण्टुकम् (२,३)।

(२)—'दृशः द्रष्टा'-इति वि०।

(३)—'ब्रध्नः महान् ब्रह्म सविता'-इति वि०। "ब्रध्नः"-इति निघण्टौ-अश्वनामसु (१,१४) महन्नामसु च (३,३) दृश्यते। 'ब्रध्नः' ब्रह्म, सविता वा महान् वा इत्यत्रैवोपरि-ष्टाद् (६,१,५,९) व्याख्यास्यते। 'ब्रध्नम् इन्द्रम्, आदित्यरूपिणावस्थितम्'-इति चोत्तरा-भाष्येऽनेनैवाचार्य्येण व्याख्यातम् (६,३, १२,१)।

(४)—'सम्यक् जाता' इति वि०।

(५)—'कान्ति कर्म्मसु इदस्य (नि०२,६) "मन्यते"-इत्यस्य रूपं मन्युरित्यभिप्रायः; मन्युमन्तः दीप्तिमन्तः, अथवा क्रोधो मन्युः तद्वन्तः,-इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

परुच्छेपऋषिः।

१ २ ३ १ २ ३ २ ३ १र २र ३ १ २ ३ १ २ ३
एन्द्र याह्युपनःपरावतोनायमच्छाविदथानीवसत्पति-

२ ३ १ २ ३ १ २
रस्ता*राजेवसत्पतिः।

३ १र ३ १ २ ३ २उ ३ २ ३ २ ३ २ ३ १ २ ३
हवामहेत्वाप्रयस्वन्तःसुतेष्वापुत्रासोनपितरंवाजसातये

१ २ ३ १ २
मꣳहिष्ठंवाजसातये ॥ ३ ॥२२७

४र ५ र ४ ५ ४ १ २ ५ १ र
I एन्द्रयाह्युपना:। पारा२वा२३४ता:। नायमच्छा।

२ र १ २ ५ १ २ २ १ २
विदथानायि। वासत्पा२३४तीः। अस्तारा३जे३। वास-

३ ५ ४ ५र र र ४ ५ ४ २ १ १ २
त्पा२३४तीः। हवामहेत्वाप्रयस्वन्ताः। सुतायिषू३वा।

२ १र र २ १ १ २ २ ५ १ २
पुत्रासोनापितरंवा। जासाता२३४यायि। मꣳहायिष्ठा

२ १ ४ २ ५
३०वा३। जार३सा३। ता३४५योऽ६हायि ॥ ३० ॥२२७

---

* "रस्तं"-इति ऋग्वेदीयः पाठः।

---

२२७ ऋग्वेदस्य २,१,१८,१।

I प्रयस्वत्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "इन्द्र!" "परावतः" दूरदेशात् स्वर्ग-लक्षणात्(१) "नः" अस्मान् "उपायाहि" अस्मत्समीपं प्रत्यागच्छ। तत्र दृष्टान्तः—"नायम्" अय न पुरोवर्त्ती अग्निः "अभिषुतः" सोमोवा [प्रस्तुतत्वान्निर्दिश्यते] सइव [यद्यपि पुरस्तादुपचारान्निषेधार्थीयो नकारः सर्व्वत्र, तथाप्यत्रौचित्येनोपमार्थीयो गृह्यते]। यद्वा। "परावतः न" दूरदेशादिव। [यद्यपि यज्ञे सर्व्वदा सन्निहितः, तथापि स्वर्गाख्याद् दूरदेशादिव। अस्मिन् पक्षे अयमिति विभक्ति-व्यत्ययः।] "अयम्" इमं देवयजनदेशं "अच्छ" अभि प्राप्तुम्(२) आयाहीति शेषः(३)। तत्र दृष्टान्तः—"सत्पतिं" सतां सर्व्वदा वर्त्तमानानामृत्विजाम्पालको यजमानइव ["पत्यावैश्वर्य्ये(६,२,-१८)"-इति पूर्व्वपदप्रकृतिस्वरत्वम्] त्वमपि यज्ञ-गृहाण्यागच्छ। यद्वा। सतां नक्षत्राणाम्पतिः चन्द्रमाः, स यथा स्व-धाम स्थान-मागच्छति तद्वत्। "अस्ता" [अस्तं सुपआकारः (७,१,३९) अतएव बह्वृचा अस्तं राजेत्यामनन्ति] अस्तं गृहं(५) "राजेव" राजा यथा आगच्छति तद्वत्। किञ्च। "प्रयस्वन्तः" हविर्लक्षणान्नवन्तः यजमाना वयं "त्वा" त्वां "सुतेषु" अभिषुतेषु सोमेषु "आहवामहे" आभिमुख्येनाह्वयामहे। आह्वाने दृष्टान्तः—

(१)—'परावतः'-इति दूर-नामस्वन्तिमं नैघण्टुकम् (३,२६)।

(२)—"अच्छाभेराप्तुमिति शाकपूणिः" इति (नि०५,२८)।

(३)—'अच्छ आप्तुं' विद्यानि व्याप्नोति यज्ञ-कर्म्माणि'-इति वि०।

(४)—'सुपांसुलुगित्यनेति (नै०,७,३९) भावः।

(५)—'अस्तम्'-इति गृह नामसु पञ्चमं नैघण्टुकम् (३,४)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

रेभाऋषिः।

१र २र ३ १ २ ३ २
तमिन्द्रञ्जोहवीमिमघवानमुग्रꣳ
३ १र २र ३ १ २ ३ १ २ ३ १ २
सत्रादधानमप्रतिष्कतꣳश्रवाꣳसि भूरि।
१ २ ३ १र २र३ १ २ ३ २
मꣳहिष्ठोगीर्भिराचयज्ञियाववर्त्तंराये*
३ १ २३ १ २ ३ २
नोविश्वासुपथाकृणोतुवज्री॥ ४ ॥ २२८

४ ५ र ४५र४ २ ५ २
I तमिन्द्रञ्जोहवीमिमघवानाम्। ऊ२३४ग्राम्। स-

"पुत्रासः" पुत्राः "पितरं न" पालकं जनकमिव तं यथा "वाज सातये" सङ्ग्राम-प्राप्तये तज्जयाय हविःस्वीकरणाय वा(६) आह्वयामः॥ ३ ॥२२७

* "ववर्त्तद्राये"-इति ऋग्वेदीयः पाठः।

२२८ ऋग्वेदस्य ६,६,२८,२।

I अच्चर्यम्।

(६)—'वाजः'-इति अन्न-नामसु द्वितीयं नैघण्टुकम् (२,७)—'वाजे' इति सङ्ग्राम-नामसु च द्वाचत्वारिंशत्तमं नैघण्टुकम (२,१७)। सातिश्च लाभः। तथाच अन्नस्य लाभाय, सङ्ग्रामस्य वा लाभायेति वा इत्यर्थः फलितः। 'वाजसातिः'—इति समुदितपदमपि सङ्ग्रामार्थो दृश्यते निघण्टौ तत्रैव।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र १र ३ ५ १ २
व्राह्वोयि। दधानमप्रतारयिष्कूर२३४ताम्। श्रवा२३७सायि।

३ ५ १ र र ७ ३ ५ २र
भूर२३४री। म७ह्विष्ठोगीभिंरा। चया२ज्ञार२३४याः। वा

१ २र१र २र र ३ ५ ३ २
वार्त्ता२। रायेह्वोयि। नोविश्वासुपा२३४र्था। कृणो३।

१ ३ ५र र ३ ५
तूरवार२३४औह्वोवा। ऊर२३४पा॥ ३१॥२२८

"तम्" पूर्वोक्तगुणोपेतम् "इन्द्र" "जोहवीमि" यष्टाहं पुनः पुनराह्वयामि [ह्वयतेरभ्यस्तस्य चेति सम्प्रसारणम्] कीदृशं? "मघवानं" मंहनीय-धनवन्तम्(१) "उग्रम्" उद्गूर्ण-बलं "सत्रा" सत्यं(२) यथार्थमेव "श्रवांसि" बलानि(३, "भूरि" भूरीणि "दधानम्" अतएव "अप्रतिष्कुतं" शत्रुभिरप्रतिरोधनीयम् आह्वयामि। किञ्च "मंहिष्ठः" पूज्यतमो दातृतमो वा "यज्ञियः" यज्ञार्हः इन्द्रः "गीर्भिः" अस्मदीयाभिः स्तुतिभिः "आ ववर्त्त" यज्ञेष्वाभिमुख्येन वर्त्तते [वर्त्ततेर्लिटि(४) रूपम्] ततो "वज्री" वज्रवन् इन्द्रः "राये" धनार्थं "विश्वा" सर्वाण्येव "सुपथा" सुमार्गाणि "कृणोतु" करोतु। धनं सर्वदिग्जमस्मान् प्राप्नोत्वित्यर्थः ॥४॥२२८

---

(१)—'मघमिति धन-नामधेयम्, मंहते दानकर्मणः' इति नि० १,७।

(२)—'सत्रा'-इति सत्य-नामसु तृतीयं नैघण्टुकम् (३,१०)।

(३)—'श्रवांसि यशांसि अन्नानि'-इति वि०।

(४)—'छन्दसि लुङ् लङ् लिटः'-इति पा० ३,४,६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी ।

पुरुच्छेप ऋषिः ।

२ ३ १ २ ३ २ ३ २ ३ १ २ ३ १र २र ३ १
अस्तुश्रौषट्पुरो अग्निंधियादधआनुत्यच्छर्द्धो*दिव्यं

२ ३ १ २
वृणीमहइन्द्रवायूवृणीमहे ।

१ २ ३ २ ३ १ २ ३ १ २ ३२ ३ १ २
यद्धक्राणाविवस्वते†नाभासंन्दायनव्यसे‡ ।

२ ३ २ ३१र २र ३ १ २ ३ २उ ३ २ ३ १ २
अधप्रनूनमुपयन्ति¶धीतयोदेवाँ अच्छा§यनधीतयः॥५॥२२९

५ र २१र २१र २र १ २
I अस्तुश्रौषाट् । पुरोअग्निंधियादधे । हा । औ३हो

५ १र २र ५ ७ २ ३
२३४वा । आनुत्यच्छर्द्धोदि । व्याम् । वृणा२३हायि । मा-

---

* "तच्छर्धो"-इति,
† "विवस्वति"-इति,
‡ "सन्दायिनव्यसे"-इति,
¶ "प्रसूनउपयन्तु"-इति च
} ऋग्वेदीयपाठाः ।

§ "अच्छ"-इति जर्मन्मुद्रित-पाठः ।

---

२२९ ऋग्वेदस्य २,२,३,१ ।

I याज्ञतुरम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ १ २ २ १ ३ ५ १
२३४हे । इन्द्रावा३यू३ । वृणी२मा२३४हायि । यद्वक्रा-

२ २ २ २ २र१र र २ ४ ५
णाविवाऽ१स्वा३तायि । नाभासन्दायना३ । व्यासायि ।

१ र २ र१ १ २
अधप्रनूनमुपया । तिधीतायार३ः । हा । औ३हो२३४-

५ १ २ १ २ ५
वा । दायिवा॰ऽ१अच्छार३ । हा । औ३हो२३४वा ।

२ १ ५ ४ ५
नधो२३४वा । ताऽ५योऽ६हायि ॥ २२ ॥२२९

अहं "पुरः" पुरतः उत्तरवेद्याम् "अग्निम्" आहवनीया-ख्यं(१) "धिया" प्रणयनादि कर्मणा(२) दधे" धारितवानस्मि । "त्यत्" तत् "शर्द्धः" तादृशं बलं(३) बलवन्तं वाऽग्निम् । यद्वा ।

---

(१)—अयमत्र विवेकः—ऋत्विक्शालातः पश्चिम-विभागीय-'प्राचीनवंश'-नाम-यज्ञीय-वेद्याः दक्षिणस्यां दिशि धनुषाकारो योऽग्निकुण्डः तत्र स्थितोऽग्निर्दक्षिणाग्निरुच्यते, उत्तरस्यां कुण्डो न विद्यते ; पश्चिमस्यां वृत्ताकारः कुण्डो भवति, तत्र योऽग्निः स.गार्हपत्य इत्युच्यते ; पूर्व्वस्यां चतुष्कोण-कुण्डः, तत्र योऽग्निः सएव आहवनीय इत्युच्यते । अस्ति चापरा वेदी ऋत्विक्शालातः पूर्व्वस्यां दिशि उत्तरवेदी = परवेदी = द्वितीयवेदीत्यर्थः । तस्या एव मध्य-भूमिर्नाभिरित्युच्यते. तत्राध्वर्यु-प्रतिहारिणोः कार्य्य-कलापाः, न तु होतुर्होम-सम्बन्धोऽग्नि-सम्बन्धो वा । तदेवं 'पुरः' पश्चिमवेदीतः पुरस्तात्, 'उत्तरवेद्यां' अव्यवहित-पर-कुण्डे चतुष्कोणात्मके अग्निम् आहवनीयाख्यमित्यर्थः ।

(२)—'धीः' इति कर्म-नामसु एकविंशतितमं नैघण्टुकम् (२,१) । 'धिया बुध्या' -इति वि० ।

(३)—'शर्द्धः'-इति बल-नामसु सप्तमं नैघण्टुकम् (२,९) ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तच्छर्दः साहश्यं मरुतां सङ्घरूपं बलं "दिव्यं" दिविभवं "नु" चिप्रम् "आ वृणीमहे" आभिमुख्येन सम्भजामहे किञ्च "इन्द्र-वायू" "वृणीमहे" "प्रार्थयामहे। "यद्" [सुपोलुक् (७,१,३९)] यः "विवस्वते" विवो हवीरूपं धनं तद्वते(४)। "नव्यसे" नवतराय यजमानाय "नाभा" नाभौ भूम्यानाभिस्थाने देवयजने। यद्वा। वेदिरूपे(५)। अथवा नाभौ सर्वस्य फलस्य सम्बन्धके यज्ञे ["यज्ञ-माहुर्भुवनस्य नाभिः" इतिश्रुतेः] "सन्दाय" सम्यक् बध्वा मिथः संयुज्य "क्राणा"(६) धनादिकं कुर्वाणौ भवतः। तौ वृणीमहे इति समन्वयः। यस्मादेवं तस्मात् "अस्तु" "श्रौषट्"(७) अस्याः; स्तुतेः श्रवणं भवतु। [श्रोता भवतु वा मरुतां गणोऽग्निर्वा; इन्द्रवायु पक्षे प्रत्येकापेक्षयैकवचनम्] "अध" अनन्तरं "नः" "धीतयः" अस्मदीयानि कर्माणि स्तुत्यादि-रूपाणि(८) "प्रनूनम्" "उपयन्ति" प्रकर्षेण युष्मानुपेत्य गच्छन्ति। किञ्च, "देवानच्छान"

(४)—'विवस्वते विवासनवते'-इति वि०। विवस्वन्त इति निघण्टौ मनुष्य-नामसु च दृश्यते (२,३)।

(५)—उत्तरवेदी-नामक-वेद्याः मध्ये भू-भागे इत्यर्थः।

(६)—"क्राणाः कुर्वाणाः"-इति नि ४,१९।

(७)—'आश्रावयेति चतुरक्षरम्, अस्तु श्रौषडिति चतुरक्षरम्, यजेति द्व्यक्षरम् येयजामहइति पञ्चाक्षरम्, द्व्यक्षरो वषट्कारः, एष वै सप्तदशाक्षरश्छन्दस्यः'-इति सि० कौ० वै० ४, ४, १४०।

(८)—"धीतयः'-इति निघण्टौ अङ्गुलि-नामसु दृश्यते (२,५)। "अङ्गुलयः कस्मात्? अग्रगामिन्यो भवन्तीति वाग्रकारिण्यो भवन्तीति वाग्रसारिण्यो भवन्तीति वाङ्कना भवन्तीति वाञ्चना भवन्तीति वापि वाभ्यञ्चनादेव स्युः"-इति नि० ३, ८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

एवयामरुदृषिः।

१२ ३२ ३१२ ३ १ २ ३१२
प्रवोमहेमतयोयन्तुविष्णवेमरुत्वते
३ १ २३१२
गिरिजाएवयामरुत्।
१र २र ३ १र२र ३ १२३१२ २ २ ३
प्रशर्द्धायप्रयज्यवे*सुखादयेतवसेभन्ददिष्टये-
१ २ ३१२
धुनिव्रतायशवसे॥ ६॥ २३०

१ ४र ५ ४र ५ ४ ५र ४ ५ ४ ४
I प्रा२३४। वोमहेमतयोयन्तुविष्णवो। हायि।
२ १ २ ३र २र १
मरुत्वता३यि। गिरिजा३४ः। हाहोयि। एवाया२।

अग्न्यादि-देवान् आभिमुख्येन पातुमिव "धीतयः" अस्मदीयानि कर्माणि "उपयन्ति" तेषां समीपं प्रापयन्ति।

"आनुत्यत्", "आनुतद्"-इति—"नव्यसे", "नवसि"-इति, "प्रनूनं" "प्रसूनम्"-इति च क्रमेण साम्नामृचश्च पाठः॥ ५॥ २२९

---

* "प्रयज्यवे"-इति ऋग्वेदीय-स्वर-पाठः।

---

२३० ऋग्वेदस्य ४,४,३३,१।

I एवयामरुतः सामः।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ १ ७ १ ७ १ २ २
मा२३४हुत । प्रागुर्द्वीया२ । प्रायज्जपावा२३यि । स्वखादा

५ १ २र १ २र १ २ २ १ ५
२३४यायि । तवसेभन्दद्दिष्टये । धुनायिव्राइताइ । या२-

२ र २र र २ ५
शा२३४औहोवा । वा२३४से ॥ २३ ॥२३०

"प्रयन्तु" प्रगच्छन्तु" "गिरिजाः" गिरौ वाचि(१) निष्पन्नाः "मतयः" स्तुतयः। "महे" महते "वः" तुभ्यं [वचन-व्यत्ययः (३,१,८५)] "विष्णवे" व्याप्नायाम्(२) इन्द्राय विष्णवे वा(३) "मरुत्वते" मरुद्भिस्तद्वते। कस्य स्तुतयः? इत्युच्यते—"एवया-मरुत्" एतन्नामकस्य ऋषेः [षष्ठ्यालुक् (७,१,३९) अथवाऽयमृषिः गिरिजाः स्तुतेर्जनयिता भवति]। किञ्च, "प्रयन्तु" स्तुतयः। कस्मै? "शर्द्धाय" बलाय मारुताय (इतरत्सर्वं बल-विशेषणम्) "प्रयज्यवे" प्रकर्षेण यष्टव्याय। "सुखादये" शोभनाभरणाय(४)

---

(१)—"गीः"-इति निघण्टौ वाङ्नामसु (१,११) दृश्यते; तस्य सप्तम्यां "गिरि"-इत्येव मन्तव्यम् न तु गिराविति, तदन्यपाठोलिपिकरप्रमादइव लक्ष्यते। विवरणकृता तु 'गिरिजा—हृदये जाता, यज्ञजाता वा'-इत्युक्तम्।

(२)—"अथ यद् विषितो भवति तद् विष्णुर्भवति। विष्णुर्विषतेर्वा व्यश्नोतेर्वा"-इत्यादि नि० १२,१८। विष्लृ व्याप्तावित्यस्येदं पदं विष्णुरिति, अत उच्यते—विष्णवे व्याप्तायेति।

(३)—विष्णु-नामकेन्द्राय-इति वेत्यर्थः; इन्द्रः विष्णुरिति पर्यायेति भावः। इह च मानं निघण्टौ विष्णुपुराणादौ च द्वादशादित्येषु उभयोरेव परिगणनम्।

(४)—'सुखादये सुखदाय सुखप्रदाय'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

आनानतः पारुच्छेपिरृषिः।

३ २ ३ १र २र ३ २उ ३ २ २
अयारुचाहरिण्यापुनानोविश्वाद्वेषा॒ꣳसि
३ १ २ ३ २ ३ २ ३ १ २
तरतिसयुग्वभिः*सूरोनसयुग्वभिः।
१ २ ३ १ २ ३ १ २ ३ १र २र
धारापृष्ठस्य†रोचतेपुनानोअरुषोहरिः।
३ २ ३ १ २ ३ १र २र ३ १ २ ३ १ २
विश्वायद्रूपापरियास्यृक्व‡भिःसप्तास्येभिर्ऋक्वभिः॥६॥२३१

[खादिराभरण-विशेषः। "हस्तेषु खादिश्च कृतश्च सन्दधे"-इति, "अंसेषु च ऋषयः पत्सु खादयः"-इति च श्रुतेः]। "तवसे" बलवते। "मन्दद्दिष्टये" स्तुतिरूपा(५) इष्टिर्यस्य तत् मन्दद्दिष्टिः, तस्मै। "धुनिव्रताय" मेघानां चालनं कर्म्म यस्य, तादृशाय(६) "शवसे" गमनवते॥ ६॥ २३०

---

* "स्वयुग्वभिः"-इति,
† "सुतस्य"-इति,
‡ "यात्यृक्व"-इति च,
} ऋग्वेदीय-पाठाः।

---

२३१ उत्तरार्च्चिकस्य ७,३,१०,१ = ऋग्वेदस्य ७,५,२४,१ आरण्यके २,२०—६,२ ऊहे १०,२,३ = ऊह्ये ३,१२।

(५)—"मन्दते"-इत्यस्य निघण्टौ स्तुतिकर्म्मसु (३,१४) दर्शनादित्यभिप्रायः।
(६)—'कल्पितकर्मायम्'-इति वि०। "धुनि * * मेघम्"-इति नि० दै० ४,१२



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ १ १ २ २४ ५ १ र र
I आया। रुचा। हरि। ण्यापुनाना:। विश्वाद्दे

र ४ २ ३ ५ २र१ २ १ ३
षा२ॅसितरती२३सा३युग्वभि:। ह्वरो२३ना३। सा२यू२३

५र र ३ ५
४औहोवा। ग्वा२३४भोः॥ ३४॥

५ र ३ २र ३ ४ ५र २र १ १र २
II अयारुचाहरिण्या। पुनान:। विश्वाद्वा२३यिषा।

१ २र र २ २ १ ३ ५
सायितर। सौहो। वा३हा३यि। सायूरग्वा२३४भी:।

२र१ २ ३ २ ४
सूरा२३ना। सयू३ग्वा५भा६५६यि:॥ ३५॥

४ ३र४ ३र ४ ५र १ ४र र ५ र ४ ५
III अयारुचाहरिण्या। पू३४। नानोविश्वाद्दे षा।

१ २ १ ७ १ २ १
सायितरति। सायुग्वाभी २:। ह्वरोना३। सायू२-

३ ५ ४र ५र ४ १ १ २ १
ग्वा२३४भी:। धारापृष्ठा। स्यारो २चतायि। पुना-

२ १ २ ३ ५ ४ ५र ४ १ २ र
नो३आ३। रूषोहा२३४री:। विश्वायद्रू। पापरिया।

---

I,II,III विषमाणानि त्रीणि।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ ७　　　　१ २ २ १　　४　　२
साक्वाभी२ः । सप्तासी३ये । भा२३यिरा३ । क्वा ३४५

५
भोईहायि ॥ ३६ ॥ २३१

"पुनानः" पूयमानः सोमः "हरिण्या" हरितवर्णया "अया" अनया "रुचा" रोचमानया धारया "विश्वा" सर्वाणि" "द्वेषांसि" द्वेष्टृणि रक्षांसि "तरति" विनाशयति । तत्र दृष्टान्तः— "सूरीन" यथा सूर्यः "सयुग्वभिः" सह युक्तैरश्मिभिः तमांसि हिनस्ति तद्वत् (सयुग्वभिरिति द्विरुक्तिरादरार्था) । यद्वा । धारया युक्तः सोमो युक्तैस्तेजोभिः सह रक्षांसि तरति । तस्य "पृष्ठस्य" (पृष्ठ इति धारक उच्यते) जगतो धारकस्य सोमस्य पतन्ती धारा "रोचते" दीप्यते । "पुनानः" पूयमानः "हरिः" हरितवर्णः सोमः "अरुषः" आरोचमानो भवति(१) । "यद्" यः सोमः "सप्तास्येभिः" रसाहरणशीलास्यैः(२) "ऋक्वभिः"

---

(१)—"अरुषम्"-इति रूप-नामसु पञ्चदशं नैघण्टुकम् (३,७)। "अरुषः"-इति अश्व-नामसु च दृश्यते (नि० १,१४,१७) ।

(२)—"सप्तैतानादित्यरश्मीनयमादित्यो गिरति"-इत्यादि नि० २,२१ । 'सप्तच्छन्दांसि आस्यभूतानि येषामृत्विजां ते सप्तास्याः तैः सप्तास्येभिः । अथवा सप्त वषट्कारिणो होतारः सप्तास्यानि सप्त सोमसंस्थाः सप्तास्यानि ताभिः'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

नकुलऋषिः।

१ २उ ३ २ ३ १ २ ३क २र ३ १ २ ३
अभित्यन्देवꣳसवितारमोण्योःकविक्रतु

१ २ ३ १ २ ३ २ २ २ ३ २ ३ १
मर्चामिसत्यसवꣳरत्नधामभिप्रियम्मतिम्*।

३ १२उ ३ २ ३ १र २र ३ १ २ ३
उर्द्ध्वायस्यामतिर्भाअदिद्युतत्सवीमनि

१ २ ३ १ २ ३ १ २
हिरण्यपाणिरमिमीतसुक्रतुःकृपास्वः॥ ८ ॥२३२

५ ४ र५र ४ ५ ४८ ५ ५र ४र ५ १र
I अभित्यन्देवꣳसवितारम्। औहोहोवाहायि। ओणा

५ २ १ ५ २ १ ३ ५
२३४योः। कविक्रा२३४तम्। आर्चामौ२३४सा। त्वा-

स्तिमद्भिः, ऋक्कभिस्तेजोभिः(३) "विश्वा" विश्वानि सर्वाणि "रूपाणि" "परियाति" परितोव्याप्नोति(४)।

"पृष्ठस्य"—"सुतस्य"-इति साम्न ऋचः पाठो॥ ७ ॥२३१

---

* "मतिंकविम्"-इति यजुः-प्रातिशाख्य-पाठः।

---

२३२ यजुर्वेदस्य ४,२५=अथर्ववेदस्य ११,४,२।

I सवितुः साम।

(३)—'ऋक्कभिः ऋत्विग्भिः'-इति वि०। "ऋचा"-इति स्तोत्र-नामसु च दृश्यते (नि० ३, २४, ५)।

(४)—यद्यपि यातिः प्रकृतितोगत्यर्थः, परं परिसाहचर्य्यात् परितो गमनं कथयति सुतरामिह व्याप्त्यर्थः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ ५ २ १र ५ २ १ ५
सावार२३४९रा। त्वधामार२३४मी। प्रियम्मा२३४तीम्।

२र१र२र १ ५ २ १ ३ ५ २ ३
औहोऔहोवार२३४हाउ। ऊर्ध्वाया२३४स्य। आमातीर-

५ २ १ ५ २१र ५ २र१र२र १
३४र्भाः। अदिद्यू४तात्। सवीमा२३४नी। औहोऔहो

५ २ २ ५ २ ३ ५
वार३४५हाउ। हाइरण्या२३४या। णीरामीर२३४मी।

२ १ ५ २र १र १र १ १ १ १ १ ५ २
तस्रुक्रा२३४तूः। औहोऔहोवार३४५हाउ। वा। एत।

२ १र १ ३ १ १
कृपास्रुवा२३४५ः॥ २७॥ २३२

"सवितारं" प्रेरकं(१) "देवं" वाग्व्यापारेण "अभि अर्चामि"

---

(१)—"सविता सर्वस्य प्रसविता" इति नि० १०, ३१। "तस्य कालो यदा द्यौर-पहततमस्काकीर्णरश्मिर्भवति"-इति नि० दै० ६, ११।

"सवि॒ता य॒न्त्रैः पृ॑थि॒वीम॑रम्णा
दस्क॒म्भने॑ सवि॒ता द्याम॑दृंहत्।
अश्व॑मिवाधुक्ष॒द्धुनि॑म॒न्तरि॑क्ष
म॒तूर्त्ते॑ ब॒द्धं स॑वि॒ता स॑मु॒द्रम्॥"

-इति ऋग्वेदीयदशममण्डलैकादशस्यैकविंशे प्रथमा। अस्येदं यास्क-कृतं व्याख्या-नम्—"सविता यन्त्रैः पृथिवीमरमयदनारम्भणेऽन्तरिक्षे, सविता द्या मदृंहदश्व-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सर्वतः पूजयामि। कीदृशं? "कविक्रतु" क्रान्त-प्रज्ञं(२) "सत्य-सवं" अवितथ-प्रेरणम्। "रत्नधां" रमणीयानां धनानां दातारम्(३)। "अभिप्रियं" सर्वतः प्रीति-युक्तम्। "मतिं" मननीयं स्तुत्यम् "यस्य" सवितुः "भा" दीप्तिः "ऊर्ध्वा" उन्नता सती "ओण्योः" द्यावापृथिव्योः(४)। "अदिद्युतत्" अतिशयेन दीप्यते। यस्य सवितुः "सवीमनि" प्रसवे सति(५) "अमतिः" सर्वेषां कान्तिः(६) अदिद्युतत् भृशं प्रकाशते। सः "सुक्रतुः" शोभनकर्मा "हिरण्यपाणिः" हिरण्य-हस्तः सविता देवः "कृपा(७)" कृपया "स्वः" स्वर्गे निमित्तभूते सति "अमिमीत" "इमं" सोमम् इयत्तया मितवान्। यद्वा। स्वः सर्वस्या कृपया सङ्कल्पेन निरमिमीत॥ ८ ॥९३२

---

मिवाघुच्चइनिमन्तरिचे मेघं बद्धमतूर्त्तं बद्धमतूर्णं इति वा त्वरमाणइति वा सविता समुदितारमिति। कमन्यं मध्यमादेवमवचत। आदित्योऽपि सवितोच्यते"-इत्यादि।

(२)—"कविः क्रान्तदर्शनोभवति कवते वा"-इति नि० १२,१३। कविरिति निघण्टौ मेधाविनामसु च दशमं पदम् (३,१५) क्रतुरिति कर्मनाम (नै०२,१) प्रज्ञानाम च (नै०३,९)। अतएव 'मेधावि-कर्माणम्'-इति वि०।

(३)—"रत्नधातमं रमणीयानां धनानां दातृतमम्"-इति ऋग्वेदीय-प्रथमर्ग् व्याख्याने यास्कः दै०१,१५।

(४)—"क्षोण्यौ"-इति द्यावापृथिवीनामसु पञ्चदशं नैघण्टुकम् ३,३०।

(५)—"सवीमनि प्रसवे"-इति नि०६,७।

(६)—"अमतिरमामयी मतिरात्ममयी"-इत्यादि नि० ६,१२। विवरणेऽप्येवमेव।

(७)—ततीयाविभक्तेर्लुकि (७,१,३९) रूपमिदं कृपेति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

परुच्छेपऋषिः।

३ १र २र ३ १ २ ३ १ २ ३ १र
अग्निं होतारं मन्ये दास्वन्तं वसोः*सूनुं

२र ३ १ २ ३ २ ३ २ ३ १ २
सहसो जातवेदसं विप्रं न जातवेदसम्।

३ १ २ ३ २ ३ २ ३ १ २ ३ १
य ऊर्ध्वया स्वध्वरो देवो देवाच्या कृपा।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
घृतस्य विभ्राष्टिमनु शुक्रशोचिष आजुह्वानस्य† सर्पिषः॥९॥२३३

५ र २ ५र १ २ २ २
I अग्निं होता। रम्मन्ये२दास्वन्तम्। औ३वा३।

१ २ २ ५ २ र ५ १ २ २
वासो:सू२३४नूम्। सहसोजा३तावे५१दासा२म्। विप्र-

र २ १ ३ ५ २ १ २
न्नजा। औ३वा। तवे२दा२३४साम्। यऊर्ध्वा५१या२।

२ १ २ २र र र र २ २ १ ३ ५
सुवाध्वा५१रा५२:। देवोदेवा। ऊ३वा३। चिया२कापा।

---

* "वसुं"-इति, † "मनुवष्टिशोचिषाजुह्वानस्य"-इति च ऋग्वेदीय-पाठः।

---

२३३ उत्तरार्चिकस्य ९,१,१८,१=ऋग्वेदस्य २,१,१२,१ =यजुर्वेदस्य १५,४७=जप्ये ६,२,४।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४ २ १ ३र १ २ २ २
घृतोवा । स्यविभ्रा२ष्टिम् । अनुष्वक्रशा । औ३वाचियः ।
१र २ ३ २ २ १ ३ ५र र
आजू२३ह्वाना । स्यसा । औ३वा३ । पा२यिषा२३४औहो-
३ ५
वा । ऊ२३४पा ॥ ३८ ॥

४ ३ र ४र ५ र १ ४ ५ ४ ५र र ४
II अग्निᳫंहोतारम्मन्ये । दा२३४ । स्वन्तंवसोःसूनुम् ।
२ र ऽर १ २ २ ऽ र २
सहसोजा३तावे ऽ१दासा २म् । विप्रन्नजा३तावे ऽ१दासा २
२ र ऽर १ ७ २र र र ऽर १ २
म् । यऊर्ध्वं या३स्वध्वरा २ः । देवोदेवा३चाया ऽ१क्रुपा २ ।
२ १ २ १ रर १ २ १ २ १र २
घृतास्यविभ्राष्टिमनुष्वु । क्रशो ऽ१चिषा २ः । आजूह्वा३
१ १ ४ १ ५
ना३ । स्या२३सा३ । पा३४५यिषोई्हायि ॥ ३९ ॥

३ २ १ ५ २ १ ३ २ ३ ४ ५
III अहावोहा२३४वाः । ३ । अग्निष्टपती । प्रतिदहती ।
२ १ २र ४ २र ३ ५ २ १ २र
अग्निᳫंहो । तारम्मा३न्य३दास्वन्तम् । वसोः । सूनुᳫं
३ र ४ २र ३ ५ २ १ ३ ४ २र ३ ५
सह सो जा३ता३ वेदसम् । विप्राम् । नजा३ता३ वेदसम् ।

---

I,II भारद्वाजे द्वे । III अवभृथं साम ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ १ ४ ० २ ५ २र १ २र ४ २र ३ ५ र
य ऊर्ध्वया३इ्ह३वध्वरः। देवो। देवा३ची३या कृपा।

२ १ २ र ४ २र ३ ५ २र १ २र
घृता। स्यविभ्राष्टि मनुशू३क्रा३शोचिषः। आजू। ह्वाना३

४ २ ३ ५ ३ २ १ ५ १ १
स्या३सर्पिषः। अह्वावोह्वा२३४ वाः। ३। अग्निष्टपती।

१ १ ८ ४ २ १ २ १ २
प्रतिदह्वाऽ५ूता६५ू६यि। ए३। विश्व॑समत्रिणं दह्व। २।

२ १ २ १ १ २ १११
ए३। विश्व॑समत्रिणं दह्वा२३४५ ॥४०॥

२ ३ २ ३ ४ ५ १ २ २ १
IV त्यग्नायिः। प्रतिदह्वती। ह्वउह्वो२५ह्वाउ। अग्नि॑

२र ४ २र ३ ५ २ १ २र र
ह्वो। तारम्मा३न्ये३दास्वन्तम्। वसोः। ह्वनु॑सहसोजा३

४ २र ३ २ १ २ ४ २र ३ ५ २ १ २
ता३वेदसम्। विप्राम्। नजा३ता३वेदसम्। यऊ। ध्वया

४ २ ४ ५ २र १ २र ४ २र ३ ५ २ १ २
३ह्व३वध्वरः। देवो। देवा३ची३याकृपा। घृता। स्यवि-

र ४ २र ४ ५ २र १ २र ४ २ ३ ५
भ्राष्टिमनुशू३क्रा३शोचिषः। आजू। ह्वाना३स्या३सर्पिषः।

२ २ १ ३ ४ ५ १ ५ २
त्यग्नायिः। प्रतिदह्वती। ह्वाउह्वोऽ५ह्वाउ। वा। ए३।

---

IV प्रवर्ग्यं साम।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २ २ १ २ १ २ २
विश्वꣳ समत्रिणन्दह। ए३। विश्वꣳव्यत्रिणन्दह। ए३।
१ २ १ २ ३ १ १ १ १
विश्वं न्यत्रिन्दहा २३४५॥ ४१॥ २३३

"अग्नि" सर्वासां देवसेनानामग्रण्यम् यज्ञेष्वग्रं नीयमानं वा(१)। "होतारं"(२) अस्मद्यागं प्रति देवानामाह्वातारम्। यद्वा। होम-निष्पादकं(३) होतारं ["जुहोतेर्होतेत्यौर्णवाभः (७,१५)-इति यास्क-वचनात्। "अग्निमद्य होतारमवृणीतेति श्रुतेः। "अग्निमग्न आवहेति च अग्ने राह्वातृत्वं प्रसिद्धम्। अग्निं होतारं मन्ये इत्येवं प्रतिविशेषणं मन्ये इति सम्बन्धः। यद्वा याग-निष्पत्तेरेवोपलक्षितत्वादेतदेव विधेय-विशेषणम्। इतराणि वक्ष्यमाण-विशेषणानि स्तुति-पराणि] "दास्वन्तम्" अतिशयेन दानवन्तं(४) "वसोः" प्रशस्यस्य(५) सर्वेषां "सहसः सूनुम्" बलस्य

---

(१)—"अग्निः कस्मात्? अग्रणीर्भवति अग्रं यज्ञेषु प्रणीयते"-इति नि०६,१४।

(२)—सम्प्रसारणं बाहुलकात् (६,१,३४)।

(३)—होमनिष्पादकत्वरूपकर्त्तृत्वसत्त्वे वाग्नेरपि अन्यथानुपपत्तेः अतएव महाभाष्ये 'काष्ठः पचति'-इत्याद्युदाहृतमिति दिक्।

(४)—दानकर्मसु दासतेर्दर्शनात् (नै०३,२०,२)।

(५)—'वसोः धनस्य दास्वन्तम्'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पुत्रमग्निं(६) [मन्थन-काले बलेन मथ्यमान उत्पद्यत इति तत्-पुत्रत्वमुपचर्य्यते "जातवेदसं" जातानां वेदितारं जातप्रज्ञं जात-धनं वा [जातवेदः शब्दो यास्केन बहुधा निरुक्तः(७)] अग्नेर्जात-वेदस्त्वे दृष्टान्तः—"विप्रं न" जातवेदसञ्जातविद्यं मेधाविनं ब्राह्मणमिव, तं यथा बहु मन्यते तथा त्वामपि स्तौमीत्यर्थः। उक्त-गुण-विशिष्टो यो देवः "स्वध्वरः" शोभन-यज्ञवान् यज्ञं सम्यक् निर्वहन्। "ऊर्ध्वया" उन्नतया उत्कृष्टया "देवाच्या" देवान् पूजयन्त्या देवान् प्रत्युक्तया वा "कृपा"(८) कृपया सामर्थ्य-लक्षणया ["देवान् प्रत्युक्तया कृपेति(६,८) यास्कः] तेभ्यो हविर्वहन-बुध्या युक्तः सन् "शुक्रशोचिषः" दीप्त-तेजस्कस्य "आजुह्वानस्य" आ समन्ताद् हूयमानस्य "सर्पिषः" सरण-शीलस्य घृतस्य(९)

(६)—"सहः"-इति बलनामसु सप्तदशं नैघण्टुकम् (२,९)। "सूनुः"-इति तु अपत्यनामसु द्वादशं नैघण्टुकम् (२,२)।

(७)—"जातवेदाः कस्मात्? जातानि वेद, जातानि वैनं विदुः, जाते जाते विद्यतइति वा, जातवित्तो वा, जातधनो, जातविद्यो वा, जातप्रज्ञानो यत्तज्जातः पशूनविन्दतेति तज्जातवेदसो जातवेदस्त्वमिति ब्राह्मणम् तस्मात् सर्वानृतून् पशवो-ऽग्निमभि सर्पन्तीति च"-इत्यादि नि०७,१९। "यस्तु सूक्तं भजते यस्मै हविर्निरुप्यतेऽयमेव सोऽग्निर्जातवेदा निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते"-इत्यादि च नि७,२०। "जातवेदसम् *** कमन्यमादित्यादेवमवक्ष्यत्"-इत्यादि च नि०१२,१५।

(८)—कृपेति पान्तस्य कृबित्यस्य तृतीयैके आकारान्त-रूपम्, कृप् शब्दोऽपि कृपार्थः। अतएवोक्तं यास्केन—"कृप् कृपतेर्वा कल्पतेर्वा"-इति (६,८)।

(९)—"सृप्रः सर्पणादिदमपीतरत् सृप्रम्, एतस्मादेव सर्पिर्वा तैलं वा"-इति नि०६,१७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

गृत्समदऋषिः।

२ ३१२ २२३ १ २ ३ २ ३ २ ३ २ ३ १ १ ३ १
तवत्यन्नर्यन्नृपोतइन्द्रप्रथमम्पूर्व्यन्दिविप्रवाच्यङ्कृतम्।

३ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ २ ३ २
योदेवस्यशवसाप्रारिणाअसुरिणन्नपः*।

२ ३ १ २ ३ १ २ ३ १ २ ३१२ ३२
भुवो†विश्वमभ्यदेवमोजसाविदेदूर्जं१ं

३ १ २ ३ १ ३२
शतक्रतुर्विदेदिषम्‡ ॥ १० ॥ २३४

॥ इति तृतीय-दशति ॥

विलापनेन दीप्तस्याज्यस्य "विभ्राष्टिं" विशेषेण भ्राजमनु स्वय-मपि तदाज्यं "वष्टि"(१०) कामयते स्वीकरोतीत्यर्थः।

"वसोः"-"वसुम्"-इति साम्न ऋचः पाठौ ॥ ८ ॥ २३३

---

* "असुरिणन्नपः"-इति,
† "भुवद्"-इति,
‡ "विदादिषम्"-इति च
} ऋग्वेदीय-पाठाः।

---

२३४ ऋग्वेदस्य २,६,२८,४।

(१०)—"वश्मि"-इति कान्ति-कर्मसु प्रथमं नैघण्टुकम् (२,६) तस्येदं रूपमन्यद् वष्टीति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



1 तार२३४वत्यन्नाऽ५रियं नृताउ । अप इन्द्रा२ । प्रथमं पूर् । वियन्दिवि । प्रवा । चियं कृतम् । यो देवास्या२ । श्रवसाप्रा२ । रिणा असु । रिणन्नपः । भुवो विश्वा२म् । अभ्यदा२यि । वमोजसा विदेदूर्जम् । शतक्रा२३४तूः । विदाऽ५यिदिषाउ । वा ॥ ४२ ॥* २३४

"नृतः" सर्वेषां नर्तयितः प्रवर्त्तयितः हे "इन्द्र !" "नर्यं" नराणां हितकरम् । "प्रथमं" प्रतमं ("प्रथमं प्रतमम्"-इति(१) यास्कः) "पूर्व्यं" पूर्व्व-काल-भवं त्वया कृतं "तव" "त्यद्" तदपः-कर्म "दिवि" स्वर्गलोके "प्रवाच्यं" देवैः प्रकर्षेण वक्तव्यं श्लाघनीय-मित्यर्थः । किन्तत् ? "देवस्य" विजिगीषोः "असुरस्य" "असु" असुं प्राणं "रिणन्" हिंसन् त्वम् "अपः" उदकानि तेन निरु-द्धानि "अरिणः" प्रेरय । —इति यदेतत् कर्म्म तत्प्रवाच्यमिति-

---

I एष साम ।

(१)—"प्रथम इति मुख्य-नाम, प्रतमो भवति"-इति च यास्कः (२,२२) ।

---

* ॥ इति ग्रामे गेयगाने द्वादशार्द्धः प्रपाठकः ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



समन्वयः। परोक्ष-निर्देश-विशिष्टः "सः" इन्द्रः "विश्वं" व्याप्तम् "अदेवं" तमोरूपम् "असुरम्" "ओजसा" बलेन "अभि भुवत्(२)" अभिभवतु। किञ्च "शतक्रतुः" इन्द्रः "ऊर्जम्" बलं "विदेत्" लम्भयेत्। "इषं" हविर्लक्षणमन्नं च विदेत् [विदॢ लाभे (तु० उ०)]॥

"यो"—"यद्"-इति, "विदेद्"—"विदा"-इति च साम्न ऋचः पाठौ॥ १०॥ २३४+११८=३५२

वेदार्थस्य प्रकाशेन तमो हार्द्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्या-तीर्थ-महेश्वरः॥ ४॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीरबुक्क-भूपाल-साम्राज्यधुरन्धरेण सायणाचार्येण विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
द्वादशः खण्डः॥ १२॥

॥ समाप्तश्चचतुर्थोऽध्यायः॥ ४॥

॥ ऐन्द्रम् पर्व ऐन्द्रकाण्डं वा॥

॥ इति द्वितीयं पर्व॥

(२)—भुवदिति लेटो रूपम् (षि० कौ० वै० ३)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

